सर्वेषामधिको राजा धर्म्ये यत्नेन निश्चितम् ।
उत्तमाधममध्यानां विवादानां विचारणात् ॥
उपर्युपरि बुद्धीनां चरन्तीश्वरबुद्धयः ॥ इति ।

करणं सभा । कुलं ज्ञातिसम्बन्धिबन्धुसमूहाः । श्रेणयः नानाजातीया एककर्मोपजीविनो वणिक्कृषीवलादयः । गणाः कुलानां समूहाः । साहसन्यायवर्ज्यानि साहसविषयन्यायेतराणि ।

बृहस्पतिः

कीनाशाः कारुकाः शिल्पिकुशीदिश्रेणिनर्त्तकाः ।
लिंगिनः पुल्कसा कुर्युः स्वेन धर्मेण निर्णयम् ॥

कीनाशाः कृषीवलाः, कारुकाः कनककटकमुकुटादिघटकाः, शिल्पिनश्चित्रकरादयः ।

पुनः कात्यायनः

कुलानि श्रेणयश्चैव गणास्त्वधिकृतो नृपः ।
प्रतिष्ठा व्यवहाराणां गुर्वेभ्यश्चोत्तरोत्तरम् ॥
लिङ्गिनः श्रेणिपूगाश्च वणिग्व्रातास्तथापरे ।
स्वधर्मेणैव कार्याणां कुर्युस्ते निर्णयं सदा ॥
वणिक्शिल्पिप्रयोगेषु कृषिरंगोपजीविषु ।
अशक्यो निर्णयो ह्यत्र तज्ज्ञैरेव तु कारयेद् ॥ इति ।

पूगाः भिन्नजातीनां भिन्नवृत्तीनामेकस्थाननिवासिनां समूहाः । वणिग्व्राताः वणिक्समूहाः ।

बृहस्पतिकात्यायनौ

तपस्विनां तु कार्याणि त्रैविद्यैरेव कारयेत् ।
मायायोगविदां चैव न स्वयं लोककारणात् ॥

मनुः

आश्रमेषु द्विजातीनां कार्ये विवदतां मिथः ।
न विब्रूयान्नृपो धर्मं चिकीर्षन् हितमात्मनः ॥
यथार्हमेतानभ्यर्च्य ब्राह्मणैः सह पार्थिवः ।
सांत्वेन प्रशमय्यादौ स्वधर्मं प्रतिपादयेत् ॥

आश्रमेषु ब्रह्मचर्यादिषु । मिथो विवदतां नृपः विशिष्य न ब्रूयात् । जयपराजयलक्षणं तत्त्वनिर्णयं न कुर्यादित्यर्थः ।

तर्हि कथं कुर्यादित्यपेक्षायामाह । यथार्हमित्यादि । सांत्वेन प्रियवाक्येन प्रशमय्य कोपादिकं शमयित्वा । कात्यायनः

सम्यग्विज्ञानसम्पन्नो नोपदेशं प्रकल्पयेत् ।
उत्कृष्टजातिशीलानां गुर्वाचार्यतपस्विनाम् ॥

नियुक्तो व्यवहारेण लोकवाक्यानुसारतः ।
पार्थिवश्च गणाश्चैव धर्मज्ञैः शमयेद्गुरुः ॥

गणकलेखकयोः स्वरूपमाह **बृहस्पतिः**

शब्दाभिधानतत्त्वज्ञौ गणनाकुशलौ शुची ।
नानालिपिज्ञौ कर्त्तव्यौ राज्ञा गणकलेखकौ ॥ इति ।

शब्दाभिधानतत्त्वज्ञौ व्याकरणकोशतत्त्वज्ञौ ।

**व्यासोऽपि**

त्रिस्कन्धज्योतिषाभिज्ञं स्फुटप्रत्ययकारकम् ।
श्रुताध्ययनसम्पन्नं गणकं कारयेन्नृपः ॥
स्फुटलेखं नियुंजीत शब्दलक्षणिकं शुचिम् ।
स्फुटाक्षरं जितक्रोधमलुब्धं सत्यवादिनम् ॥ इति ।

त्रिस्कन्धज्योतिषाभिज्ञं होरागणितसंहिताख्यस्कन्धत्रयसहितज्योतिःशास्त्राभिज्ञमित्यर्थः ।

श्रुताध्ययनसम्पन्नमिति विशेषणं गणकस्य द्विजत्वख्यापनार्थम् । शूद्रादेस्तदसम्भवात् । लेखकोऽपि तत्साहचर्याद्द्विज एव ।

सपुरुषस्वरूपमाह **बृहस्पतिः**

आकारणे रक्षणे च साक्ष्यर्थिप्रतिवादिनाम् ।
सभ्याधीनः सत्यवादी कर्त्तव्यस्तु सपूरुषः ॥ इति ।

स पुनः शूद्र एव ।

तथा च **व्यासः**

साध्यपालस्तु कर्त्तव्यो राज्ञा साध्यस्य साधकः ।
क्रमायातो दृढः शूद्रः सभ्यानां च मते स्थितः ॥

साध्यस्य अर्थिप्रत्यर्थिनोः साक्ष्यादीनां वा करणादिकार्यस्येत्यर्थः ।

**व्यासः**

परस्परविसंवादं संदेहात्कुर्वतो नरान् ।
यस्तेषां संशयच्छेत्ता स एषां प्राणदः स्मृतः ॥

नरान्विवादतो निवार्येति शेषः ।

तत्फलमाह **वसिष्ठः**

यत्पुण्यमुद्धृते विप्रे म्रियमाणे जलाशयात् ।
तत्पुण्यं समयारूढे व्यवहारात् समुद्धृते ॥

म्रियमाण इति दार्ष्टान्तिकेऽप्यनुषज्यते ।

सभ्यानामन्यथाकथने दण्डमाह कात्यायनः

कार्यस्य निर्णयं सम्यक् ज्ञात्वा सभ्यस्ततो वदेत् ।
अन्यथा नैव वक्तव्यं वक्ता द्विगुणदण्डभाक् ॥
स्नेहादज्ञानतो वापि मोहाद्वा लोभतोऽपि वा ।
यत्र सभ्योऽन्यथावादी दण्ड्यः सभ्यः स्मृतो हि सः ॥
सभादोषात्तु यन्नष्टं देयं सभ्येन तत्तदा ।
कार्यं तु कार्यिणामेवं निश्चितं न विचालयेत् ॥ इति ।

वक्ता अन्यथावक्ता द्विगुणं दण्डभागित्यत्र दण्डद्वैगुण्यम् । पराजितवाद्यादिदण्डापेक्षया न विवादास्पदीभूतधनापेक्षया । तथा च सति वाक्पारुष्यादौ दण्डाभावप्रसङ्गात् । सभादोषादित्यादौ सभ्यस्य नष्टदानं निर्णयादूर्ध्वं सभ्यदोषपरिज्ञाने द्रष्टव्यम् ।

याज्ञवल्क्योऽपि

रागाल्लोभाद्भयाद्वापि स्मृत्यपेतादिकारिणः ।
सभ्याः पृथक् पृथग्दण्ड्या विवादाद्द्विगुणं दमम् ॥ इति ।

स्मृत्यपेतं स्मृतिविरुद्धम् । आदिपदेनाचारादिपरिग्रहः ।

पृथक् पृथक् एकैकशः ।

बृहस्पतिः

अन्यायवादिनः सभ्यास्तथैवोत्कोचजीविनः ।
विश्रब्धवञ्चकाश्चैव निर्वास्याः सर्व एव हि ॥ इति ।

विश्रब्धवञ्चनाः सभ्यभिर्णयानुकूलवन्धनातिरिक्तवञ्चनकर्त्तारः ।

विष्णुः

कूटसाक्षिणां सर्वस्वापहारः कार्यः ।
उत्कोचजीविनां सभ्यानां च ।

कात्यायनः

अनिर्णीते तु यद्यर्थे संभाषेत रहोऽर्थिना ।
प्राड्विवाकोऽपि दण्ड्यः स्यात्सभ्याश्चैव न संशयः ॥
प्राड्विवाकमदस्थानामुपजीव्यमतानि तु ।
तद्युक्तियोगाद्योऽर्थेषु निर्णयेन स दण्डभाग् ॥ इति ।

यः स्वयमनभिज्ञः प्राड्विवाकाद्युक्त्युक्त्या यादृग् इतो निर्णयति सोऽपि दण्ड्य इत्यर्थः ।

राजा सर्वस्येष्टे ब्राह्मणवर्जमिति गौतमवचनात् । ब्राह्मणाश्च दण्ड्या इति वाच्यम् । तस्य प्रशंसार्थत्वात् । यदपि षड्भिः परिहार्यो राज्ञा अवध्यश्चावंध्यश्चादण्ड्यश्चाबहिःकार्यश्चा-

परिवाद्यश्चापरिहार्यश्चेति । तदपि स एष एव बहुश्रुतो भवति लोकवेदवेदाङ्गविद्वाकोवाक्येतिहासपुराणादौ कुशलस्तदपेक्षस्तद्वृत्तिरष्टाचत्वारिंशत्संस्कारैः संस्कृतः त्रिषु कर्मस्वभिरतः षट्सु वा सामयाचारिकेष्वभिविनीत इति प्रतिपादितबहुश्रुतविषयं न ब्राह्मणमात्रविषयमिति ॥

## अथ व्यवहारनिर्णयप्रकारः

तत्र **नारदः**

आगमः प्रथमं कार्यो व्यवहारपदं ततः ।
चिकित्सानिर्णयश्चेति दर्शनं स्याच्चतुर्विधम् ॥

आगमोऽर्थिवचनश्रवणं । व्यवहारपदं ऋणादानाद्यन्यतममिदमिति परामर्शः । चिकित्सा विचारणा ।

**याज्ञवल्क्यः**

स्मृत्याचारव्यपेतेन मार्गेणाधर्षितः परैः ।
आवेदयति चेद्राज्ञे व्यवहारपदं हि तत् ॥

स्मृत्याचारव्यपेतेन धर्मशास्त्रशिष्टाचारविरुद्धेन । परैरिति बहुवचनमुपलक्षणम् । तेन एकेन द्वाभ्यां वा आधर्षणेऽपि व्यवहारो भवत्येव ।

यत्तु

एकस्य बहुभिः सार्द्धं स्त्रीभिः प्रेष्यकरैस्तथा ।
अनादेयो भवेद्वादो धर्मविद्भिरुदाहृतः ॥ इति ।

**नारदबृहस्पतिवचनं** । तत् एकस्य बहुभिः सह युगपदनार्यविषयविवादानुपादनपरं । स्त्रीभिः गोपशौण्डिकादिस्त्रीव्यतिरिक्ताभिः पत्यादिपरतन्त्राभिः । एवं प्रेष्यकरैः स्वामिपरतन्त्रैः स्वाम्यधीनैः स्वार्थव्यवहारोऽपि तेनानन्तुह्यातैर्नादेयः ।

राज्ञ इति प्राड्विवाकस्याप्युपलक्षणम् ।

आवेदयति चेद्विज्ञापयति यदि तर्हि तत् आवेद्यमानं व्यवहारपदं व्यवहारविषयः । चेच्छब्दो यादिरुच्यैवावेदनं कार्यं न तु राजायाह्वयेति ज्ञापनार्थम् ।

तथा च **मनुः**

नोत्पादयेत्स्वयं कार्यं राजा नाप्यस्य पूरुषः ।
न च प्रापितमन्येन ग्रसेतार्थं कथंचन ॥

न ग्रसेत नोपेक्षेत । न चाप्रापितमिति पाठे तु अन्येनान्यतरेण वादिना प्रतिवादिना वाऽप्रापितं अनुपदर्शितप्रमाणं न ग्रसेत न ग्रासयेत् ।

**पितामहः**

न रागेण न लोभेन न क्रोधेन ग्रसेन्नृपः ।
परैरप्रापितानर्थान्न चापि स्वमनीषया ॥

बृहस्पतिरपि

आगमानां विवदतामसकृद्वादिनां नृपः ।
वादान्पश्येन्नात्मकृतान्न चाध्यक्षनिवेदितान् ॥

आगमानां विवदतां भाषोत्तरविवादिनां । क्वचिदागतानामिति पाठः । न चाध्यक्षनिवेदितान् नाध्यक्षमात्रनिवेदितान् अपि तु वादिसमुत्थापितान् ।

कात्यायनोऽपि

न राजा तु वशित्वेन धनलोभेन वा पुनः ।
स्वयं कार्याणि कुर्वीत नराणामविवादिनाम् ॥ इति ।

क्वचिदावेदनमन्तरेणापि राज्ञा द्रष्टव्यानि कार्याणि ।

यथाह पितामहः

छलानि चापराधांश्च पदानि नृपतेस्तथा ।
स्वयमेतानि गृह्णीयान्नृपस्त्वावेदकैर्विना ॥ इति ।

तत्र छलानि स एवाह

पथिभंगी नराक्षेपी प्राकारोपरिलंघकः ।
निपानस्य विनाशी च तथा चायतनस्य च ॥
परिखापूरकश्चैव राजच्छिद्रप्रकाशकः ।
अन्तःपुरं वासगृहं भाण्डागारं महानसम् ॥
प्रविशत्यनियुक्तो यो भोजनं च निरीक्षते ।
विण्मूत्रश्लेष्मवातानां क्षेप्तुकामो नृपाग्रतः ॥
पर्यङ्कासनबंधी च आयस्थाननिरोधकः ।
राज्ञोऽतिरिक्तवेषं च विधृतः प्रविशेत्तु यः ॥
यश्चापद्वारेण विशेद्वेलायां तथैव च ।
शय्यासने पादुकयोः शयनासनरोहणे ॥
राजन्यासन्नशयने यस्तिष्ठति समीपतः ।
राज्ञो विद्विष्टसेवी चाप्यदत्तविहितासनः ॥
वस्त्राभरणयोश्चैव सुवर्णपरिधायकः ।
स्वयं ग्राहेण ताम्बूलं गृहीत्वा भक्षयेत्तु यः ॥
अनियुक्तप्रभाषी च नृपाक्रोशक एव च ।
एकवासास्तथाभ्यक्तो मुक्तकेशोऽवगुण्ठितः ॥

विचित्रिताङ्गः स्रग्वी च परिधानविधूनकः ।
शिरःप्रच्छादनश्चैव छिद्रान्वेषणतत्परः ॥
आसङ्गी मुक्तकेशश्च यश्च कर्णाक्षिदर्शकः ।
दन्तोल्लेखनकश्चैव कर्णनासाविशोधकः ॥
छलान्येतानि पञ्चाशत् भवन्ति नृपसन्निधौ ॥ इति ।

राज्ञः शय्यासनपादुकासु क्रमेण शयनासनरोहणस्वरूपं छलत्रयं । वस्त्राभरणयोरित्यादौ अदत्तयोरादायक इति शेषः । पुनर्मुक्तकेशपदं मुण्डितसंग्रहार्थं शिष्टं स्पष्टं । अपराधास्तु **नारदेन** दर्शिताः ।

आज्ञालंघनकर्त्तारस्त्रिविधो वर्णसङ्करः ।
परस्त्रीगमनं चौर्यं गर्भश्चैव पतिं विना ॥
वाक्पारुष्यमवाच्यं यद्दण्डपारुष्यमेव च ।
गर्भस्य पातनं चैवेत्यपराधा दशैव तु ॥

एतांश्चावेदकं विनापि स्वयं राजाऽन्वेषयेत् । तथा च **संवर्त्तः**

आसेधं पथिभङ्गं च यश्च गर्भः पतिं विना ।
स्वयमन्वेषयेद्राजा विना चैव विवादिना ॥
पण्यापहारकं पापं विप्रं च पतितं तथा ।
परार्थवादसंयुक्तं स्वयं राजा विचारयेत् ॥
पञ्चागकरशुल्कार्थे मार्गभेदकमेव च ।
स्वराष्ट्रे चौर्यभेदं च परदाराभिमर्षणम् ॥
गोब्राह्मणनिहन्तारं शस्यानां चैव घातकम् ।
दशैतानपराधांश्च स्वयं राजा विचारयेत् ॥

एतानासेधादीन् दशापराधांश्च स्वयं राजा विचारयेदित्यर्थः । अत्र पथिभङ्गग्रहणं छलमात्रोपलक्षणार्थम् । एवमपराधांतर्गतानामपि केषांचिदुपादानमपराधान्तर्ग्रहणार्थम् ।

पदान्याह **पितामहः**

उत्कृती सस्यघाती वा योषिदंशस्तथैव च ।
विध्वंसकः कुमार्याश्च निधानस्योपभोगकः ॥
सेतुरुन्धकभेत्ता च क्षेत्रसंचारकस्तथा ।
आरामच्छेदकश्चैव गरदश्च तथैव च ॥
राज्ञो द्रोहप्रकर्त्ता च तन्मुद्राभेदकस्तथा ।
तन्मन्त्रस्य प्रभेत्ता च बद्धस्य विमोचकः ॥

भागदण्डौ च गृह्णाति दीनमस्तकमेव च ।
पटहाघोषणाच्छादि द्रव्यमस्वामिकं च यत् ॥
राज्ञावलीढं द्रव्यं यद्यच्चैवांगविनाशनम् ।
द्वात्रिंशतिपदान्याहुर्नृपज्ञेयानि पण्डिताः ॥ इति ।

एवं छलापराधपदानि राज्ञा साक्षात् स्तोभकसूचकपुरुषादिना वा विदित्वा निवेदनमन्तरेणापि द्रष्टव्यानीति ।

स्तोभकसूचकयोर्लक्षणमाह कात्यायनः

शास्त्रेण निन्दिते त्वर्थमुख्योऽर्थे प्रनिवेदितः ।
आवेदयति यः पूर्वं स्तोभकः स उदाहृतः ॥
नृपेण विनियुक्तो यः परदोषमवेक्षितम् ।
नृपस्य सूचयेद्रागात्सूचकः स उदाहृतः ॥ इति ।

अर्थमुख्योऽर्थप्रधान इत्यर्थः ।

उशनाः

कार्यमुद्दिश्य पीडां वा यः कश्चिद्राज्ञि वेदयेत् ।
पदं तदष्टादशधा विवादानां प्रकीर्त्तितम् ॥

वादिनः पुनरधृष्टत्वे प्राड्विवाकादिभिः पृष्टेन तेन निवेदितस्यापि व्यवहारविषयत्वं ।

तथाच बृहस्पतिः

पीडितः स्वयमायातः शालीनोऽर्थी यदा भवेत् ।
प्राड्विवाकस्तु तं पृच्छेत् पुरुषो वा शनैः शनैः ॥

शालीनोऽधृष्टः 'शालीनकौपीने अधृष्टाकार्ययो'रिति पाणिनिस्मरणात् ।

याज्ञवल्क्यः

छलं निरस्य भूतेन व्यवहारान्नयेन्नृपः ।
भूतमप्यनुपन्यस्तं हीयते व्यवहारतः ॥

छलं प्रमादाभिहितं एतच्च भाषाविचारसमयप्राप्तछलाभिप्रायं निरस्य परित्यज्य भूतेन वस्तुतत्त्वानुसरणेन । यस्माद्भूतमपि वस्तुस्वरूपमपि अनुपन्यस्तं अनुक्तं हीयते हानिं प्राप्नोति । व्यवहारतः व्यवहारेण साक्ष्यादि अत्र तात्पर्यम् । लिखितादिप्रमाणस्यार्थानुसारित्वनियमाभावात् । यावदनुपन्यस्तं परमार्थतो विद्यमानमपि व्यवहाराद्धीयते नत्वर्थात् । तस्माद्राज्ञा भूतानुसरणं कर्त्तव्यं यथा वादिप्रतिवादिनौ सत्यमेव वदतस्तथा सामादिभिरुपायैर्यतितव्यं । यदा पुनर्भूतेन न शक्यो निर्णयस्तदा साक्ष्यादिभिरपि कार्यं इत्यर्थः । इदं च छलं निरस्य भूतेन व्यवहारदर्शनं अर्थविवादविषयं । मन्युकृते तु व्यवहारे प्रमादाभिधाने प्रकृतादपि व्यवहाराद्धीयते ।

तथा च कात्यायनः　　ग

सर्वेष्वर्थविवादेषु वाक्छलेनावसीदति ।
परस्त्रीभूम्यृणादाने शास्योऽप्यर्थान्न हीयते ॥ इति ।

तेन अर्थविवादेषु वाक्छले प्रमादाभिधानेऽपि नावसीदति न पराजयते । प्रकृतार्थान्न हीयत इत्यर्थः । अत्रोदाहरणमाह परस्त्रीत्यादिना । परस्त्रीभूम्यृणादाने प्रमादाभिधानेन दण्ड्योऽपि अर्थात्प्रकृतान्न हीयते । अत्रार्थविवादेष्विति अर्थविवादग्रहणादन्युक्तार्थविवादेषु प्रमादाभिधाने प्रकृतादप्यर्थाद्धीयत इति प्रतीयते । यथाऽहमनेन कस्मादहं गृहीत इत्यावेदनसमये यस्य धृत्वा-ऽऽकृष्ट इति वदन्न केवलं दण्डभाक् पराजीयते चापीति ।

नत्वदृष्टं छलं राजा मर्षयेद् धर्मसाधनः ।
भूतमेव प्रपद्येत भूतमूला यतः श्रियः ॥
अभूतमप्यभिहितं प्राप्तकाले परीक्षयेत् ।
प्रमादान्नोच्यते यत्तु तद्भूतमपि हीयते ॥

## अथ सभ्यादिकृत्यम्

तत्र बृहस्पतिः

अज्ञानतिमिरोपेतान्संदेहपटलावृतान् ।
निरामयान्यः कुरुते शास्त्राञ्जनशलाकया ॥
इह कीर्त्तिं राजपूजां लभते स्वर्गतिं च सः ।
तस्मात्संशयमूढानां प्रकर्त्तव्यो विनिर्णयः ॥ इति ।

तथा

लोभद्वेषादिकं त्यक्त्वा यः कुर्यात्कार्यनिर्णयम् ।
शास्त्रोदितेन विधिना तस्य यज्ञफलं भवेत् ॥
सत्यं देवाः समासेन मनुष्यास्त्वनृतं विदुः ।
इहैव तस्य देवत्वं यस्य सत्ये स्थिता मतिः ॥

नारदः

शुद्धेषु व्यवहारेषु शुद्धिं यान्ति सभासदः ।
शुद्धिश्च तेषां धर्माद्धि धर्ममेव वदेत्ततः ॥ इति ।

मनुः

राजा भवत्यनेनास्तु मुच्यन्ते च सभासदः ।
एनो गच्छति कर्त्तारं निंदार्हो यत्र निंद्यते ॥

नारदः

युक्तरूपं ब्रुवन्सभ्यो नाप्नुयाद्द्वेषकिल्बिषम् ।
ब्रुवाणस्त्वन्यथा सभ्यस्तद्देवोभयमाप्नुयात् ॥

बृहस्पतिः

असत्यनिर्णये साक्षिसभ्याध्यक्षमहीभुजाम् ।
अप्रत्ययोऽयशश्च स्यान्नरके पतनं तथा ॥

कात्यायनः

सभ्यान्विहाय सद्भावं गूढं कार्यस्य यत्र वै ।
निर्णयं त्वन्यथा कुर्युर्न यथा विहितं तु तत् ॥
यत्रानेन विधानेन क्रियते कार्यनिर्णयः ।
तत्र सत्यं हतं सभ्यैरनृतेन दुरात्मभिः ॥
न्यायशास्त्रमतिक्रम्य सभ्यैर्यत्र विनिश्चितम् ।
तत्र धर्मो ह्यधर्मेण हतो हन्ति न संशयः ॥ इति ।

हन्ति सभ्यानिति शेषः ।

नारदः

तस्मात्सभ्यः सभां प्राप्य रागद्वेषविवर्जितः ।
वचस्तथाविधं ब्रूयाद्यथा न नरके पतेत् ॥
वृषो हि भगवान् धर्मस्तस्य यः कुरुते त्वलम् ।
वृषलं तं विदुर्देवास्तस्माद्धर्मं न लोपयेत् ॥
एक एव सुहृद्धर्मो निधनेऽप्यनुयाति यः ।
शरीरेण समं नाशं सर्वमन्यत्तु गच्छति ॥
धर्म एव हतो हन्ति धर्मो रक्षति रक्षितः ।
तस्माद्धर्मो न हन्तव्यो मा नो धर्मो हतो वधीत् ॥

नोऽस्मान्सभ्यान् हतो धर्मो मा वधीत् इति न हन्तव्य इत्यर्थः ।

मनुनारदहारीता बोधायनश्च प्रथमे

पादो धर्मस्य कर्तारं पादः साक्षिणमृच्छति ।
पादः सभासदः सर्वान्पादो राजानमृच्छति ॥
धर्मो विद्धस्त्वधर्मेण सभां यत्रोपतिष्ठते ।
शल्यं चास्य निकृन्तन्ति विद्धास्तत्र सभासदः ॥

यत्र धर्मो ह्यधर्मेण सत्यं यत्रानृतेन तु।
हन्यते प्रेक्षमाणानां हतास्तत्र सभासदः॥ इति।

**नारदः**

यत्र सभ्यो जनः सर्वः साध्वेतदिति मन्यते।
स निःशल्यो विवादः स्यात् सशल्यः स्यादतोऽन्यथा॥ इति।

**मनुः**

यथा नयत्यसृक्पातैर्मृगस्य मृगयुः पदम्।
नयेत्तथानुमानेन धर्मस्य नृपतिः पदम्॥ इति।

**नारदः**

किन्तु राज्ञां विशेषेण स्वधर्ममभिरक्षताम्।
मनुष्यचित्तवैचित्र्यात्परीक्ष्या साध्वसाधुता॥
असत्याः सत्यसंकाशाः सत्याश्चासत्यसन्निभाः।
दृश्यन्ते विविधाचारास्तस्माद्युक्तं परीक्षणम्॥
तलवद्दृश्यते व्योम खद्योतो हव्यवाडिव।
न तलं विद्यते व्योम्नि न खद्योतो हुताशनः॥
तस्मात्प्रत्यक्षदृष्टोऽपि युक्तमर्थः परीक्षितुम्।
परीक्ष्य ज्ञापयन्नर्थान्न धर्मात्परिहीयते॥ इति।

तलं भूतलम्॥

**नारदः**

कश्चित्कृत्वाऽऽत्मना चिह्नं द्वेषात्परमुपद्रवेत्।
युक्तिहेत्वर्थसम्बन्धैस्तत्र युक्तं परीक्षणम्॥

चिह्नं व्रणादिकं। युक्तिरर्थापत्तिः। हेतुरनुमानं। अर्थः प्रयोजनं। सम्बन्धः सन्निधिः पूर्वकलहो वा। परीक्षणं चात्र भूतेन व्यवहारनयनार्थम्।

**मनुरपि**

बाह्यैर्विभावयेल्लिङ्गैर्भावमन्तर्गतं नृणाम्।
स्वरवर्णेङ्गिताकारैश्चक्षुषा चेष्टितेन च॥

**याज्ञवल्क्योऽपि**

असाक्षिकहते चिह्नैर्युक्तिभिश्चागमेन च।
द्रष्टव्यो व्यवहारस्तु कूटचिह्नकृताद्भयात्॥

असाक्षिकहतविषयेन क्षतादिचिह्नदर्शनमात्रेण निश्चिनुयात्। किन्तु युक्त्यादिनापि परीक्षणीयमित्यर्थः।

## अथ स्मृत्यादिबलाबलम्

तत्र याज्ञवल्क्यः

स्मृत्योर्विरोधे न्यायस्तु बलवान्व्यवहारतः ।
अर्थशास्त्रात्तु बलवद्धर्मशास्त्रमिति स्थितिः ॥ इति ।

स्मृत्योः धर्मशास्त्रयोः परस्परविरोधे न्यायः उत्सर्गापवादादिरूपः बलवान् समर्थः उत्सर्गापवादादिन्यायानुसारेण विरोधपरिहाराय विषयव्यवस्था कार्येत्यर्थः । स च न्यायः कुतोऽवगन्तव्य इत्याह व्यवहारत इति व्यवहाराद्वृद्धव्यवहारादन्वयव्यतिरेकरूपात् । यथा

निह्नुते लिखितं नैकमेकदेशविभावितः ।
दाप्यः सर्वं नृपेणार्थं न ग्राह्यस्त्वनिवेदितः ॥ इति ।
अनेकार्थाभियोगेऽपि यावत्संसाधयेद्धनी ।
साक्षिभिस्तावदेवासौ लभते साधितं धनम् ॥

इति च याज्ञवल्क्यकात्यायनस्मृत्योः । यथा वा

अनागमं तु यद्भुक्तं पित्रा पूर्वतरैस्त्रिभिः ।
न तच्छक्यमपाहर्तुं क्रमात्त्रिपुरुषागतम् ॥
अनागमं तु यो भुङ्क्ते बहून्यब्दशतान्यपि ।
चौरदण्डेन तं पापं दण्डयेत्पृथिवीपतिः ॥ इति ।

एतदर्थस्तूपरिष्टात् स्फुटीभविष्यति । एवं सर्वत्र प्रसक्तापवादमाह—अर्थशास्त्रादित्यादिना । अर्थशास्त्रमत्र धर्मशास्त्रान्तर्गतमेव राजनीत्यादि नौशनसादि तस्य धर्मशास्त्रानुसारेणेत्यनेन पूर्वमेव निरस्तत्वात् । तेन धर्मशास्त्रार्थशास्त्रयोः धर्मशास्त्रकर्तृप्रणीततया धर्मशास्त्रान्तर्गतत्वेन स्वरूपतो विशेषाभावेऽपि प्रतिपाद्यस्य धर्मस्यार्थापेक्षया प्राधान्यात्तत्प्रतिपादकं धर्मशास्त्रं अर्थशास्त्रापेक्षया बलवदित्युच्यते । यथा

व्यवहारान्नृपः पश्येद्विद्वद्भिर्ब्राह्मणैः सह ।
धर्मशास्त्रानुसारेण क्रोधलोभविवर्जितः ॥　इत्येतद्धर्मशास्त्रम् ।
हिरण्यभूमिलाभेभ्यो मित्रलब्धिर्वरा यतः ।
अतो यतेत तत्प्राप्तौ रक्षेत्सत्यं समाहितः ॥　इत्येतदर्थशास्त्रम् ।

एतयोः क्वचिद्विषये विरोधो भवति । यथा क्वचिद्व्यवहारे वादिप्रतिवादिनोर्मध्ये एकस्य जयावधारणे धर्मशास्त्रानुसरणं भवति न मित्रलब्धिः । अपरस्य पुनर्जयावधारणे मित्रलब्धिः न धर्मशास्त्रानुसरणं । एवंविधे विषयेऽर्थशास्त्राद्धर्मशास्त्रं बलवदिति । अत एव द्वादशाब्दानुवृत्तौ एवं 'धर्मार्थसन्निपाते अर्थग्राहिण एतदेवे'ति प्रायश्चित्तमुक्तमापस्तम्बेन ।

बृहस्पतिरपि

धार्यं मन्वादिकं शास्त्रं नार्थशास्त्रं कथंचन ।
द्वयोर्विरोधे कर्त्तव्यं धर्मशास्त्रोदितं वचः ॥ इति ।

नारदः

यत्र विप्रतिपत्तिः स्याद्धर्मशास्त्रार्थशास्त्रयोः ।
अर्थशास्त्रोक्तमुत्सृज्य धर्मशास्त्रोक्तमाचरेत् ॥
धर्मशास्त्रविरोधे तु युक्तियुक्तो विधिः स्मृतः ।
व्यवहारो हि बलवान् धर्मस्तेनावहीयते ॥
यात्यचौरोऽपि चौरत्वं चौरश्चायात्यचौरताम् ।
अचौरश्चौरतां प्राप्तो मांडव्यो व्यवहारतः ॥
सूक्ष्मो हि भगवान्धर्मः परोक्षो दुर्विचारणः ।
अतः प्रत्यक्षमार्गेण व्यवहारगतिं नयेद् ॥ इति ।

युक्तियुक्तः प्रमाणोपपन्नः । व्यवहारोऽत्र प्रमाणाप्रमाणसाधारणी लोकप्रवृत्तिः । तेन युक्तिं विना व्यवहारमात्रेण धर्मो हीयते । अतः प्रमाणमनुसरणीयमित्यर्थः । प्रत्यक्षमार्गेणेत्यत्र च प्रत्यक्षशब्दः प्रमाणमात्रपरः ।

बृहस्पतिः

केवलं शास्त्रमाश्रित्य न कर्त्तव्यो विनिर्णयः ।
युक्तिहीनविचारे तु धर्महानिः प्रजायते ॥
चौरोऽचौरः साध्वसाधुर्जायते व्यवहारतः ।
युक्तिं विना विचारेण मांडव्यश्चौरतां गतः ॥ इति ।

अथ शास्त्रपदं धर्मशास्त्रपरं । धर्मशास्त्राणि च पितामहेन दर्शितानि ।

वेदाः साङ्गास्तु चत्वारो मीमांसा स्मृतयस्तथा ।
एतानि धर्मशास्त्राणि पुराणं न्यायदर्शनम् ॥ इति ।

दृष्टार्थविषया स्मृतिः अर्थप्रधानत्वादर्थशास्त्रतयाऽभिप्रेता । एतानि सा च स्मृतिभेदकथनपुरस्सरं विविच्याऽभिहिता भविष्यपुराणे ।

दृष्टार्था तु स्मृतिः काचिद् अदृष्टार्था तथाऽपरा ।
दृष्टाऽदृष्टार्थरूपाऽन्या न्यायमूला तथाऽपरा ॥
अनुवादस्मृतिस्त्वन्या शिष्टैर्दृष्टा तु पञ्चमी ।
सर्वा एता वेदमूला दृष्टार्थां परिहृत्य तु ॥

तथा

पाड्गुण्यं च प्रयोगश्च प्रयोगः कार्यगौरवात् ।
सामादीनामुपायानां योगो व्याससमासतः ॥
अध्यक्षाणां च निक्षेपः कंटकानां निरूपणम् ।
दृष्टार्थेयं स्मृतिः प्रोक्ता ऋपिभिर्गरुडाग्रज ॥ इति ।
संध्योपास्तिः सदा कार्या शुनो मांसं न भक्षयेत् ।
अदृष्टार्था स्मृतिः प्रोक्ता ऋपिभिर्ज्ञानकोविदैः ॥
पालाशं धारयेद्दंडमुभयार्थां विदुर्बुधाः ।
विरोधे तु विकल्पः स्याज्जपहोमश्रुतौ यथा ॥
श्रुतौ दृष्टं यथा कार्यं स्मृतौ च तादृशं यदि ।
अनूक्तवादिनी सा तु पारिव्राज्यं यथा गृहम् ॥ इति ।

दृष्टार्थायाः स्मृतेरुदाहरणमात्रमिदं । एवं च सन्धिविग्रहादिदृष्टार्थविपया स्मृतिरर्थशास्त्रमित्यर्थः । षाड्गुण्यं षड्गुणाः । ते च सन्धिविग्रहादयः । प्रयोगः कार्यगौरवात् । षाड्गुण्यस्यैव व्याससमासाभ्यां कर्त्तव्य इत्यर्थः । सामादीनामपि कार्यगौरवाद्व्याससमासाभ्यां योगः प्रयोगः कर्त्तव्य इत्यर्थः । जपहोमश्रुताविति । सूर्योदयावधि सावित्रीजपानुदिनहोमविपया यथा । अनूक्तवादिनी अनूदितवादिनी । यथा पुत्रैपणायाश्च वित्तैपणायाश्च व्युत्थायाथ भिक्षाचर्यं चरन्तीत्यनयाऽनूदितं । 'ब्राह्मणः प्रव्रजेद् गृहादि'ति मनुस्मृतिर्वदति विधत्त इत्यर्थः ।

सति वाक्ये तदनुसारेणैव निर्णयः कर्त्तव्यः । असति पुनर्देशाचारेण न स्वेच्छया ।

तथा च कात्यायनः

अस्वर्ग्या लोकनाशाय परानीकभयावहा ।
आयुर्बीजहरी राज्ञां सति वाक्ये स्वयंकृतिः ॥
तस्माच्छास्त्रानुसारेण राजा कार्याणि साधयेत् ।
वाक्याभावे तु सर्वेषां देशदृष्टेन संनयेद् ॥ इति ।

परानीकेत्यादि । परानीकात् परसैन्यतो भयावहा । स्वयंकृतिः वाक्यानादरेण निर्णीतिः ।

मनुः

जातिजानपदान् धर्मान् श्रेणीधर्मांश्च धर्मवित् ।
समीक्ष्य कुलधर्मांश्च स्वधर्मं प्रतिपादयेत् ॥
स्वानि कर्माणि कुर्वाणा दूरे सन्तोऽपि मानवाः ।
प्रिया भवन्ति लोकस्य स्वे स्वे कर्मण्यवस्थिताः ॥
सद्भिराचरितं यत्स्याद्धार्मिकैश्च द्विजातिभिः ।
तद्देशकुलजातीनामविरुद्धं प्रकल्पयेदिति ॥

जातिर्ब्राह्मणत्वादिः । जनपदः अनेकग्रामसमुदायः तद्वासिनो जानपदः तत्संगतान् । कुलं अत्रिकुलं भृगुकुलमित्यादि । तन्नियतान् धर्मान् समीक्ष्य स्वानि कर्माणीत्यनेनैव सिद्धेः पुनः स्वे स्वे कर्मणीत्युपादानं मिथस्त्वे हेतुत्वख्यापनार्थम् । सद्भिर्दोषरहितैः वेदवादिभिः । तत् परन्तु प्रकल्पयेत् । प्रकृष्टं व्यवहारेषु कल्पयेत् । अविरुद्धं शास्त्रेणेति शेषः । देशकुलजातीनामविरुद्धमिति **सर्वज्ञनारायणः** ।

**गौतमः**

'देशजातिकुलधर्माश्चाम्नायैरविरुद्धाः प्रमाणम् । कर्षकवणिक्पशुपालकुसीदिकारवः स्वे स्वे वर्गे । तेभ्यो यथाधिकारमर्थान् प्रत्यवहृत्य धर्मव्यवस्थे'ति । देशधर्मः यथा भूमिकरकर्मकरवेतनादिर्यो यस्मिन् देशे प्रसिद्धः स तत्रैव प्रमाणम् । जातिधर्मः यथा आभीराणां दन्तारक्षणादिः । कुलधर्मः यथा दध्यमन्थानादिः समयविशेषे चूडाकरणादिर्वा । आम्नायैर्वेदादिभिः । कर्षकादयः स्वे स्वे वर्गे इत्यत्र प्रमाणमित्यनुषज्यते । तेषां यादृशी व्यवस्था तां तेभ्यः शास्त्राविरुद्धां प्रत्यवहृत्यावधार्य धर्मव्यवस्था कार्येत्यर्थः ।

कुलदेशधर्मयोर्लक्षणमाह **कात्यायनः**

गोत्रस्थितिस्तु या येषां क्रमादायाति धर्मतः ।
कुलधर्मं तु तं प्राहुः पालयेत्तं तथैव तु ॥
यस्य देशस्य यो धर्मः प्रवृत्तः सार्वकालिकः ।
श्रुतिस्मृत्यविरोधेन देशधर्मः स उच्यते ॥
प्रातिलोम्यप्रसूतानां तथा दुर्गनिवासिनाम् ।
वर्णानां नियतं धर्मं न्यायोपेतं न चालयेत् ॥

**बौधायनः**

'पञ्चधा विप्रतिपत्तिर्दक्षिणतस्तथोत्तरतो यानि दक्षिणतस्तानि व्याख्यास्यामो यथैतदनुपनीतेन सह भोजनं स्त्रिया सह भोजनं पर्युषितभोजनं मातुलपितृष्वसृदुहितृपरिणयनमिति यथोत्तरस्मिन् ऊर्णाविक्रयः सीधुपानमुभयतो दद्भिर्व्यवहार आयुधीयकं समुद्रयानमितीतरदितरस्मिन्कुर्वन्दुष्यतीतरस्मिन् । तदत्रत्यदेशप्रामाण्यमेव स्यादित्यैतदिति **गौतमः** । उभयं त्वनाद्रियेत शिष्टस्मृतिविरोधदर्शनादि'ति । विप्रतिपत्तिर्धर्मशास्त्रविरुद्धा प्रतिपत्तिः । अत्र देशप्रामाण्यमेव स्यादिति पूर्वपक्षः । अन्यत्सर्वं स्पष्टम् ।

अत्र विशेषमाह **बृहस्पतिः**

प्रतिलोमप्रसूतानां तथा दुर्गनिवासिनाम् ।
देशजातिकुलानां च ये धर्माः प्राक्प्रवर्तिताः ॥

तथैव ते पालनीयाः प्रजा प्रक्षुभ्यतेऽन्यथा ।
जनाऽपरक्तिर्भवति बलं कोशश्च नश्यति ॥
उदुह्यते दाक्षिणात्यैर्मातुलस्य सुता द्विजैः ।
मध्यदेशे कर्मकाराः शिल्पिनश्च गवाशिनः ॥
मत्स्यादाश्च नराः पूर्वे व्यभिचाररताः स्त्रियः ।
उत्तरे मद्यपा नार्यः स्पृश्या नृणां रजस्वलाः ॥
खशजाताः प्रगृह्णन्ति भ्रातृभार्यामभर्तृकाम् ।
अनेन कर्मणा नैते प्रायश्चित्तदमार्हकाः ॥
विहिताकरणान्नित्यं प्रतिषिद्धनिषेवणात् ।
भक्ताच्छादौ प्रदायैषां शेषं गृह्णीत पार्थिवः ॥ इति ।

प्रतिलोमप्रसूता हीनवर्णेनोत्कृष्टवर्णासु जाताः । दुर्गनिवासिनः धर्मोपदेशरहितदेश-निवासिनः । पालनीया नोन्मूलनीयाः । नैते प्रायश्चित्तदमार्हकाः दुष्टा अप्येते राज्ञा न प्राय-श्चित्तदमाभ्यां योज्याः प्रजाप्रक्षोभजेनापरागादिप्रसंगभयात् । कल्पतरुकारस्त्वाह नैवै प्रायश्चित्तदमार्हका इति नैतैः प्रायश्चित्तं कार्यं प्रायश्चित्तानपनेयपापत्वात् । नापि दंडनीयाः प्रजाप्रक्षोभप्रसंगादिति । अपरे पुनस्तेषां पापाभावादेव प्रायश्चित्तदंडाभाव एवेत्याचक्षते । विहिताकरणान्नित्यमित्यादिविहितस्य वर्णाश्रमैरित्यस्य कर्मणः करणाप्रमादादिव्यतिरेकेणाऽसकृ-दननुष्ठानात्प्रतिषिद्धस्य चाभक्ष्यभक्षणादेर्नित्यमनुष्ठानादेषां भक्ताच्छादनपर्याप्तधनं विहाय शेषं राजा गृह्णीयात् । इदं च दण्डविधानं देशाचारातिरिक्तप्रतिषिद्धाचरणे न देशाचारकरणे । तत्र बृहस्पतिना दमनिषेधात् । अत एव गौतमोऽपि देशाचारव्यतिरेकेण सामान्यत एवाह । 'शिष्टाकरणे प्रतिषिद्धसेवायां च नित्यं चैलपिंडादूर्ध्वं स्वहरणमि'ति । अत्रायं निर्णयः । देशजाति-कुलधर्माः श्रुत्यादिविरुद्धा अप्रमाण । तत्र शास्त्रेणैव राज्ञा निर्णेतव्यं । क्वचित्प्रतिलोमजादौ पुनः शास्त्रविरुद्धा अपि धर्मा न विचालनीयाः प्रजाप्रक्षोभबलादिभंगभयात् । न तु प्रमाणत्वादिति ।

यच्च ।

अभर्तृकभ्रातृभार्याग्रहणं चातिदूषितम् ।
कुले कन्याप्रदानं च देशेष्वन्येषु दृश्यते ॥
तथा भ्रातृविवाहोऽपि पारसीकेषु दृश्यते ।
तथैव दशरात्रादौ श्राद्धे भुक्तं तु यैर्द्विजैः ॥
तेभ्यः श्राद्धे पुनर्दानं केचिन्नेच्छन्ति देशिनः ।
दत्वा धान्यं वसंतेऽन्यैः शरदि द्विगुणं पुनः ॥
भुज्यते बन्धकक्षेत्रं प्रविष्टे द्विगुणे धने ।
भुज्यतेऽन्यैरप्रविष्टमूल्यं तच्च निरुद्ध्यते ॥

इत्थं विरुद्धानाचारान्प्रभूतान्न निवर्त्तयेत् ।
देशजात्यादिधर्मस्य प्रामाण्यात्तु विरोधिनः ॥
शास्त्रेणातो नृपः सर्वं शास्त्रं दृष्ट्वा प्रवर्त्तयेद् ॥

इति स्मृत्यंतरवचने शास्त्रविरुद्धस्यापि देशाद्याचारस्यानिवर्त्तनीयत्वमुक्तम् । तत्प्रभूताचारनिवर्त्तनेन प्रजाक्षोभादिप्रसङ्गभयात् न धर्माचारत्वेन पूर्वोदाहृतगौतमबोधायनाद्यविरोधात् । यत्पुनः

येषां परम्पराप्राप्ताः पूर्वजैरप्यनुष्ठिताः ।
त एव तैर्न दुष्येयुराचारैर्नेतरे पुनः ॥

इत्यापस्तंबवचनम् । यच्च

येषु देशेषु ये देवा येषु देशेषु ये द्विजाः ।
येषु देशेषु यत्तोयं या च यत्रैव मृत्तिका ॥
येषु देशेषु ये धर्मा धर्माचारास्तु यादृशाः ।
तत्र तान्नावमन्येत धर्मस्तत्रैव तादृशः ॥

इति देवलवचनं तदपि शास्त्राविरुद्धाचारधर्मविषयं । कात्यायनेनापि शक्तस्य राज्ञः शास्त्रविरुद्धनिवर्त्तकत्वमुक्तम्, नाशक्तस्य ।

यत्नेनैव विरुद्धं तु शक्तो राजा निवर्त्तयेत् ।
अशक्तितो न दोषः स्यादेष धर्मः स्मृतो बुधैः ॥ इति ।

नारदकात्यायनौ यमश्च प्रथमे

श्रुतिस्मृतिविरुद्धं च भूतानामहितं च यत् ।
न तत्प्रवर्त्तयेद्राजा प्रवृत्तं चेन्निवर्त्तयेत् ।
न्यायापेतं यदन्येन राज्ञाऽज्ञानकृतं भवेत् ।
तदप्याम्नायविहिते पुनर्न्याये निवेशयेत् ॥

कात्यायनः

अप्रवृत्तं कृतं यत्र श्रुतिस्मृत्यनुमोदितम् ।
नान्यथा तत्पुनः कार्यं न्यायापेतं विवर्जयेत् ॥

अस्यार्थः—यद्देशविशेषे पूर्वं यत्र वृत्तं यथा मध्यदेशनिवासिकर्मकराणां गवाशनवर्जनं यथा वा प्राच्यानां मत्स्याशनवर्जनं श्रुतिस्मृतिभ्यामनुमतम् । नान्यथा तत्पुनरन्यथा न कार्यं । अत्र हेतुमाह न्यायापेतं विवर्जयेत् । मत्स्यादिवर्जनं तु न्याय्यमेवेत्यर्थः ।

बृहस्पतिः

भागशुल्कोचितदमे समापाण्मासिके करे ।
मर्यादा लेखिता कार्या नैगमाधिष्ठिता सदा ॥
शास्त्रवद्यत्नतो रक्ष्या सन्दिग्धौ साधनं तु सा ।
तां दृष्ट्वा निर्णयं कुर्यात्प्राड्विविष्टव्यवस्थया ॥

भागादिषु या मर्यादा व्यवस्था निरूपिता सा लेखिता कार्या नैगमैर्वणिग्भिरधिष्ठिता ।
शास्त्रवत् धर्मशास्त्रवत् । सन्दिग्धौ सन्देहे सा लेखिता व्यवस्थैव साधनं निश्चायिका ।

कात्यायनः

देशस्यानुमतेनैव व्यवस्था या निरूपिता ।
लिखिता तु सदा कार्या मुद्रिता राजमुद्रया ॥
शास्त्रवद्यत्नतो रक्ष्या तां निरीक्ष्य विनिर्णयेत् ।
अभावे शास्त्रदृष्टस्य देशदृष्टेन यत्नतः ॥
नैगमानुमतेनैव मुद्रितं राजमुद्रया ।
नैगमस्थैस्तु यत्कार्यं लिखिते यद्व्यवस्थितम् ॥
तस्मात्तत्सम्प्रवर्त्तेत नान्यथैव प्रवर्त्तयेत् ।
प्रमाणं देशदृष्टं तु यदेवमिति निश्चितम् ॥
नैगमस्थैर्वणिक्समभ्यनियासिभिः शिल्पप्रभृतिभिः ।

॥ इति श्रीमन्महीमण्डलाखण्डलश्रीनागमल्लात्मजविपक्षप्रतिज्ञापरिपूरणपरायण-
कलिकालकर्णप्रतापरुद्रेश्वरशरणागतराजन्यपञ्जरपरमवैष्णववैरिगज
सिंहेत्याद्यनेकविरुदराजीविराजमानमानोन्नतमहाराजाधिराजश्री
पृथ्वीचन्द्रदेवविरचिते धर्मतत्त्वकलानिधौ महानिबन्धे व्यव
हारप्रकाशे व्यवहारस्वरूपतद्भेदव्यवहारनिर्णेतृप्राड्वि
वाकसभासभ्यादिनिरूपणं नाम प्रथम उल्लासः ॥

---

## अथासेधः

**तत्र नारदः**

> वक्तव्येऽर्थे न तिष्ठन्तमुत्क्रामन्तं च तद्वचः ।
> आसेधयेद्विवादार्थी यावदाह्वानदर्शनम् ॥ इति ।

आसेधो नाम राजाज्ञयाऽवरोधः। वक्तव्येऽर्थे सन्दिग्धेऽर्थे। न तिष्ठन्तं निर्णयायाऽप्रवर्त्तमानम्। न केवलमप्रवर्त्तमान। तथा तद्वच अर्थिवच. उत्क्रामन्त अयमन्यमानं। यावदाह्वानदर्शनं व्यवहारदर्शनार्थं राजाज्ञया यावदाहूय इत्यर्थ. ।

तस्य भेदानाह स एव

> स्थानासेधः कालकृतः प्रवासात्कर्मणस्तथा ।
> चतुर्विधः स्यादासेधस्तमासिद्धो न लंघयेत् ।

स्थानासेधो गृहदेवकुलादिस्थानान्न चलितव्य यदि चलसि तदा राजाज्ञातिक्रम इत्येवंरूपः । एवमन्यत्रापि । कालकृतः भोजनात्पूर्वं यदि न ददासीत्येवमादिः । प्रवासात् धनदत्वा यात्रां करोपीत्यादिः । कर्मण· अदत्वा यदि पण्यं प्रसारयसि तदा राजाज्ञातिक्रम इत्यादिरूपः । न पुनर्निरीक्षणादेर्निरोध । तत्रासेद्धुरेव दण्डस्मरणात् ।

**कात्यायनः**

> उत्पादयति यो हिंसां देयं वा न प्रयच्छति ।
> याचमानाय दौःशील्यादाकृष्योऽसौ नृपाज्ञया ॥
> आवेद्य तु नृपे कार्यमसन्दिग्धे प्रतिश्रुते ।
> तदाऽऽसेधं नियुंजीत यावदाह्वानदर्शनम् ॥
> क्रियार्थिनाऽवरुद्धः सन्नासेधं चेद्विलङ्घयेत् ।
> स्वहस्तेनाऽपि रोद्धव्यो यद्यसौ तां विभावयेत् ॥
> आसेधयोग्य आसेधमुत्क्रामन् दण्डमर्हति ।
> आसेधयंस्त्वनासेध्यं राज्ञा शास्य इति स्थितिः ॥ इति ।

असन्दिग्धे प्रतिश्रुत इति अर्थिना राज्ञि निवेदिते कार्ये असन्दिग्धे राज्ञा विचार्यत्वेन निश्चिते प्रतिश्रुते प्रतिज्ञाते च सति तदासेध तस्य प्रत्यर्थिन आसेधं नियुजीत कुर्यात् । यावद्राज्ञा आहूयते । यदि पुनरसौ वादी ता क्रिया लोके विभावयितु शक्नुयात्तदा स्वहस्तेनापि रुंध्यादित्यर्थः ।

**पितामहः**

> राजाऽऽज्ञा लङ्घिता येन करणीया विशेषतः ।
> सप्तांगस्य तु राजस्य द्रोहस्तेन कृतो भवेत् ॥

क्वचिदासेधातिक्रमेऽप्यपराधाभावमाह नारदः

नदीसंतारकांतारदुर्देशोपप्लवादिषु ।
आसिद्धस्तं परासेधमुत्क्रामन्नापराध्नुयात् ॥
यस्त्विन्द्रियनिरोधेन व्याहारोच्छ्वासनादिभिः ।
आसेधयेदनासेध्यैः स दण्ड्यो न त्वतिक्रमी ॥
सम्भूतेऽर्थे य आसिद्धः प्रत्यासेधयते स तम् ।
शास्यो भवेत्तदा दण्ड्यो ह्यसम्भूते स एव तु ॥
आसेधयेतां यदि वै सन्दिग्धेऽर्थे परस्परम् ।
तयोरतिक्रमे धर्म्यं तत्र दण्डं प्रकल्पयेत् ॥

सम्भूते यथार्थभूते स आसिद्धः तं आसेधकं प्रत्यासेधयते तदा शास्यो भवेत् ।

कात्यायनः

वृक्षपर्वतमारूढा हस्त्यश्वरथनौस्थिताः ।
विषमस्थाश्च ते सर्वे नाऽऽसेध्याः कार्यसाधकैः ॥

बृहस्पतिः

शास्त्रोद्वाहोद्यतो रोगी शोकार्त्तोन्मत्तबालकाः ।
मत्तो वृद्धोऽभियुक्तश्च नृपकार्योद्यतो व्रती ॥
आसन्ने सैनिकः संख्ये कर्षको वापसंग्रहे ।
विषमस्थाश्च नासेध्याः स्त्रीसनाथास्तथैव च ॥' इति ।

रोगी आसेधानुचितरोगवान् । वृद्धः आसेधानर्हवार्द्धकः । संख्ये संग्रामे । वापसंग्रहे अन्नानां वपने सस्यसञ्चयने च ।

व्यासः

योगी यियक्षुरुन्मत्तो धर्मार्थी व्यसनी व्रती ।
दानोन्मुखो नाभियोज्यो नासेध्यो नाह्वयेच्च तम् ॥

यियक्षुः यष्टुमिच्छुः ।

नारदः

निवेष्टुकामो रोगार्त्तो यियक्षुर्व्यसने स्थितः ।
अभियुक्तस्तथाऽन्येन राजकार्योद्यतस्तथा ॥
गवां प्रचारे गोपालाः सस्यावापे कृषीवलाः ।
शिल्पिनश्चापि तत्कालमायुधीयाश्च विग्रहे ॥

अप्राप्तव्यवहारश्च दूतो दानोद्यतो व्रती ।
विषमस्थाश्च नासेध्या न चैतानाह्वयेन्नृपः ॥

निवेष्टुकामो विवाहोद्यतः । अप्राप्तव्यवहारः अपूर्णषोडशवर्षः । विषमस्थाः व्यसनसङ्कटाः ।

**कात्यायनः**

अभियुक्तश्च रुद्धश्च तिष्ठेयश्च नृपाज्ञया ।
न तस्यान्येन कर्तव्यमभियुक्तं विदुर्बुधाः ॥

वादिनः सभागमनानन्तरं राजादिकर्तव्यमाह स एव ।

काले कार्यार्थिनं पृच्छेत्प्रणतं पुरतः स्थितम् ।
किं कार्यं का च ते पीडा मा भैषीर्ब्रूहि मानव ॥
केन कस्मिन्कदा कस्मात्पृच्छेदेवं सभागतः ।
एवं पृष्टः स यद्ब्रूयात्तत्सभ्यैर्ब्राह्मणैः सह ॥
विमृश्य कार्यं न्याय्यं चेदाह्वानार्थमतः परम् ।
मुद्रां वा निक्षिपेत्तस्मिन्पुरुषं वा समादिशेत् ॥

किं कार्यमिति देयाप्रदानादेर्विज्ञानार्थं प्रश्नः । का च ते पीडेति हिंसायाः । केनेत्यादिः कर्तृदेशकालकारणपरिज्ञानार्थं प्रश्नः ।

अत्र प्रणतमित्यनेन शस्त्रादिधारणाद्यौद्धत्याभावः सूचितः । अत एव शस्त्रादिधारणे दण्डमाहोशनाः ।

सशस्त्रोऽनुत्तरीयो वा मुक्तकच्छः सहासनः ।
वामहस्तेन वा स्रग्वी वदन् दण्डमवाप्नुयात् ॥

न्याय्यं न्यायार्हं । जन्मान्तरे मया धनं दत्तमसौ न प्रयच्छतीतिवद्विचारायोग्यं यदि न स्यादित्यर्थः । स्तेय विवादपदे मनुः

क्षन्तव्यं प्रभुणा नित्यं क्षिपतां कार्यिणां नृणाम् ।
बालवृद्धातुराणां तु कुर्वता हितमात्मनः ॥
यः क्षिप्तो मर्षयत्यार्तैस्तेन स्वर्गे महीयते ।
यस्त्वैश्वर्यान्न क्षमते नरकं तेन गच्छति ॥ इति ।

क्षिपता निन्दता । आर्तैः कार्यालाभाद् दुःखितैः । यन्मर्षयति सहते तेन स्वर्गे महीयत इत्यन्वयः । वादिनिवेदनानन्तरं वादिवचनं लेखकः फलकादौ लिखेत् ।

च नारदकात्यायनौ

रागादिना यदेकेन कोपितः करणे वदेत् ।
तदोमिति लिखेत्सर्वं वादिनः फलकादिषु ॥

इदं च लेखनमग्रिमविचारोपयोगितया ।

अनन्तरकृत्यमाह बृहस्पतिः

यस्याभियोगं कुरुते तत्त्वेनाऽऽशंकयाऽथवा ।
तमेवाह्वानयेद्राजा मुद्रया पुरुषेण वा ॥

अत्रैव कारणाभियुक्तेतरस्य व्युदासः । उत्तरदाने तस्यानधिकारात् ।

अत एव कात्यायनः

अधिकारोऽभियुक्तस्य नेतरस्यासंगतेः ॥ इति ।

असंगतिरसम्बन्धः । अभियुक्तानपि कांश्चिदनाह्वातव्यानाह कात्यायनः

अकल्पबालस्थविरविषमस्थक्रियाकुलान् ।
कार्यातिपातिव्यसनिनृपकार्योत्सवाकुलान् ॥
मत्तोन्मत्तप्रमत्तार्तभृत्यान्नाह्वानयेन्नृपः ॥
न हीनपक्षां युवतिं कुले जातां प्रसूतिकाम् ।
सर्ववर्णोत्तमां कन्यां ता ज्ञातिप्रभुकाः स्मृताः ॥ इति ।

क्रियाकुलः नित्यनैमित्तिकादिकर्मकरणव्यग्रः । कार्यातिपाती यस्यागच्छतो गुरुतरं कार्यं नश्यति । व्यसनी इष्टवियोगादिदुःखवान् । मत्तो मदनीयद्रव्येण स्खलितबुद्धिः । उन्मत्तो महत्पित्तादिना प्रमत्तः सर्वत्रानवधानशीलः । हीनपक्षामनाथां । युवतिमिति तस्या एवं विशेषणं । कुले जातां सत्कुलप्रसूतां । सर्ववर्णोत्तमां ब्राह्मणीं यावदपेक्षयोत्तमवर्णामित्यन्ये । ताः पूर्वोक्ताः यतो ज्ञातिप्रभुकाः ज्ञातिपरतन्त्राः । अन्ये चानाह्वातव्या निवेष्टुकाम इत्यादिना नारदोक्ता आसेधप्रकरणनिरूपिता इहाप्यनुसंधेयाः ।

अत्र क्वचिदपवादमाह स एव ।

तदधीनकुटुम्बिन्यः स्वैरिण्यो गणिकाश्च याः ।
निष्कुला याश्च पतितास्तासामाह्वानमिष्यते ॥ इति ।

तदधीनकुटुम्बिन्यः गोपशौण्डिकादिस्त्रियः । निष्कुलाः निरन्वयः । यदा तु राज्ञा कृतेऽप्याह्वाने अकल्पत्वादिना स्वयं गन्तु न शक्नोति तदा प्रतिनिधिं प्रेषयेत् ।

तथा च बृहस्पतिः

अप्रगल्भजडोन्मत्तवृद्धस्त्रीबालरोगिणाम् ।
पूर्वोत्तरं वदेद्बन्धुर्नियुक्तोऽन्योऽथवा नरः ॥ इति ।

पूर्वोत्तरं भाषामुत्तरं च । बन्धुर्भ्रात्रादिः । अन्य उदासीनः । तस्य विशेषणं नियुक्त इति ।

तथा च कात्यायनः

इतरोऽप्यभियुक्तेन प्रेरितोऽधिकृतो मतः ।
समर्पितोऽर्थिना योऽन्यः परो धर्माधिकारिणि ।
प्रतिवादी स विज्ञेयः प्रतिपन्नश्च यः स्वयम् ॥ इति ।

अयमर्थः—इतरोऽपि विवादाऽसम्बन्ध्यपि अभियुक्तेन प्रतिवादिना प्रेरितः प्रतिवादीकृतः सन् वादिना उत्तरवादित्वेन मतः संमत अधिकृतोऽधिकारी भवति । तथा अन्यो प्रतिवादी वादिप्रतिनिधिर्विज्ञेयः स च परः प्रतिवादिना स्वयं प्रतिपन्नो यदि भवतीति केचित्तु स्वयंप्रतिपन्न इति पदमन्यथा व्याचक्षते । यथा स्वयमेव कृताभ्युपगमोऽपि वादिनः प्रतिवादिनो वा प्रतिनिधिर्भवति चेद्वादिनोरनुमतो भवतीति ।

पितामहः

पिता भ्राता सुहृद्वाऽपि बन्धुः सम्बन्धिनोऽपि वा ।
यदि कुर्युरुपस्थानं वादं तत्र प्रवर्त्तयेत् ॥
यः कश्चित्कारयेत्किञ्चिन्नियोगाद्येन केनचित् ।
तत्तेनैव कृतं ज्ञेयमनिवर्त्यं हि तत्स्मृतम् ॥ इति ।

कात्यायनोऽपि

अर्थिना सन्नियुक्तो वा प्रत्यर्थिप्रहितोऽपि वा ।
यो यस्यार्थे विवदते तयोर्जयपराजयौ ॥

बृहस्पतिरपि

ऋत्विग्वादे नियुक्तश्च समौ संपरिकल्पितौ ।
यज्ञे स्वाम्याप्नुयात्पुण्यं हानिं वादेऽथवा जयम् ॥ इति ।

अनियुक्तस्यासम्बन्धिनः परार्थवादे दण्डमाह नारदः

यो न भ्राता न च पिता न पुत्रो न नियोगकृत् ।
परार्थवादी दण्ड्यः स्याद्व्यवहारेषु विब्रुवन् ॥

कात्यायनोऽपि

दासाः कर्मकराः शिष्या नियुक्ता बान्धवास्तथा ।
वादिनो न च दण्ड्याः स्युर्यस्ततोऽन्यः स दण्डभाक् ॥

यदा पुनरकल्पादिभेषितप्रतिनिधिना न व्यवहारनिष्पत्तिस्तदा तेषामप्याह्वानं यानादिना कार्यम् ।

यथा चाह हारीतः

देशं कालं च विज्ञाय कार्याणां च बलाबलम् ।
अकल्पादीनपि शनैर्यानैराह्वानयेन्नृपः ॥
ज्ञात्वा नियोगं येऽपि स्युर्वने प्रव्रजितादयः ।
तानप्याह्वानयेद्राजा गुरुकार्येष्वकोपयन् ॥ इति ।

गुरुतरकार्यविषयेऽभियोग इत्यभियुक्तस्यैवाह्वानमावश्यकम् ।
तत्र कात्यायनेन प्रतिनिधेर्निषेधाभिधानात् । यथा

ब्रह्महत्यासुरापाने स्तेये गुर्वङ्गनागमे ।
अन्येष्वसभ्यवादेषु प्रतिवादी न दीयते ॥ इति ।

असभ्यवादानप्याह स एव ।

मनुष्यमारणे स्तेये परदाराभिमर्शने ।
अभक्ष्यभक्षणे चैव कन्याहरणदूषणे ॥
पारुष्ये कूटकरणे नृपद्रोहे तथैव च ।
प्रतिवादी न दाप्यः स्यादर्थिप्रत्यर्थिनोरपि ॥

प्रतिवादी प्रतिनिधिः । मनुष्यपदं ब्राह्मणव्यतिरिक्तपरं स्तेयपदं च ब्राह्मणसम्बन्धिवर्णेतरद्रव्यस्तेयपरम् । परदारशब्दश्च गुरुस्त्रीव्यतिरिक्तविषयः । अन्यथा ब्रह्महत्येत्यादिना पुनरुक्तिप्रसङ्गात् । प्रतिवादी प्रतिनिधिः । यत्र पुनर्व्यवहारमध्ये वादिप्रतिवादिनोरन्यतरस्य विपत्तिस्तत्र विशेषमाह बृहस्पतिः

पूर्वोत्तरेऽभिलिखिते यत्र वादी प्रमीयते ।
प्रत्यर्थी तत्सुतस्ताभ्यां व्यवहारं विशोधयेत् ॥
अनिर्णीते विवादे तु विप्रलब्धो भवेन्नृपः ।
जयदानदमं न स्यात्तस्मात्कार्याणि निर्णयेत् ॥ इति ।

आहूतस्यानागमने दण्डमाह बृहस्पतिः

आहूतो यस्तु नागच्छेद्दर्पाद्बन्धुबलान्वितः ।
अभियोगानुरूपेण तस्य दण्डं प्रकल्पयेत् ॥

कात्यायनोऽपि

आहूतस्त्ववमन्येत यः शक्तो राजशासनम् ।
तस्य कुर्यान्नृपो दण्डं विधिदृष्टेन कर्मणा ॥ इति ।

स दण्डः कुत्र कियानित्यत्राह स एव ।

हीने कर्मणि पञ्चाशन् मध्यमे तु शतावरः ।
गुरुकार्येषु दण्डः स्यान्नित्यं पञ्चशतावरः ॥

इयं च संख्या कार्षापणानाम् ।

कल्पितो यस्य यो दण्डस्त्वपराधानुसारतः ।
पणानां ग्रहणं तस्मात्तन्मूल्यं वा न राजतम् ॥

इति तेनैवाभिहितत्वात् । अत्र शक्तपदोपादानादापदादिनाऽनागमने न दण्डकल्पना किन्तु पुनराह्वानं कार्यम् ।

अत एवाह व्यासः

परानीकहते देशे दुर्भिक्षव्याधिपीडिते ।
कुर्वीत पुनराह्वानं न दण्डं परिकल्पयेत् ॥

हारीतोऽपि

राजिकं दैविकं कार्यमभियुक्तस्य तत्त्वतः ।
स्वस्थाने चान्तराले वा यात्येवं न तु दोषभाक् ॥

तत्त्वतः परमार्थतो यदि कार्यमभियुक्तस्य स्यात्तदा न दण्डः । अपरमार्थत्वे तु तं दण्डयित्वा पश्चान्न्यायं राजा प्रवर्तयेत् । तथा चाह स एव ।

प्रतिप्राप्यस्तु यत्नेन सोऽन्यथा दण्डभाग्भवेत् ।
दण्डयित्वा पुनः पश्चाद्राजा न्यायं प्रवर्त्तयेत् ॥ इति ।

दूतविषये कात्यायनः

देशकालवयःशक्त्याद्यपेक्षं भोजनं स्मृतम् ।
आकारकस्य सर्वत्र इति तत्त्वविदो विदुः ॥

एवमुक्तप्रकारेण मुद्रालेख्यादिना प्रत्यर्थिन्यानीते समनन्तरकृत्यमाह पितामहः

सभायाः पुरतः स्थाप्योऽभियोगी वादिना तथा ।
ईप्सितेऽन्यत्र वा स्थाने प्रमाणं सोऽन्यथा न तु ॥

इदं च स्थापनं दुष्टलक्षणप्रच्छादनपरिहारार्थमतस्तादृशवन्धुजनाद्यसंकीर्णे स्थाने स्थाप्य इत्यर्थः ।

समनंतर राज्ञा पृष्टोऽभियुक्तः स्वोपयोगिवृत्तान्तं सर्वमावेदयेत् । अभियोक्तृकृतावेदनमात्रेण राज्ञोऽर्थिप्रत्यर्थिनैयत्यापरिचयात् तत्परिचयस्य च राज्ञः कर्त्तव्यत्वेनाभिधानात् । अतोऽर्वागेव भाषाया. वादिप्रतिवादिनैयत्यनिश्चयायाभियुक्तस्य वृत्तान्तस्तन्मुखेणावगन्तव्यः ।

अतः प्रत्यर्थिनोऽपि वृत्तान्तावेदनमस्तीति स्थितम् ।

**नारदः**

आज्ञालेखे पट्टके शासने वा
आधौ पत्रे विक्रये वा क्रये वा ।
राज्ञे कुर्यात्पूर्वमावेदनं य-
स्तस्य ज्ञेयः पूर्ववादो विधिज्ञैः ॥

आज्ञालेख्यादिविषयं यो राज्ञे पूर्वमावेदयति तस्य भाषावादित्वमित्यर्थः ।

एवं सर्वत्र प्रसक्तौ क्वचिदपवादमाह स एव ।

यस्य वाऽप्यधिका पीडा कार्यं वाऽप्यधिकं भवेत् ।
तस्यार्थिवादो दातव्यो न यः पूर्वं निवेदयेत् ॥

अर्थिवादः पूर्वपक्षः । **कात्यायनोऽपि**

यस्य स्यादधिका पीडा कार्यं वाऽप्यधिकं भवेत् ।
पूर्वपक्षो भवेत्तस्य न यः पूर्वं निवेदयेत् ॥

यत्रोभयोरपि परस्परमर्थिप्रत्यर्थिभावः साध्यभेदाद्युगपद्भवति तत्रोत्कृष्टजातेर्बहुपीडस्य वा विवादः पूर्वं द्रष्टव्यः । तथा चाह **बृहस्पतिः**

अहंपूर्विकया यातावर्थिप्रत्यर्थिनौ यदा ।
वादो वर्णानुपूर्व्येण ग्राह्यः पीडामवेक्ष्य वा ॥

भिन्नवर्णत्वे वर्णापेक्षयाऽसमानवर्णत्वे वर्णापेक्षया समानवर्णत्वे पीडापेक्षयेति व्यवस्था । यत्र पुनरनेकानि नियतार्थिप्रत्यर्थिवादियुग्मानि युगपत्प्राप्तानि तत्र दर्शनक्रममाह **मनुः**

अर्थानर्थावुभौ बुद्ध्वा धर्माऽधर्मौ च केवलौ ।
वर्णक्रमेण सर्वाणि पश्येत्कार्याणि कार्यिणाम् ॥ इति ।

अर्थः प्रयोजनं अनर्थोऽलाभः धर्मोऽत्राऽधिको नास्तीति च बुद्ध्वा धार्मिकस्य कार्यं प्रथमं द्रष्टव्यम् । अधर्मो धर्माभावमात्रम् । केवलौ असंकीर्णौ । वर्णक्रमेणेति ब्राह्मणस्य विवादः प्रथमतो द्रष्टा ततो राजन्यस्येत्यादिक्रमेण एतदभावे धार्मिकत्वादिक्रमेण तस्याप्यभावे अर्थित्वादिक्रमेण विभावयेत् जानीयात् ।

**कात्यायनः**

गृहीतग्रहणो न्यायो न प्रवर्त्यो महीभृता ।
तस्य वा तत्समर्प्यं स्यात्स्थापयेद्वा परस्य तत् ॥

गृहीतग्रहण इति गृह्यत इति ग्रहणं वस्तु । अर्थिना स्वकार्यसिद्ध्यर्थं प्रत्यर्थिनो यदाहृतं तत् प्रत्यर्थिने दापयित्वा । परस्य उभयानुमतस्य अन्यस्य वा समीपे यावद्विचारं स्थापयित्वा व्यवहारः प्रवर्तनीय इत्यर्थः ।

अभियोक्त्रादीनामुक्तिक्रममाह स एव ।

तत्राऽभियोक्ता प्राग्ब्रूयादभियुक्तस्त्वनन्तरम् ।
तयोरन्ते सदस्यास्तु प्राड्विवाकस्ततः परम् ॥ इति ।

प्राग्ब्रूयात् प्रतिज्ञां कुर्यादित्यर्थः ।

---

## अथ भाषा

तत्र बृहस्पतिः

उपस्थिते ततस्तस्मिन्वादी पक्षं प्रकल्पयेत् । इति ।

निकटस्थे प्रतिवादिनि पूर्वपक्षवादी लेखयेदित्यर्थः ।

तत्र भाषा तत्स्वरूपमुक्तं स्मृत्यन्तरे

अर्थवद्धर्मसंयुक्तं परिपूर्णमनाकुलम् ।
साध्यवद्वाचकपदं प्रकृतार्थानुबन्धि च ॥
प्रसिद्धमविरुद्धं च निश्चितं साधनक्षमम् ।
संक्षिप्तं निखिलार्थं च देशकालाविरोधि च ॥
वर्षर्तुमासपक्षाहोवेलादेशप्रदेशवत् ।
स्थानावसथसाध्याख्याजात्याकारवयोयुतम् ॥
साध्यप्रमाणसंख्यावदात्मप्रत्यर्थिनामवत् ।
परात्मपूर्वजानेकराजनामभिरङ्कितम् ॥
क्षमालिङ्गात्मपीडावत्कथिताहर्तृदायकम् ।
यदावेद्यते राज्ञे तद्भाषेत्यभिधीयते ॥ इति ।

अर्थवत् प्रयोजनवत् । परिपूर्णं अध्याहारनिरपेक्षम् । अनाकुलं असंशयिताक्षरम् । साध्यवत् सिषाधयिषितार्थान्वितम् । वाचकपदं गौणलाक्षणिकपदरहितम् । प्राकृतार्थाविरोधि पूर्वनिवेदितार्थाविरुद्धम् । प्रसिद्धं लोकप्रसिद्धार्थविषयम् । अविरुद्धं पुरराष्ट्रराजप्राड्विवाकराजाद्य-विरुद्धं तथा पूर्वापराविरुद्धम् । प्रत्यक्षादिप्रमाणाविरुद्धं व्यवहारिकधर्माविरुद्धं च । निश्चितं अर्थान्तरसन्देहरहितं च । साधनक्षमं साधनार्हम् । संक्षिप्तं अनतिविस्तृतम् । निखिलार्थं अन-वशेषितवक्तव्यम् । देशकालाविरोधि—तत्र देशाविरुद्धं मध्यदेशीयं कुरुक्षेत्रमनेनापहृतमित्येव-मादिविरोधरहितम् । कालाविरुद्धं शिशिरकालीनाम्रफलसहस्रमपहृतमित्येवमादिरहितम् । देशो मध्यदेशादिः । प्रदेशस्तदेकदेशः । स्थानं तदन्तर्वर्तिग्रामादिः । आवसथो गृहादिः । साध्यं ऋणादानादि । आख्या नाम । जातिः विप्रत्वादिः । साध्यप्रमाणं साध्यं भूम्यादिस्तस्य प्रमाण-मियत्ता । संख्या एकत्वादिः । परात्मपूर्वजानेकराजनामभिरङ्कितम् । परः प्रतिवादी आत्म

धादी । पूर्वजास्तयोः पित्रादयः । अनेके राजानो भुक्तिकालीनाः । एषां नामानि तैश्चिह्नितम् । अत्रार्थवत्त्वादीनि देशकालाविरोधित्वान्तानि अर्थिप्रत्यर्थिनामधेयसहितानि सकलव्यवहारसाधारणानि ततस्तैः सर्वत्र भाषायामवश्यं भवितव्यम् । तद्व्यतिरेकेण कुत्रापि साध्यनिष्पत्तेर्विधातुमशक्यत्वात् । वर्षादीनि तु विशेषणानि सर्वाणि न सर्वत्रोपयोगीनि । कतिपयैर्विनापि तत्र साध्यनिष्पत्तिदर्शनात् । अतो यत्र येषामुपयोगस्तत्रैव तेषां निवेशनं कर्त्तव्यं नेतरत्राऽपि । तत्र वर्षादिकालानां वृद्धियुक्तधनद्वैगुण्यादिविवादे आधिक्यप्रतिग्रहादिविवादपौर्वापर्यज्ञाने उपयोगः ।

तथा च कात्यायनः

देशश्चैव तथा स्थानं सन्निवेशस्तथैव च ।
जातिः संज्ञाऽधिवासश्च प्रमाणं क्षेत्रनाम च ॥
पितृपैतामहं चैव पूर्वराजानुकीर्त्तनम् ।
स्थावरेषु विवादेषु दशैतानि निवेशयेत् ॥ इति ।

अधिवासः समीपदेशवर्त्ती जनः । क्षेत्रनाम शालिक्षेत्रं मुद्गक्षेत्रमित्यादि । साध्याख्याजात्याकारवयसां चौर्यास्वामिविक्रयादिप्वर्थविवादेपूपयोगः । संख्याप्रमाणयोर्गणिमतुलिमादिद्रव्यविवादे चोपयोगः । क्षमालिङ्गानामुपेक्षितधनादिविवादेपूपयोगः । आत्मपीडाया ऋणिकलग्नकविवादावाद्युपयोग इत्यादि । एवं चार्थवत्त्वादिभिः सह वर्षादीनां यथोपयोगं क्वचित्क्वचिन्निवेशनमित्यनुसन्धेयम् ।

हारीतः

आसनं शयनं यानं ताम्रं कांस्यमयोमयम् ।
धान्यमश्ममयं वस्त्रं द्विपदं च चतुष्पदम् ॥
मणिमुक्ताप्रवालानि हीरका रूप्यकाञ्चनम् ।
यदि द्रव्यसमूहः स्यात्संख्या कार्या तथैव च ॥
यस्मिन्देशे च यद्द्रव्यं येन मानेन मीयते ।
तेन तस्मिंस्तदा संख्या कर्त्तव्या गणकादिभिः ॥ इति ।

कात्यायनः

निवेश्य कालं वर्षं च मासं पक्षं तिथिं तथा ।
वेलां प्रदेशं विषयं स्थानं जात्याकृती वयः ॥
साध्यप्रमाणं द्रव्यं च संख्या नाम तथात्मनः ।
राज्ञां च क्रमशो नाम निवासं साध्यनाम च ॥
क्रमात्पितॄणां नामानि पीडामाहर्तृदायकौ ।
क्षमालिङ्गानि चान्यानि पक्षं संकीर्त्य कल्पयेत् ॥ इति ।

बृहस्पतिकात्यायनौ

प्रतिज्ञादोषनिर्मुक्तं साध्यं सत्कारणान्वितम्।
निश्चितं लोकसिद्धं च पक्षं पक्षविदो विदुः॥ इति।

प्रतिज्ञादोषाः प्रतिज्ञाहान्यादयस्तैर्निर्मुक्तं तद्रहितम्। साध्यं सिद्ध्यर्हधर्मयुक्तम्। सत्कारणान्वितं असिद्ध्यादिदोषरहितहेत्वन्वितम्। निश्चितं निरूढतात्पर्यकम्। लोकसिद्धम्—यत्र श्रवणादेव लोकानामविश्वासो भवति यथा यस्य धनसंभावनैव नास्ति स यदि ब्रूयात् ममानेन नियुतं गृहीतमिति। एवंविधो हि लोकविरुद्ध ईदृशो यो न भवति स लोकसिद्धस्तम्'।

बृहस्पतिरपि

अल्पाक्षरप्रभूतार्थो निःसन्दिग्धस्त्वनाकुलः।
विरोधिकारणैर्मुक्तो विरोधिप्रतिषेधकः॥
एवमादिगुणान् सम्यगालोच्य च सुनिश्चितः।
पक्षः कृतः समादेयः पक्षाभासस्ततोऽन्यथा॥ इति।

अल्पाक्षरप्रभूतार्थः अल्पैरेवाक्षरैर्विवक्षितार्थबोधकः। निःसदिग्धः मद्गमयं सहस्रं धारयति न वेत्येवमादिसन्देहरहितः। अनाकुलः साध्यविपर्ययव्याप्तसाधकरहितसाधकः। विरोधिकारणैर्मुक्तः यथाऽयं पूर्वं मया सम विभक्तः संप्रत्यधिकधनो जातः अतः पुनर्विभज्य ददात्विति विरोधिकारणसहितस्ततोऽन्यो विरोधिकारणैर्मुक्त'। विरोधिप्रतिरोधकः प्रतिवाद्यभिमतार्थप्रतिबन्धकः। कण्टकोद्धारतर्कयानित्यन्ये। अत्र सर्वत्र भाषा प्रतिज्ञा पक्ष इति पर्यायाः।

पक्षभेदानाह बृहस्पतिरेव

चतुर्विधः पूर्वपक्षः प्रतिपक्षस्तथैव च।
चतुर्धा निर्णयः प्रोक्तः कैश्चिदष्टविधो बुधैः॥
शङ्काभियोगस्तथ्यं वै लब्धेऽर्थेऽभ्यर्थनं तथा।
वृत्ते वादे पुनर्न्यायः पक्षो ज्ञेयश्चतुर्विधः॥
भ्रान्तिः शंका समुद्दिष्टा तथ्यं द्रव्यार्थदर्शनम्।
लब्धेऽर्थेऽभ्यर्थनं मोहस्तथावृत्ते पुनः क्रिया॥ इति।

याज्ञवल्क्यः

प्रत्यर्थिनोऽग्रतो लेख्यं यथाऽऽवेदितमर्थिना।
समामासतदर्धाहर्नामजात्यादिचिह्नितम्॥ इति।

अर्थ्यते इत्यर्थः सोऽस्यास्तीत्यर्थी। तत्प्रतिकूलः प्रत्यर्थी। अग्रतः समक्षम्। यथावेदितं यथा येन प्रकारेण यत्साध्य पूर्वमावेदित तत्तथैव लेख्य नान्यथा। तथा सति हीनवादिता स्यात्।

तथा च नारदः

अन्यवादी क्रियाद्वेषी नोपस्थाता निरुत्तरः ।
आहूतप्रपलायी च हीनः पंचविधः स्मृतः ॥ इति ।

अत्र पूर्वं वेदनकाले कार्यमात्रस्य लिखितत्वात् प्रत्यर्थिसमक्षं समामासादिविशिष्टस्य लिखितत्वेन न पुनर्लेखनमनर्थकं अयमेव च परस्परं भेदो भाषाया आवेदनस्य च । जात्यादीत्यादिपदेन अर्थवत्त्वादीनां संग्रहः ।

एतच्च भूमौ फलके वा प्राड्विवाकः काठिन्यादिना लेखयित्वा आवापोद्वापाभ्यां संशोध्य पत्रे विनिवेशयेत् । तथा च कात्यायनः

पूर्वपक्षं स्वभावोक्तं प्राड्विवाकोऽथ लेखयेत् ।
पाण्डुलेखेन फलके ततः पत्रे विशोधितम् ॥ इति ।

स्वभावोक्तं न भयाद्युपाधिनोक्तम् । शोधनं च उत्तरदर्शनात्प्रागेव कार्यम् । तथा च बृहस्पतिः

ऊनाधिकं पूर्वपक्षं तावद्वादी विशोधयेत् ।
न दद्यादुत्तरं यावत् प्रत्यर्थी सभ्यसन्निधौ ॥

नारदोऽपि

भाषाया उत्तरं यावत् प्रत्यर्थी नाऽभिलेखयेत् ।
अर्थी तु लेखयेत्तावद्यावद्वस्तु विवक्षितम् ॥ इति ।

कात्यायनः

अधिकान् शातयेदर्थान् हीनांश्च प्रतिपूरयेत् ।
भूमौ निवेशयेत्तावद्यावदर्थोऽभिवर्त्तितः ॥

नारदः

शोधयेत्पूर्ववादं तु यावन्नोत्तरदर्शनम् ।
अवष्टब्धस्योत्तरेण निवृत्तं शोधनं भवेत् ॥ इति ।

यदि पूर्वपक्षशोधनात्पूर्वमेवोत्तरं सभ्या दापयन्ति तदा ते दण्ड्याः । रागाल्लोभादित्यादिना दण्डविधानात् । ततस्तान् दण्डयित्वा राजा पुनर्व्यवहारं प्रवर्तयेत् ।

---

## अथाऽनादेयव्यवहारादयः

कात्यायनः

देशकालविहीनश्च द्रव्यसंख्याविवर्जितः ।
साध्यप्रमाणहीनश्च पक्षोऽनादेय उच्यते ॥ इ

बृहस्पतिः

मृषायुक्तं क्रियाहीनमसाराक्षरमाकुलम् ।
पूर्वपक्षं लेखयतो वादे हानिः प्रजायते ॥

बृहस्पतिः कात्यायनश्च प्रथमे

न्यायं स्वं नेच्छते कर्तुमन्यायं वा करोति यः ।
न लेखयति यस्त्वेवं तस्य पक्षो न सिद्ध्यति ॥
विरुद्धश्चाविरुद्धश्च द्वावप्यर्थौ निवेशितौ ।
एकस्मिन्यत्र दृश्येते तं पक्षं दूरतस्त्यजेत् ॥

बृहस्पतिः

राज्ञा विवर्जितो यस्तु यश्च पौरविरोधकृत् ।
राष्ट्रस्य वा समस्तस्य प्रकृतीनां तथैव च ॥
अन्येऽपि ये पुरग्राममहाजनविरोधकाः ।
अनादेयास्तु ते सर्वे व्यवहाराः प्रकीर्त्तिताः ॥
अप्रसिद्धं सदोषं च निरर्थं निःप्रयोजनम् ।
असाध्यं वा विरुद्धं वा पक्षं राजा विवर्जयेत् ॥ इति ।

अप्रसिद्धादीनां लक्षणान्याह स एव

न केनचित्कृतो यस्तु सोऽप्रसिद्ध उदाहृतः ।
अन्यार्थे स्वार्थहीनश्च सदोषः परिकीर्त्तितः ॥
अल्पापराधः स्वल्पार्थो निरर्थक इति स्मृतः ।
कार्यबाधाविहीनस्तु विज्ञेयो निष्प्रयोजनः ॥
कुशीदाद्यैः पदैर्हीनो व्यवहारो निरर्थकः ।
वाक्पारुष्यादिभिश्चैव विज्ञेयो निष्प्रयोजनः ॥
न मानेन प्रदातव्यं शशशृंगकृतं धनुः ।
असंभाव्यमसाध्यं तं पक्षमाहुर्मनीषिणः ॥
यस्मिन्नावेदिते पक्षे प्राड्विवाकोऽथ राजनि ।
पुरे राष्ट्रे विरोधः स्याद्विरुद्धः सोऽभिधीयते ॥

अप्रसिद्ध यथा पौर्णमास्याममावास्यायां वा दक्षिणावृद्धिर्द्विगुणा पुराणोक्ता वद्धियाद इत्यादि । सदोषो यथा अस्मद्गृहप्रदीपप्रभयाऽयं स्वगृहे व्यवहरतीत्यादिः । निरर्थको यथाऽहमनेन सस्मितं निरीक्षितः मामकी शिक्षा अनेनापहृतेति वा । निष्प्रयोजनो यथा देवदत्तोऽस्मद्गृहसमीपे सुस्वरमधीते इत्यादिः । अथवा ऋणादानाद्यैश्चतुर्दशभिर्व्यवहारैर्हीनो निरर्थकः । वाक्पारुष्यादिभिर्हिंसात्मकैर्हीनो निष्प्रयोजन इति । शिष्टं स्पष्टम् ।

कात्यायनः

पुरराष्ट्रविरुद्धश्च यश्च राज्ञा विवर्जितः ।
अनेकपदसंकीर्णः पूर्वपक्षो न सिध्यति ॥

अनेकपदसंकीर्णः नानाविवादपदयुक्तः । यथा मदीया भूमिरनेनापहृता, मदीयमृणं न प्रयच्छति, सुवर्णं चास्य हस्ते निक्षिप्तं तदपलपतीत्यादिः । न त्वनेकवस्तुसंकीर्ण इति मदीयमनेन गौरश्वो धनं वसनं चापहृतमित्यादेरदुष्टत्वात् । एवमनेकः पक्षो युगपन्न सिध्यतीत्यर्थे । न तु नानापक्षनिर्देशात्तस्य हानिः स्यात् किन्तु राजा तत्त्वबुभुत्सया तदपि क्रमान्निरूपयितुं लेखयेत्।

अत एव **कात्यायनः**

बहुप्रतिज्ञं यत्कार्यं व्यवहारे सुनिश्चितम् ।
कामं तदपि गृह्णीयाद्राजा तत्त्वबुभुत्सया ॥ इति ।

**नारदबृहस्पती**

एकस्य बहुभिः सार्द्धं स्त्रीभिः प्रेष्यकैस्तथा ।
अनादेयो भवेद्वादो धर्मविद्भिरुदाहृतः ॥ इति ।

**बृहस्पतिः**

गुरुशिष्यौ पितापुत्रौ दम्पतीस्वामिभृत्ययोः ।
एतेषां समवेतानां व्यवहारो न विद्यते ॥

अत्र गुरुशिष्यादीनां न सर्वथा व्यवहाराभावः किन्तु भाषोत्तरश्रवणपूर्वकं राजा न विचारणादिप्रकारानादरेण कारयेत् । अपि तु प्रकारान्तरेण तत्त्वमवगम्य यथातत्त्वमवस्थाप्य विवादमुपशमयेदित्यर्थः ।

**नारदः**

ईर्ष्यासूयासमुत्थेषु संरम्भे कामहेतुके ।
दम्पती विवदेयातां नाज्ञातिषु न राजनि ॥ इति ।

एषु विषयेषु ज्ञातिष्वेव विवदेतामित्यर्थः । तथा

अन्यार्थमर्थहीनं च प्रमाणागमवर्जितं ।
लेख्यहीनाधिकं भ्रष्टं भाषादोषा ह्युदाहृताः ॥

अन्यार्थादीनां लक्षणान्याह स एव

अर्थे साधारणेऽप्येक एकार्थे वाऽनियुक्तकः ।
लेखयेद्यस्तु भाषायामन्यार्थां तां विदुर्बुधाः ॥

एक एव गणस्य कार्यमेकस्य वा कार्यं अनियुक्तोऽसवन्धो वा यस्यां भाषायां लेखयेत् सान्यार्था ।

ब्रह्महाऽयमिति ज्ञेयो द्वेषान्मोहाद्वदेत्त यः ।
साध्यं च मोचयेत्तत्र द्रव्यहीनां तु तां विदुः ॥

उक्तं साध्यं वादिना यस्यां त्यज्यते सा भाषाऽर्थहीनेत्यर्थः ।

39320

गणिमे तुलिमे मेये तथा क्षेत्रगृहादिके ।
यत्र संख्या न निर्दिष्टा सा प्रमाणविवर्जिता ॥

गणिमं पर्णक्रमुकादि । तुलिम सुवर्णरजतादि । मेय कुडवादिना व्रीह्यादि । एव च गणिमादिसख्याहीना प्रमाणविवर्जितेत्यर्थ ।

विद्यया प्राप्तमाध्याप्तं लब्धं क्रीतं क्रमागतम् ।
तत्रैव विद्यते यत्र सा भाषा स्यादनागमा ॥
समा मासस्तथा पक्षस्तिथिर्वारस्तथैव च ।
यत्रैतानि न लिख्यन्ते लेख्यहीना तु ता विदुः ॥
लेखयित्वा तु यो भाषामनिर्दिष्टे तथोत्तरे ।
उद्दिशेत्साक्षिणः पूर्वमधिका ता विनिर्दिशेत् ॥
यत्र स्यादुभयं सर्वं निर्दिष्टं पूर्ववादिना ।
सन्दिग्धमिव लेख्येत भ्रष्टा भाषा तु ता विदुः ॥

यत्र पक्षद्वयमपि वादिनैव निर्दिष्ट स्यात्सा भ्रष्टा विदुरिति ।

पुनः स एव

भिन्नक्रमो व्युत्क्रमार्थः प्रकीर्णार्थो निरर्थकः ।
अतीतकालो निर्दिष्टः पक्षोऽनादेय इष्यते ॥

भिन्नक्रमादीना लक्षणान्याह स एव

यथास्थाननिवेशेन नैव पक्षाऽर्थकल्पना ।
शस्यते न स पक्षस्तु भिन्नक्रम उदाहृतः ॥

व्यस्ताक्षरसस्थान भिन्नक्रम इत्यर्थ ।
व्युत्क्रमार्थस्तु व्यवहितसवन्धेनाऽर्थप्रतीतिकृत् । प्रकीर्णार्थो विक्षिप्तार्थ ।

तथा

मूलमर्थं परित्यज्य तद्गुणो यत्र लिख्यते ।
निरर्थकः स वै पक्षो भूतसाधनवर्जितः ॥
भूतकालमतिक्रान्तं द्रव्यं यत्र हि विद्यते ।
अतीतकालः पक्षोऽसौ प्रमाणे सत्यपि स्मृतः ॥
यस्मिन्पक्षे द्विधा साध्यं भिन्नकालविमर्शनम् ।
विमृश्यते क्रियाभेदात्स पक्षोद्दिष्ट उच्यते ॥ इति ।

भूतसाधन मूलभूतसाधन । भूतकालोऽवधिभूत काल । तथा ।
अन्यानपि पक्षाभासान्स एवाह ।

अन्याक्षरनिवेशेन अन्यार्थगमनेन च ।
आकुलं तु भवेल्लेख्यं क्रिया चैवाकुला भवेत् ॥
उपेक्षा यत्र साध्यस्य विंशतिं दश वा समाः।
शक्तौ येन कृता वादे तस्य पक्षो मृषा भवेत् ॥
साधनं सह साध्येन निर्दिष्टं यत्र लेखयेत् ।
उक्तिक्रमविहीनत्वात्सोऽपि पक्षो न सिध्यति ॥

क्रियासाध्यं साधनं प्रमाणम् ।

भृगुरपि

उत्सृष्टं यत्र हीनेन कल्प्यं वाऽप्येकमेकतः ।
तत्र पक्षो न साध्यः स्याच्छास्त्रशिष्टविवर्जितः ॥
विरुद्धश्चाऽविरुद्धश्च द्वावप्यर्थौ निवेशितौ।
एकस्मिन् यत्र दृश्येते तं पक्षं दूरतस्त्यजेत् ॥

हीनेन हीनवादिना ।

पितामहोऽपि

परस्परविरुद्धानि यः पदानि निवेशयेत् ।
विरुद्धपदसंकीर्णा भाषा तस्य न सिध्यति ॥

कात्यायनः

आगमः परिभोगश्च व्याच्छित्तिः प्रार्थना गुणाः।
एतच्चतुष्टयं प्राहुर्भाषादोषास्त्वकारणम् ॥

आगमो धनप्राप्त्युपायः प्रतिग्रहादिः । परिभोगो यथेष्टविनियोगप्रवाहः। व्याच्छित्तिः देशविप्लवादिना भुक्तिविच्छित्तिः । प्रार्थना युक्तिभिर्भोगागमकीर्तनम् । एतदागमादिचतुष्टयं भाषाया गुणा इति प्राहुः । ये पुनरागमादयः अकारणं निवेशकारणं विना भाषायां निवेशितास्ते भाषादोषा इति प्राहुरित्यर्थः । *अतोऽत्राकांक्षितस्याऽऽपः अनाकाक्षितस्य चोद्धारः कार्यः ।*

एवंविधं पक्षं सपदि वक्तुमसमर्थं प्रत्याह बृहस्पतिः

अभियोक्ताऽप्रगल्भत्वाद्वक्तुं नोत्सहते यदा ।
तस्य कालः प्रदातव्यः कालशक्त्यनुरूपतः ॥

कात्यायनोऽपि

मतिर्नोत्सहते यत्र विवादे वक्तुमिच्छतोः ।
दातव्यस्तत्र कालः स्यादर्थिप्रत्यर्थिनोरपि ॥

सत्यनिर्णयार्थं वादिप्रतिवादिनोर्वाक्यं विलंब्याऽपि श्रोतव्यमिति तात्पर्यम् ।

अत एव नारदोऽपि

श्वो लेखनं वा लभते त्र्यहं सप्ताहमेव वा ॥ इति ।

इत्यनादेयव्यवहारादय

---

## अथोत्तरम्

तत्र बृहस्पतिः

विनिश्चिते पूर्वपक्षे ग्राह्याग्राह्यविशेषिते ।
प्रतिज्ञार्थे स्थिरीभूते लेखयेदुत्तरं ततः ॥

विनिश्चिते स्वरूपतोऽवधारिते । ग्राह्याग्राह्यविशेषित इति । उपादेयविशेषणोपादानेन हेयविशेषणत्यागेन च पूर्वपक्षे विशिष्टतया ससभ्येन प्राड्विवाकेन ज्ञापिते सति । प्रतिज्ञार्थे स्थिरे जाते उत्तरं लेखयेदित्यर्थः ।

'प्रतिज्ञादोषनिर्मुक्तमि'त्यादिपक्षलक्षणमभिधाय बृहस्पतिकात्यायनौ

यदा त्वेवंविधः पक्षः कल्पितः पूर्ववादिना ।
दद्यात्तत्पक्षसंबद्धं प्रतिवादी तदोत्तरम् ॥

याज्ञवल्क्यः

श्रुतार्थस्योत्तरं लेख्यं पूर्वावेदकसन्निधौ ।

श्रुतार्थस्य श्रुतभाषार्थस्य प्रतिवादिना उत्तरं लेख्यम् ।

अत्र विशेषमाह हारीतः

साधारणी च या भूमिर्यच्च द्रव्यं गणाश्रितम् ।
एकस्य प्रार्थ्यमानस्य न वदेदुत्तरं बुधः ॥ इति ।

यदा पुनः शालीनत्वादिना प्रतिवादी तदैवोत्तरं दातुमसमर्थः तदा समयमपि लभते।

यथा च बृहस्पतिः

शालीनत्वाद्भयार्तो वा प्रत्यर्थी स्मृतिविभ्रमात् ।
कालं प्रार्थयते यत्र तत्रेमं लब्धुमर्हति ॥
एकाहत्र्यहपंचाहसप्ताहं पक्षमेव वा ।
मासं ऋतुत्रयं वर्षं लभते शक्त्यपेक्षया ॥

कात्यायनः

श्रुत्वा लेख्यगतं त्वर्थं प्रत्यर्थी कारणाद्यदि ।
कालं विवादे याचेत तस्य देयो न संशयः ॥
सद्यो वैकाहपंचाहौ त्र्यहं वा गुरुलाघवात् ।
लभेन्मासं त्रिपक्षं वा सप्ताहं वा ऋणादिषु ॥

अत्र विषयव्यवस्थामाह स एव ।

सद्यःकृतेषु कार्येषु सद्यएव विवादयेत् ।
कालातीतेषु वा कालं दद्यात्प्रत्यर्थिने प्रभुः ॥

तथा

सद्यःकृते सद्योवादः समातीते दिनं क्षिपेत् ।
षडाब्दिके त्रिरात्रं तु सप्ताहं द्वादशाब्दिके ॥
विंशत्यब्दे दशाहं तु मासार्द्धं वा लभेत सः ।
मासं त्रिंशत्समातीते त्रिपक्षं परतो लभेत् ॥
अस्वतन्त्रजडोन्मत्तबालदीक्षितरोगिणाम् ।
कालं संवत्सरादर्वाक् स्वयमेव यथेप्सितम् ॥
कालं शक्तिं विदित्वा वै कार्याणां च बलाबलम् ।
अल्पं वा बहुकालं वा दद्यात्प्रत्यर्थिने विभुः ॥
यो वा यस्मिन्समाचारः पारंपर्यक्रमागतः ।
तं प्रतीक्ष्य यथान्यायमुत्तरं दापयेन्नृपः ॥
दिगन्तरं प्रपन्ने वा अज्ञाताथ च वस्तुनि ।
मूलं वा साक्षिणो वापि परदेशस्थिता यदा ॥
तत्र कालो भवेत्पुंसां स्वदेशे वक्तुमागमात् ।
दिनं मासार्द्धमासौ तु ऋतुः संवत्सरोऽथवा ।
क्रियास्थित्यनुरूपस्तु देयः कालः परेण तु ॥

समातीते संवत्सरातीते । यो यस्मिन्निति यस्मिन् देशे कुलादौ वा । मूलमिति विवादपदीभूतं वस्तु अस्माल्लब्धमनेन वा क्रीतमित्यभियुक्तोऽयं कथयति स मूलपदेनोच्यते । वक्तुं उत्तरं गदितुं कालो भवेत् कालो देय इत्यर्थः । आगमात् मूलस्य साक्षिणां च देशान्तरस्थितानामागमनपर्यन्तम् । क्रियास्थितिः कार्यगौरवलाघवस्थितिः ।

तथा

संवत्सरं चामनस्को जरो व्याधिप्रपीडितः ।
दिगन्तरात्पृच्छनीये वस्तुन्यकृतनिर्णयः ॥

दिगन्तरादिति ल्यब्लोपे पञ्चमी । तेन तदाऽऽसाद्य । दिगन्तरं च संवत्सरसमाप्यगमागतं विवक्षितं संवत्सरं प्रतीक्षणीय इत्यर्थः ।

कालदानापवादमाह याज्ञवल्क्यः

साहसस्तेयपारुष्यगोऽभिशापात्यये स्त्रियाम् ।
विवादयेत्सद्य एव कालोऽन्यत्रेच्छया स्मृतः ॥

साहसं विषशस्त्रादिना व्यापादनादि। स्तेयं चौर्यम्। पारुष्यं वाग्दण्डपारुष्यम्। गौर्गोघ्नी। अभिशापः पातकाऽभिशंसनम्। अत्ययः विवादविषयप्राणधनाऽतिपातः तस्मिन्। स्त्रियां कुलस्त्रियां चरित्रविवादे दास्यां स्वत्वविवादे। विवादयेत् उत्तरं दापयेत्। अन्यत्र ऋणादानादिषु। इच्छयेति वादिप्रतिवादिसभ्यसभापतीनामिति शेषः।

बृहस्पतिकात्यायनौ

साहसस्तेयपारुष्यगोऽभिशापे तथात्यये।
भूमौ विवादयेत्क्षिप्रमकालेऽपि बृहस्पतिः॥

अकालोऽत्र विवादकालः। यथा आयुधीयानामायुधसंग्रहणादिकालः।

नारदः

गोभूहिरण्यस्त्रीस्तेयपारुष्यात्ययिकेषु च।
साहसेष्वभिशापे च सद्य एव विवादयेत्॥

आत्ययिकस्वरूपं चाह   कात्यायनः

व्यपैति गौरवं यत्र विनाशः स्याद्ध्रुवं तथा।
कालं तत्र न कुर्वीत कार्यमात्ययिकं हि तत्॥ इति।

पुनः कात्यायनः

धेनावनडुहि क्षेत्रे स्त्रीषु प्रजनने तथा।
न्यासे याचितके चैव तथैव क्रयविक्रये॥
कन्याया दूषणे स्तेये कलहे साहसे निधौ।
उपधा कूटसाक्ष्ये च सद्य एव विवादयेत्॥

प्रजननमत्र विवाहः। प्रसूतिसमर्थवडवादीत्यन्ये। उपधौ कूटनाणकादिव्यवहाररूपे छले इति। उपधिर्व्याज इति पारिजातः। भयादिवशादभ्युपगतमुपधिरिति चन्द्रिकाकारः।

उत्तरलक्षणमाहतुर्नारदप्रजापती

पक्षस्य व्यापकं सारमसन्दिग्धमनाकुलम्।
अव्याख्यागम्यमित्येतदुत्तरं तद्विदो विदुः॥ इति।

पक्षस्य पूर्वपक्षस्य व्यापकमाच्छादकं निराकरणसमर्थमित्यर्थः। सारं न्याय्यम्। असन्दिग्धं खण्डश्लेषादिरहितम्। अनाकुलं पूर्वापराविरुद्धम्। अव्याख्यागम्यं सुबोधम्।

नारदः

पूर्वपक्षार्थसंबद्धं व्यापकं नातिभूरि च।
सारभूतमसन्दिग्धमपक्षेकांशमम्भवम्॥
अर्थिश्रममगूढार्थं देयमुत्तरमीदृशम्॥ इति।

अपक्षैकांशसम्भवं अनवशेषितस्वपक्षैकदेशम् । अर्थिश्रवं अर्थिश्रुतम् ।। तद्भेदानाह
कात्यायनः

सत्यं मिथ्योत्तरं चैव प्रत्यवस्कंदनं तथा ।
पूर्वन्यायविधिश्चैवमुत्तरं स्याच्चतुर्विधम् ॥

बृहस्पतिरपि

मिथ्या संप्रतिपत्तिश्च प्रत्यवस्कंदनं तथा ।
प्राङ्न्यायश्चोत्तराः प्रोक्ताश्चत्वारः शास्त्रवेदिभिः ॥ इति ।।

सत्योत्तरस्वरूपमाह बृहस्पतिः

श्रुत्वाभियोगं प्रत्यर्थी यदि तत्त्वं प्रपद्यते ।
सा तु संप्रतिपत्तिः स्याच्छास्त्रविद्भिरुदाहृता ॥

तदेवं सद्रूपतरम् ।

कात्यायनोऽपि

साध्यस्य सत्यवचनं प्रतिपत्तिरुदाहृता ॥ इति ।

यथा सुवर्णशतं मदां धारयत्ययमित्यभियुक्ते सत्यं धारयतीत्युत्तरम् । मिथ्योत्तरलक्षणमाह
बृहस्पतिः

अभियुक्तोऽभियोगस्य यदि कुर्यात्तु निह्नवम् ।
मिथ्या तत्तु विजानीयादुत्तरं व्यवहारतः ॥

प्रजापतिरपि

यावदावेदितं किंचिन्मत्संबद्धमिहार्थिना ।
तावत्सर्वं मम मतं नेति मिथ्योत्तरं स्मृतम् ॥ इति ।

कात्यायनोऽपि

श्रुत्वा भाषार्थमन्यस्तु यदा तं प्रतिषेधयेत् ।
अर्थतः शब्दतो वाऽपि मिथ्या तज्ज्ञेयमुत्तरम् ॥

तदाह व्यासः

मिथ्यैतन्नाभिजानामि तदा तत्र न सन्निधिः ।
अजातश्चास्मि तत्काल इति मिथ्या चतुर्विधम् ॥

मिथ्यैतदिति शब्दस्योदाहरणं अवशिष्टमर्थत इत्यस्य । प्रत्यवस्कंदनलक्षणमाह बृहस्पतिः

अर्थिना लेखितो योऽर्थः प्रत्यर्थी यदि तं तथा ।
प्रपद्य कारणं ब्रूयादाधर्यं भृगुरब्रवीत् ॥

यथा—मदीयमुपकरणमनेन गृहीतमित्युक्ते सत्यं गृहीतं प्रतिदत्तं प्रतिग्रहादिलब्धमिति या

कारणाभिधानेन यदि पूर्वपक्षमवस्कंदति प्रत्यर्थी तदा तदुत्तरं प्रत्यवस्कंदनं भवतीति। प्राङ्न्याय-लक्षणमाहतुर्बृहस्पतिकात्यायनौ

आचारेणावसन्नोऽपि पुनर्लेखयते यदि ।
सोऽभिधेयो जितः पूर्वं प्राङ्न्यायस्तु स उच्यते ॥

आचारेण व्यवहारधर्मेणावसन्नो लब्धभङ्गोऽर्थी यदि पुनर्लेखयेत्पुनरभियोगं कृत्वा सभान्तरे भाषां लेखयेत् । सोऽभिधेय इत्यादि । सोऽर्थी पूर्वमस्मिन्विषये मया जित इति यत्राभिधीयते स प्राङ्न्याय इत्यर्थः ।

हारीतोऽपि

अस्मिन्नर्थे ममाऽनेन वादः पूर्वमभूत्तदा ।
जितोऽयमिति चेद्ब्रूयात्प्राङ्न्यायः स्यात्तदुत्तरम् ॥ इति ।

संकीर्णोत्तरविषये व्यासः

मिथ्योत्तरं कारणं च स्यातामेकत्र चेदुभे ।
सत्यं वापि सहान्येन तत्र ग्राह्यं किमुत्तरम् ॥
मिथ्याकारणयोर्वापि ग्राह्यं कारणमुत्तरम् ।
यत्प्रभूतार्थविषयं यत्र वा स्यात्क्रियाफलम् ॥
उत्तरं तत्र तज्ज्ञेयमसंकीर्णमतोऽन्यथा ।

मिथ्याकारणोत्तरसांकर्ये कारणोत्तरावलंबनेन निर्णयः । यथा मदीया गौरमुष्मिन्काले नष्टा सा चैतस्य गृहे तिष्ठतीत्युक्ते मिथ्यैतद्वदसि तत्कालात्प्रागपि मद्गृहे स्थिता मद्गृहे जाता वेति । अथवापिशब्दाभ्यां सत्यमिथ्याकारणोत्तराणामपि संकरे कारणोत्तरमेव ग्राह्यमिति दर्शितम् । एवं च प्रतिवादिन एव क्रिया देयेत्यर्थः । यथा पट्टयभियोगे मिथ्यैतत् चत्वारिंशद्गृहीताः विंशतिर्दत्ता विंशतिं धारयामीति । यत्प्रभूतार्थविषयमिति । एकं प्रभूतार्थविषयमिति । एकं प्रभूतार्थविषयमुत्तरमितरदन्यथा तत्र प्रभूतार्थविषयमुपादाय निर्णेतव्यं । यथा शताभियोगेऽशीतिर्मिथ्या विंशतिमात्रं गृहीतं तच्च दत्तमित्यत्र मिथ्यांशस्य प्रभूतार्थविषयत्वान्मिथ्योत्तरमेव ग्राह्यं तेन पूर्ववादिन एव क्रिया देयेत्यर्थः ।

एवं मिथ्याप्राङ्न्यायसंकरे कारणप्राङ्न्यायसंकरे च प्रभूतार्थविषयमेव ग्राह्यमित्यर्थः । अतोऽन्यथा संकीर्णमुत्तरं भवतीति शेषः । यत्र वा स्यात् क्रियाफलमिति । यत्र मिथ्याकारणोत्तरादिसंकरे लिखितादिनिर्णयसाधनं भवति तदुत्तरं अप्रभूतार्थविषयमपि पूर्वं ग्राह्यमित्यर्थः ।

कात्यायनः

प्रपद्य कारणं पूर्वमन्यं गुरुतरं यदि ।
प्रतिवाक्यगतं ब्रूयात्साध्यमेतद्धि नेतरत् ॥

आदौ यदा लघुकारणमुक्त्वा ततोऽपरं गुरुकारणमभिधत्ते तदा गुरुकारणोत्तरमादरणीयं नेतरदिति ।

---

## अथोत्तराभासाः

तत्र बृहस्पतिः

प्रकृतादन्यन्मध्यस्थं न्यूनाधिकमसङ्गतम् ।
अव्याप्यसारं सन्दिग्धं प्रतिपक्षं न लेखयेत् ॥

प्रकृतादन्यन् अर्थान्तरम् । यथा मदीयोऽश्वोऽपहृत इत्यभियोगे एतदीया गौर्मया क्रीता तद्धनं दत्तमित्यादि । मध्यस्थं यथा सुवर्णशतापहाराभियोगे बहूनि सुवर्णानि पूर्वं मया दत्तानीत्यादि, प्रकृतादन्यद्यक्तव्यमिति कश्चित्स्याः तत्र उत्तरविभाजकोपाधिमत्त्वेनाप्रतिसंहितमित्यर्थः ।

न्यूनं साध्यमात्राभिधानं साधनमात्राभिधानं वा । अधिकं उपयुक्तादप्यधिकम् । यथा श्वानामपहारस्याभियोगे नैवं तेषां दत्तत्वात्क्रीतत्वाच्चेति । असंगतमपार्थकं अव्यापि सकलपक्षानाच्छादकं यथा अश्वद्वयापहाराभियोगे एकोऽश्वो दत्त इति । असारं न्यायविरुद्धम् । यथा सुवर्णशतमनेन वृद्ध्या गृहीतं वृद्धिरेव दत्ता न मूलमित्यभियोगे सत्यं वृद्धिर्दत्ता न मूलं गृहीतमिति । सन्दिग्धं व्याख्याव्यतिरेकेणानवगतोद्देश्यार्थकं । यथाऽभियोगे मयागृहीतास्ताः सम्प्रति दातुमहमलमिति । अत्र मया गृहीता इत्यत्राकारप्रश्लेषस्तदभावश्च । अलमिति विधिर्निषेधश्च ।

कात्यायनः

सन्दिग्धमन्यत् प्रकृतादत्यल्पमतिभूरि च ।
पक्षैकदेशव्यापीह तत्तु नैवोत्तरं भवेत् ॥
यद्व्यस्तपदमव्यापि निगूढार्थं तथाऽऽकुलम् ।
व्याख्यागम्यमसारं च नोत्तरं स्वार्थसिद्धये ॥
पक्षैकदेशे यत्सत्यमेकदेशे च कारणम् ।
मिथ्या चैवैकदेशे च संकरात्तदनुत्तरम् ॥ इति ।

निगूढार्थं सुवर्णशताभियोगे किमहमेव धारयामीत्यत्र ध्वनिना प्राड्विवाकः सभ्यो वा अर्थी वान्यस्मै धारयतीति सूचना । एके देशे च यत्सत्यमित्यादिना संकीर्णोत्तरमनुत्तरत्वेन प्रतिपादितम् । तदुदाहरणं कश्चिद्वदति यथा शताभियोगे दत्ते यदि वदति मया शतं न गृहीतमेव किन्तु पंचाशत्पणा गृहीतास्तत्रापि पंचविंशतिः पणाः परिशोधिताः पंचविंशतिपणान् धारयामीति । अत्र पंचाशत्पणेषु मिथ्यात्वं पंचविंशतिपणेषु संप्रतिपत्तिः पंचविंशतिपणेषु कारणमिति भवति संकीर्णोदाहरणं इदं चोत्तराभासत्वाद्धेयमिति तदयुक्तम् । किं न भवत्येवैतद् यत्किंचिद्गृह्यते किंचिच्च न गृह्यते गृहीतमपि वा किंचित्परिशोध्यते किंचिच्च धार्यत इति भूतमपि वा न वक्तव्यम् । तत्र तावन्न भवतीति वक्तुं न शक्यते । एवंविधार्थस्य लोके बहुलमुपलम्भात् । न च तथाभूतमपि न वक्तव्यम् । अन्यथाभिधाने मिथ्याभिधानप्रसंगात् । किं च यदा शतं पणा गृहीताः पंचाशत् पणाः शोधिताः तदा शताभियोगे किं वक्तव्यं न तावन्मिथ्यैतदिति शतस्य गृहीतत्वात् । नापि परिशोधिता इति शतस्यापरिशोधनात् । तेनावश्यं संकीर्णोत्तरं वक्तव्यम् ।

अथोच्यते नोत्तरद्वयेन साकर्यं किन्तु यथोदाहृतैरेव सत्यमिथ्याकारणरूपैरुत्तरै । न च तत्रो त्तरान्तराभाव । एतावदेव हि वक्तु युज्यते यन्मया शत न गृहीतमिति । एतावता च मिथ्याभिधान न भविष्यति । शतस्यागृहीतत्वादेव । नापि सकीर्णत्वम् । मिथ्यामात्रेणोत्तरत्वात् । तदुक्तम् । न ह्युत्तरातर सम्यगस्तीत्यनेनानुत्तरेण भवितव्यम् । नहि प्रामाणिकानामेव धर्मव्यव हारे प्रवृत्ति । अप्रामाणिकानामपि धर्मव्यवहारिणामुत्तरलक्षणापरिज्ञानाद्यथाभूतार्थाभिधाने को दोष । किं च यत्र सुवर्णरजत ऋणत्वेन केनापि गृहीत्वा रजत परिशोधित सुवर्ण धार्यते ताम्र न गृहीतमेवेति वस्तु वृत्त तत्र यदि धनिकस्त्रितयमपि प्रार्थयते तदाऽधमर्णेन किं वक्तव्य न तावत्सुवर्ण रजत ताम्र च न मया गृहीतमिति शक्यते वक्तुम् । गृहीतस्यापरिशोधितस्य सुवर्णस्याग्रहणाभिधाने सुवर्णस्तेयप्रसगात् । तेनावश्यमेव वक्तव्य यत्ताम्र न गृहीतमेव रजत परिशोधित सुवर्ण च धरयामीति साकर्येऽपि तेन तेनोत्तरेण तस्य तस्याशस्य निरसने कृत्स्नोत्तरसमुदायस्य कृत्स्नपक्षप्रतिपक्षभावसभवात् । कथ तर्हि सकराचदनुत्तरमित्युत्तरत्वाभिधानमिति चेत् । उच्यते युगपत्क्रियाप्रवर्त्तकत्वाभावात् । एतदभिप्रेत्यैव सकराचदनुत्तरमित्युक्त्वा **कात्यायनेनो**क्त

न चैकस्मिन्विवादे तु क्रियास्याद्वादिनोर्द्वयो. ।
न चार्थसिद्धिरुभयोर्न चैकत्र क्रियाद्वयम् ॥ इति ।

अयमर्थ —क्रियालिखितादिप्रमाण तत्प्रत्यवस्कन्दने प्राङ्न्याये च प्रतिवादिन एव भवति । मिथ्योत्तरे तु वादिन एव सत्ये न कस्यापीति वक्ष्यते एव च यत्र सत्योत्तरेण सह मिथ्यादीना त्रयाणा सकरस्तत्र प्रत्यर्थिन प्रमाणद्वयमर्थिनश्चैक प्राप्नोति । यत्र सत्यमिथ्येतरयो सकरस्तत्र प्रत्यर्थिन एव प्रमाणद्वय यत्र पुनर्मिथ्याकारणयोर्मिथ्याप्राङ्न्याययोर्वा तत्रार्थिप्रत्यर्थिनोरेकमेक प्रमाण प्राप्नोति न च यथाप्राप्तमेवास्त्विति वाच्य प्रमाण हि साध्य सिद्ध्यर्थं क्रियते एकस्मिन्व्यवहारे चैकमेव साध्यमेकस्य वादिन तेन नैकत्र द्वयो प्रमाणमेकस्य वा प्रमाणद्वय भवितुमर्हति । द्वयो साध्याभावात् । एकस्य साध्यस्य चैकेनैव प्रमाणेन सिद्धावन्यस्य वैयर्थ्यात् । सत्यस्य उत्तरातरै सह सकरे यद्यपि नाय दोषस्तथाप्येकस्मिन्व्यवहारे पादचतुष्टये तदर्द्धे च समाप्तिर्विरुद्धेवेति तत्राप्यनुत्तरत्वमेव तस्मा साधूक्त सकरात्तदनुत्तरमिति एव च क्रमेणोत्तरचमगम्यते सतश्च मिथ्याकारणयोर्वापि ग्राह्य कारणमुत्तरमित्यादिना **व्यास**वचने कारणोत्तरादेर्ग्राह्यत्वाभिधान प्राथम्याभिप्रायेण न तु मिथ्योत्तरादिकमाश्रित्य निर्णय एव न कार्य इत्यभिप्रायेण अन्यथा तत्तदर्शे सन्देहतादवस्थ्यप्रसगात् । अभियुक्तेन स्वाभियोगपरिहारात् प्राक् प्रत्यभियोगो न कार्य इत्याह **याज्ञवल्क्यः**

अभियोगमनिस्तीर्य नेनं प्रत्यभियोजयेत् ।

अभियोगमपराधम् । अर्थिविषये **स** एव ।

अभियुक्त च नान्येन नोक्त विप्रकृतिं नयेत् ॥ इति ।

अन्येन अर्थिना अभियुक्तं तदभियोगपरिहारादर्वागन्योऽर्थी नाभियुंजीत । विप्रकृतिं स्वभावान्यत्वम् । आवेदनसमये यथाऽऽवेदितं भाषासमयेऽपि तथैव लेखयेदित्यर्थः । अन्यथा हीनवादित्वप्रसंगात् । अत्र च

प्रत्यर्थिनोऽग्रतो लेख्यं यथावेदितमर्थिना ।

इत्यनेन प्राचीनयाज्ञवल्क्यवचनेन नोक्तमित्यादि तद्वचनं न पुनरुक्तम् । एकस्य धर्मिव्यत्यासविषयत्वादन्यस्य प्रकारव्यत्यासविषयत्वात् । यथा सुवर्णादि लेखयित्वा रूप्यं लेखयति यथा वात्रैव क्रयमादौ लेखयित्वा दानमनंतरमिति । प्रत्यभियोगप्रतिप्रसवमाह स एव

कुर्यात्प्रत्यभियोगं च कलहे साहसेषु च ।

कलहे पारुष्यद्वये साहसेषु विषशस्त्रादिनिमित्तप्राणव्यापादनादिषु अभियुक्तः प्रत्यभियोगसंभवे स्वाभियोगमनिस्तीर्यापि अभियोक्तारं प्रत्यभियोजयेदित्यर्थः ।

अत्र प्रत्यभियोगप्रतिप्रसवे यद्यपि युगपन्निर्णयानुपपत्तिः स्वल्पैव(?सामान्यैव) तथाप्यनेनाहं ताडितः शप्तो वेत्यभियोगे मत्यर्थ्यपि यद्यनेनाहं पूर्वं ताडितः शप्तो वेत्यभियोगं करोति तदा दण्डाल्पत्वं गुरुदण्डनिवृत्तिर्वा भवतीति तात्पर्यम् ।

अत एव नारदः

पूर्वमाक्षारयेद्यस्तु नियतं स्यात्स दोषभाक् ।
पश्चाद्यः सोऽप्यसत्कारी पूर्वे तु विनयो गुरुः ॥

यदा तु युगपदेव द्वयोस्ताडनादिप्रवृत्तिः तत्राधिकदण्डनिवृत्तिः ।

तदाह स एव

पारुष्ये साहसे वापि युगपत्संप्रवृत्तयोः ।
विशेषश्चेन्न लभ्येत विनयः स्यात्समस्तयोः ॥ इति ।

अत्र बृहस्पतिः

पूर्वपक्षे यथार्थं तु न दद्यादुत्तरं तु यः ।
प्रत्यर्थी दापनीयः स्यात्सामादिभिरुपक्रमैः ॥
प्रियपूर्वं वचः साम भेदस्तु भयदर्शनम् ।
अर्थापकर्षणं दण्डस्ताडनं बन्धनं तथा ॥
उपायैश्चोद्यमानस्तु न दद्यादुत्तरं तु यः ।
अतिक्रान्ते सप्तरात्रे जितोऽसौ दण्डमर्हति ॥
उन्मत्तमत्तनिर्धूता महापातकदूषिताः ।
जडापविद्धबालाश्च विज्ञेयास्ते निरुत्तराः ॥

निर्धूताः उद्भूतापमानाः । उद्भवश्च व्यवहारायाज्ञवाप्रायको विवक्षितः । निरुत्तराः

व्यवहारायोग्यतया नैते झटिति स्वकर्तृकमुत्तरं कारयितव्याः। किन्तु पूर्वोक्त 'सद्यःकृतेषु कार्येषु सद्य एव विवादयेदि'त्यादि 'तं प्रतीक्ष्य यथान्यायमुत्तरं दापयेन्नृप' इत्यन्त **कात्यायन**वचनानुसारेण कालविलंबेन।

**कात्यायनः**

उभयोर्लिखिते वाक्ये प्रारब्धे तत्त्वनिर्णये।
अनुक्तं तत्र यो ब्रूयात्स तदर्थात्तु हीयते॥
पूर्वोत्तरे निविष्टे तु विचारे संप्रवेशिते।
निर्णिक्तं तु तयोस्तत्र वचनं वादिनोर्भृगुः॥
मोहाद्वा यदि वा शाठ्याद्यन्नोक्तं पूर्ववादिना।
उत्तरान्तर्गतं वापि तद्ग्राह्यमुभयोरपि॥
श्रुतं च लेखितं चैव चिन्तितं तद्विशोधितम्।
प्रथमेऽह्नि तस्यैव विवादविधिरुच्यते॥

*तदर्थात् अनुक्तार्थात् पूर्वोत्तरे भाषायामुत्तरे च निर्णिक्तं शोधितम्।* शाठ्यमत्र मोहेतरतात्कालिकदैविकाविर्भावप्रतिबन्धरूपं विवक्षितम्। तेन भाषासमये उत्तरसमये वा मोहादिना यन्नोक्तं तद्यदि विचारकाले केनचित्प्रकारेण व्यक्तं भवति तदा वादिभ्यां भाषान्तर्गतमुत्तरान्तर्गतं च कार्यं मोहादिव्यतिरेकेण तु परित्यक्तं न ग्राह्यमेव। एवं च 'प्रतिज्ञां भूयेद्वादी-यावन्नोत्तरदर्शन'मित्यपि मोहादित्युक्तपूरणाभिप्राय इत्युत्तरं विचारारम्भपर्यन्तसमयपरं च।

---

## अथ प्रत्याकलितम्

तत्र **मनुः**

बाह्यैर्विभावयेल्लिङ्गैर्भावमन्तर्गतं नृणाम्।
स्वरवर्णेङ्गिताकारैश्चक्षुषा चेष्टितेन च॥
आकारैरिङ्गितैर्गत्या चेष्टया भाषणेन च।
नेत्रवक्त्रविकाराभ्यां ज्ञायतेऽन्तर्गतं मनः॥

*स्वरादिभिर्बाह्यैर्लिङ्गैर्विवादिसाक्ष्यादीनां भावमभिप्रायं विभावयेत् निश्चिनुयात्।* स्वरवर्णेङ्गिताकाराः स्वरवर्णेङ्गितवैकृतानि। तत्र स्वरविकारः गद्गदतादिः। वर्णविकारः गात्ररूपान्यथाभावः। इङ्गितवैकृतं च बुद्धिपूर्वकं रोमाञ्चबाहुकम्पादि। चक्षुषा स्निग्धादिना। चेष्टितेन बुद्धिकृतशरीरतदवयवयोश्चलनेन विकृतगतिहस्तनिष्पेषणादिना। लोके स्वरादीनामन्तर्गतमनःप्रकाशने सामर्थ्यं प्रसिद्धमित्याह—आकारैरित्यादि आक्रियन्ते विक्रियन्त इत्याकाराः इङ्गितादयः।

गतिरत्र स्खलन्ती सा चास्वाभाविकी भाषितं पूर्वापरविरुद्धं वचनं वक्त्रविकारः आस्यशोषादिः।

**श्रीरामायणे**

आकारश्छाद्यमानोऽपि न शक्यो विनिगूहितुम्।
बलाद्धि विवृणोत्येव भावमन्तर्गतं नृणाम्॥

आकारः। **कात्यायनः**

आकारेङ्गितचेष्टाभिस्तस्य भावं विचारयेत्।
प्रतिवादी भवेद्धीनः सोऽनुमानेन लक्ष्यते॥
कम्पः स्वेदोऽथ वैवर्ण्यमोष्ठशोषावमर्शने।
भूलेखनं स्थानहानिस्तिर्यगूर्ध्वनिरीक्षणम्॥
स्वरभेदश्च दुष्टस्य चिह्नमाहुर्मनीषिणः॥ इति।

आकारः क्रोधादिजनितविकारः। इङ्गितचेष्टे अपि विकृते। प्रतिवादीत्युपलक्षणम्। ओष्ठावमर्शनं जिह्वया ओष्ठप्रान्तलेहनम्। **याज्ञवल्क्यः**

देशाद्देशान्तरं याति सृक्वणी परिलेढि च।
ललाटं स्विद्यते चास्य मुखं वैवर्ण्यमेति च॥
परिशुष्यत् स्खलद्वाक्यो विरुद्धं बहु भाषते।
वाक्चक्षुः पूजयति नो तथोष्ठौ निर्भुजत्यपि॥
स्वभावाद्विकृतिं गच्छेन्मनोवाक्कायकर्मभिः।
अभियोगे च साक्ष्ये च दुष्टः स परिकीर्तितः॥

सृक्वणी तुण्डप्रान्तौ परिलेढि जिह्वाग्रेण घट्टयति। परिशुष्यत्स्खलद्वाक्यः परिशुष्यत्सगद्गदं स्खलद्व्यत्यस्तं वाक्यं यस्य सः। तथा वाक्चक्षुः पूजयति नो परोक्तं वाचं प्रतिवचनदानेन चक्षुर्वा प्रतिवीक्षणेन न परिगृह्णाति। निर्भुजति वक्रयति। इति **दुष्टलक्षणम्**।

---

## अथ हीनाः

तत्र **मनुः**

अदेशं यश्च दिशति निर्दिश्यापह्नुते च यः।
यश्चाधरोत्तरानर्थान्विगीतान्नावबुध्यते॥
अपदिश्यापदेशं च पुनर्यस्त्वपधावति।
सम्यक् प्रणिहितं चार्थं पृष्टः सन्नाभिनन्दति॥

असंभाष्ये साक्षिभिश्च देशे संभाषते मिथः ।
निरुच्यमानं प्रश्नं च नेच्छेद्यश्चापि निष्पतेत् ॥
ब्रूहीत्युक्तश्च न ब्रूयादुक्तं च न विभावयेत् ।
न च पूर्वापरं विद्यात्तस्मादर्थात्स हीयते ॥
ज्ञातारः सन्ति मेत्युक्त्वा दिशेत्युक्तो दिशेन्न यः ।
धर्मस्थः कारणैरेतैर्हीनं तमपि निर्दिशेत् ॥
अभियोक्ता न चेद्ब्रूयाद्बद्ध्यो दण्ड्यश्च धर्मतः ।
न चेत् त्रिपक्षात्प्रब्रूयाद्धर्मं प्रति पराजितः ॥ इति ।

अदेशं यत्रार्थिप्रत्यर्थिनौ न तस्मिन्काले स्थितौ तं एकान्तादिकं वा अथवा अर्थिप्रत्यर्थिगमनानर्हो देशस्तं देशं विचाराय गन्तुं भाषते। निर्दिश्य देशादिकमुक्त्वा पश्चान्न मयैतदुक्तमित्यपह्नुते। अधरोत्तरानर्थान् स्वोदीरितपूर्वापरवाक्यार्थान्विगीतान् विरुद्धानायबुध्यते। अपदिश्य उपन्यस्य अपदेशं व्याजं अवधावति अपसरति। सर्वज्ञनारायणस्तु बहुविधमपदिश्योक्त्वा पुनः स्वयमेवावधारणादयमेवात्र हेतुर्मोह इति तमेव वदतीत्याह। सम्यगित्यादि। सम्यगनाकुलं प्रणिहितं निश्चितमुक्तं प्रतिपृष्टः अत्र किं वदसि केन वा प्रमाणेन स्वपक्षं साधयसीति स्थेयेनोक्तो नाभिनन्दति नोत्तरविषयीकरोति। असभाष्ये सभाषानर्हे एकान्तादौ देशे नेच्छेत् परेण निरुच्यमानं प्रश्नमाकलय्य अनिच्छाविभावकं कोलाहलादि कुर्यात्। निष्पतेत् सभातः पलायेत्। न ब्रूयात् चिन्तयन्नवतिष्ठेत्। न विभावयेन्न वा कुर्यात्। न च पूर्वापरं इदं प्राग्वाच्यमिदं पश्चादिति न जानीयात्। तस्मात्प्रक्रान्तादर्थात्। ज्ञातारः साक्षिणः, ज्ञातृपदं प्रमाणपरं। मेत्युक्त्वेतिच्छान्दसः सन्धिः। धर्मस्थः धर्माधिकरणस्थो राजादिः कारणैरेतैः प्रागुक्तैश्च हीनं पराभियोगप्राप्तम्। 'अभियोक्ता न चेद्ब्रूयादि'त्यत्र पूर्वोक्तं ज्ञातृपदमर्थवशाद्विभक्तिविपरिणामेन सम्बन्ध्यते ज्ञातॄनिति। वध्यः वधार्हे विषये दण्ड्यो दण्डार्हे। ताडनादिवध्य इत्यन्ये। अभियुक्तेन प्रमाणे वाच्ये विशेषमाह। न चेत् त्रिपक्षादिति। त्रिपक्षादर्वाक् यदि साक्षिणो न ब्रूयात्तदा पराजितो भवतीति वध्यो दण्ड्यश्चेत्यर्थप्राप्तमेव। एतच्च प्रत्यर्थिविषयम्। अर्थिना तु सद्य एव वाच्याः। 'ततोऽर्थी लेखयेत्सद्यः प्रतिज्ञातार्थसाधनमि'ति याज्ञवल्क्यवचनात्।

नारदकात्यायनौ

न परेण समुद्दिष्टानुपेयात्साक्षिणो रहः।
भेदयेच्चैव नान्येन हीयेतैवं समाचरन् ॥

साक्षिणो नोपेयात् उपजापार्थं नोपगच्छेत्। भेदयेच्चैव नान्येन अन्यद्वारा साक्षिभेदं न कुर्यादित्यर्थः।

**याज्ञवल्क्यः**

सन्दिग्धार्थं स्वतन्त्रो यः साधयेद्यश्च निष्पतेत् ।
न चाहूतो वदेत्किंचिद्धीनो दण्ड्यश्च स स्मृतः ॥

सन्दिग्धार्थं अधर्मणेणानङ्गीकृतमेव यः स्वतन्त्रः विषयसबन्धप्रगिरयुपायनिरपेक्षः साधये-दासेधादिना गृह्णीयात् । यद्वा स्वतन्त्रो राजनिवेदननिरपेक्षः ।

अत एव **नारदः**

अनिवेद्य तु यो राज्ञे सन्दिग्धेऽर्थे प्रवर्तते ।
प्रसह्य स विनेयः स्यात् स चाप्यर्थो न सिध्यति ॥ इति ।

पत्रलिखितं पूर्वपक्षमन्यथा यदन्हीनः स्यादित्याह **कात्यायनः**

लेखयित्वा तु यो वाक्यं न्यूनमप्यधिकं पुनः ।
वदेद्वादी स हीयेत नाभियोगं तु सोऽर्हति ॥
न मयाभिहितं कार्यमभियुज्य परं वदेत् ।
विब्रुवंश्च भवेदेवं हीनं तमपि निर्दिशेत् ॥

अभियोगः पूर्वपक्षस्तं कर्तुं नार्हतीत्यर्थः ।

**नारदः**

पलायतेऽभियुक्तश्च मौनी साक्षिपराजितः ।
स्वयमभ्युपपन्नश्च अवसन्नश्चतुर्विधः ॥
अन्यवादी क्रियाद्वेषी नोपस्थाता निरुत्तरः ।
आहूतप्रपलायी च हीनः पञ्चविधः स्मृतः ॥
पूर्ववादं परित्यज्य योऽन्यमालंबते नरः ।
वादसंक्रमणाज्ज्ञेयो हीनवादी स वै नरः ॥
यमर्थमभियुञ्जीत न तं विप्रकृतिं नयेत् ।
नान्यत्पक्षान्तरं गच्छेद्गच्छन्पूर्वात्स हीयते ॥
सापदेशं हरेत्कालमब्रुवंश्चापि संसदि ।
उक्त्वा वचो विब्रुवंश्च हीयमानस्य लक्षणम् ॥
आहूतो यः पलायीत प्राप्तश्च विवदेन्न यः ।
विनेयः स भवेद्राज्ञा हीन एव विवादतः ॥ इति ।

हीनः पञ्चविध इत्यत्र पञ्चविधत्वकथनमेतेषामुत्तरोत्तरं हीनताधिक्यज्ञापनार्थं न पञ्च-विधयेव हीन इत्यवधारयितुम् । विधान्तरतोऽपि हीनानां स्मरणात् । अत एवोत्तरदण्डाधिक्यमाह

कात्यायनः

अन्यवादी पणान्पञ्च क्रियाद्वेषी पणान्दश ।
नोपस्थाता दश द्वौ च षोडशैव निरुत्तरः ॥
आहूतप्रपलायी च पणान् ग्राह्यस्तु विंशतिः ॥

तृतीयपञ्चमयोर्दण्डप्राप्तौ विशेषमाह स एव

त्रिराहूतमनायान्तमाहूतप्रपलायिनम् ।
पञ्चरात्रमतिक्रान्तं विनयेत्तं महीपतिः ॥ इति ।

पलायतेऽभियुक्तश्चेत्यत्रान्यायाविनाभूतपलायनं विवक्षितम् । एवं मौनमपि ।

अभ्युपपन्नः अङ्गीकृतहानिः । अवसन्नः प्राप्तावसादः । अत्र आहूतो यः पलायेत, आहूतः प्रपलायी चेत्यत्र च पलायनेन हीनत्वं प्रपलायनेन चात्यन्तहीनत्वं विवक्षितमिति न वैयर्थ्यम् ।

बृहस्पतिः

साक्षिणस्तु समुद्दिश्य यस्तु तान् विवादयेत् ।
त्रिंशद्रात्रात्रिपक्षाद्वा तस्य हानिः प्रजायते ॥
आहूतः प्रपलायेत मौनी साक्षिपराजितः ।
स्ववाक्यप्रतिपन्नश्च हीनवादी चतुर्विधः ॥
प्रपलायी त्रिपक्षेण मौनकृत्सप्तभिर्दिनैः ।
साक्षिभिस्तत्क्षणेन प्रतिपन्नश्च हीयते ॥
निवेदितस्याकथनमनुपस्थानमेव च ।
पक्षार्थिदोषो मौनं च हीयमानस्य लक्षणम् ॥
महापापोपपापाभ्यां पातकेनाऽथ संसदि ।
योऽभिशस्तस्तत्क्षमते संयुक्तं तं विदुर्जनाः ॥
तस्माद्यत्नेन कर्तव्यं बुधेनात्मविशोधनम् ।
यद्यद्गुरुतरं कार्यं तत्तत्पूर्वं विशोधयेत् ॥
महापापाभिशस्तो यः पातकात्तर्तुमिच्छति ।
पूर्वमङ्गीकृतं तेन जितोऽसौ दण्डमर्हति ॥

अत्र त्रिंशद्रात्रादित्यादौ कार्यगौरवादिना पूर्वोदाहृतकात्यायनोक्तकालमुपलक्षणीकृत्य समयो ग्राह्यः न तूक्तसमय एव । पक्षार्थिदोष इति अर्थितत्पक्षयोरनुचितदूषणोक्तिः । पूर्वमादौ महापापाभिशस्त इत्यादि यो गुरुणा पातकेनाभिशस्तः सन् लघुपातकं तर्तुमिच्छति स पूर्वं महापातकमङ्गीकृतवान् तत्कर्तृतया लक्षित इति तदर्थानुसारेण दण्डनीय इत्यर्थः ।

१ स्यत०

**नारदः**

सर्वेष्वर्थविवादेषु वाक्छलेनावसीदति ।
पशुस्त्रीभूम्यृणादाने शास्योऽप्यर्थान्न हीयते ॥

व्याकृतश्चायं श्लोको व्यवहारपदनिरूपणावसरे । अर्थात् पश्वादेरुक्तादिति **कल्पतरुः।**

**बृहस्पतिः**

आचारकरणे दिव्ये कृत्वोपस्थाननिश्चयम् ।
नोपस्थितो यदा कश्चित् छलं तत्र न कारयेत् ॥
दैवराजकृतो दोषस्तस्मिन् काले यदा भवेत् ।
अवधित्यागमात्रेण स भवेन्न पराजितः ॥

आचारकरणे धर्माधिकरणे। यदि राजदैवकृतो दोषः स्यात्तदा धर्माधिकरणकृतोपस्थिति-व्यवस्थोऽप्यनुपस्थितो न छलवान् न वा पराजितो भवतीति समुदायार्थः । ये पुनरेकान्तपरा-जयभयादर्वाक् प्रमाणकरणाद् विवादतो निवर्तन्ते ते दण्डनीया इत्याह **स** एव ।

पूर्वोत्तरेऽभिलिखिते विचारे संप्रवर्तिते ।
प्रशमं ये मिथो यान्ति दाप्यास्ते द्विगुणं दमम् ॥ इति ।

मिथो नृपतिं वञ्चयित्वेति शेषः ।

अत एव **कात्यायनः**

आवेद्य प्रगृहीतार्थं प्रशमं यान्ति ये मिथः ।
सर्वे द्विगुणदण्डास्तु विप्रलम्भान्नृपस्य ते ॥ इति ।

अत्र केषाचिच्चिह्नानां याथार्थ्याभिमतार्थव्यतिरेकप्रमापकत्वम् । केषाचित्तु सामान्यतो याथार्थ्यकार्थव्यतिरिक्तप्रतीतिमात्रजनकत्वं । तत्र प्रथमतर एव निर्णयः । द्वितीये तु निर्णय-कारणवदपवादकारणाभिधानादि गवेषणीयम् ।

तथा च **कात्यायनः** 'हीनस्य विद्यते वाद' इति तदालाभे तु तैरेव चिह्नैर्वादिनो हीनतया भंगो व्यवहारयितव्यः । एवं च काकतालीयविसंवादेऽपि व्यवहारयितुर्न दोषः, निर्णयकारणादिलाभे तु न हीनत्वेन भङ्गनिर्णय इति ।

---

## अथ सन्धिः

तत्र **बृहस्पतिः**

पूर्वोत्तरेऽभिलिखिते प्रक्रान्ते कार्यनिर्णये ।
द्वयोः संतप्तयोः सन्धिः स्यादयःपिण्डयोरिव ॥

साक्षिसभ्यविकल्पस्तु भवेद्यत्रोभयोरपि ।
दोलायमाने यौ सन्धिं कुर्यातां तौ विचक्षणौ ॥
*प्रमाणसमता यत्र भेदः शास्त्रचरित्रयोः ।*
तत्र राजाज्ञया सन्धिरुभयोरपि शस्यते ॥
धर्मार्थोपग्रहः कीर्तिर्भवेत्साम्येन भूभृतः ।
न क्लिश्यन्ते साक्षिसभ्या वैरं चैव निवर्तते ॥
निग्रहानुग्रहं दण्डं धनं प्राप्य यशोयशः ।
विग्रहाज्जायते नृणां पुनर्द्वेषस्तथैव च ॥
तस्मात्कुलगणाध्यक्षधर्मज्ञाः समदृष्टयः ।
अद्वेषलोभाद्युद्युक्तस्तत्कर्तव्यं विजानता ॥ इति ।

साक्षिसभ्यविकल्प इति यत्रार्थिप्रत्यर्थिनोरपि साक्षिणः सभ्याश्च समा भवेयुः । रागद्वेषविधुराणां साक्षिणां सभ्यानां च परस्परविरोधो भवतीत्यर्थः । यद्वा यत्रार्थिप्रत्यर्थिनोरपि किमेते साक्षिणः सभ्याश्च वक्ष्यन्तीति सन्देहो भवेत् तत्रापि सन्धिरुचित एवेति । दोलायमाने कार्यनिर्णये तौ कथमिदं भविष्यतीति सन्दिग्धे यौ सन्धिं कुरुतस्तौ विचक्षणावित्यर्थः । दोलयमानाविति पाठे एकैकप्रतिकूलसाक्षिसभ्याकारदर्शनेन सन्दिहानौ । प्रमाणसमता उभयोरपि पक्षे सभ्यानां लिखितादिप्रमाणं सममिव प्रतिभाति । भेदः शास्त्रचरित्रयोः । चरित्रं व्यवहारः । यत्र शास्त्रे शास्त्रान्तरेण समतया विप्रतिपत्तिः । व्यवहारे च व्यवहारान्तरेण विप्रतिपत्तिः । तत्र राजाज्ञया सन्धिः प्रशस्यत इत्यर्थः । निग्रहानुग्रहमिति । वादिप्रतिवादिविग्रहे सति निग्रहादीनि व्यवस्थितानि भवन्तीति सन्धिः प्रशस्त इत्यर्थः ।

इति सन्धिः

—— ० ——

## अथ क्रियादानम्

तत्र बृहस्पतिः

ये तु तिष्ठन्ति करणे तेषां सभ्यैर्विभावना ।
कलयित्वोत्तरं सम्यग्दातव्यैकस्य वादिनः ॥

ये वादिनो धर्माधिकरणे तिष्ठन्ति तेषां मध्ये एकस्यार्थिनः प्रत्यर्थिनो वा विभावना स्वपक्षविभावनाहेतुः क्रिया उत्तरं कलयित्वा उत्तरपरामर्शानन्तरं सम्यगुत्तरानुसारेण दातव्या प्रमाणं ब्रूहीति वाच्यमित्यर्थः ।

कात्यायनः

शोधिते लिखिते सम्यगन्ते निर्दोष उत्तरे।
प्रत्यर्थिनोऽर्थिनो वाऽपि क्रियाकारणमिष्यते ॥

अर्थिनः प्रत्यर्थिनो वा यस्य साध्यमस्ति असौ स्वसाध्ये उत्तरानन्तरमेव प्रमाणलेखनं कुर्यात्।

याज्ञवल्क्योऽपि

ततोऽर्थी लेखयेत्सद्यः प्रतिज्ञातार्थसाधनम् ॥ इति।

अर्थी साध्यवान्। ततश्च कारणप्राङ्न्यायोत्तरयोः कारणस्य प्राङ्न्यायस्यैव साध्यत्वात्प्रत्यर्थ्येव तद्वादित्वेनार्थी जात इति स एव साधनं लेखयेत्। मिथ्योत्तरे पूर्ववाद्येव संप्रतिपत्युत्तरे साध्याभावेन भाषोत्तरवादिनोर्द्वयोरप्यर्थित्वाभावात्साधनाभाव एवेति।

तथा च बृहस्पतिः

प्रतिज्ञां भावयेद्वादी प्रत्यर्थी कारणं तथा।
प्राग्वृत्तवादी विजयं जयपत्रेण भावयेत् ॥

प्रतिज्ञां भावयेत्। प्रतिज्ञातमर्थं प्रमाणेन साधयेत्। एतच्च मिथ्योत्तरे।

व्यासोऽपि

प्राङ्न्यायकारणोक्तौ तु प्रत्यर्थी निर्दिशेत्क्रियाम्।
मिथ्योत्तरे पूर्ववादी प्रतिपत्तौ न सा भवेत् ॥

कात्यायनः

कारणात्पूर्वपक्षोऽपि उत्तरं प्रतिपद्यते।
अतः क्रिया सदा देया पूर्वपक्षप्रसाधिनी ॥ इति।

अस्यार्थः। यदा पूर्वपक्षः कारणादुत्तरं प्राप्नोति। यथा मदीयमृणं देहीत्यभियुक्ते निस्तीर्णं मयेति कारणोत्तरं वदति तत्राप्यर्थी निस्तीर्णं परमन्यदिति कारणं वदति तत्र कारणान्तरस्याप्येव साधयेदित्यर्थः।

मनुः

अपह्नवेऽधमर्णस्य देहीत्युक्तस्य संसदि।
अभियोक्ताऽऽदिशेद्देशं कारणं वाऽन्यदुद्दिशेत् ॥

अधमर्णस्य देहि धनमस्मा इति राज्ञा प्राड्विवाकादिभिर्वा संसदि व्यवहाराधिकरणादिदेशे उक्तस्य अपह्नवे अपलापे तेन क्रियमाणे उत्तमर्णो देशमादिशेद्ब्रूयात्। अत्र देशे त्वया गृहीतमिति। देशमिति कालादेरप्युपलक्षणम्। देशेऽप्युक्तविप्रतिपत्तौ कारणं प्रमाणं देशादन्यदुद्दिशेद् ब्रूयात्। देशं साक्षिणः प्रमाणभूतान् निर्दिशेत् अन्यद्वा कारणं लेख्यादि निर्दिशेदिति कल्पतरुः।

याज्ञवल्क्यः

साक्षिषूभयतः सत्सु साक्षिणः पूर्ववादिनः ।
पूर्वपक्षेऽधरीभूते भवन्त्युत्तरवादिनः ॥ इति ।

उभयतः उभयोरपि वादिनोः साक्षिषु सत्सु पूर्ववादिनः पूर्वस्मिन्काले मया गृहीतमुपभुक्तं क्रीतं वेति यो वदति स पूर्ववादी तस्य साक्षिणः प्रष्टव्याः । यथा कश्चित्प्रतिग्रहेण क्रयेण वा क्षेत्रं लब्ध्वा कञ्चित्कालमुपभुज्य देशान्तरं गतः । तथाऽन्योपि तदेव क्षेत्रं प्रतिग्रहादिना लब्ध्वा तथैवोपभुज्य देशान्तरं गतः । ततो द्वावपि युगपदागत्य मामकमिदं मामकमिदमिति विवदमानौ धर्माधिकरणं प्राप्तौ तत्र पूर्ववादिन एव साक्षिणः प्रष्टव्याः । पूर्वपक्षेऽधरीभूत इति । यदा पुनरपर एवमाह । सत्यमिदमनेन पूर्वप्रतिगृहीतमुपभुक्तं क्रीतं वा किन्तु राज्ञेदमेन क्रीत्वा मह्यं दत्तमितरेण वा प्रतिग्रहादिना लब्ध्वा मह्यं दत्तं तत्र पूर्वपक्षे साध्याभावतयाऽधरीभूते सति उत्तरवादिनः उत्तरकालं मया प्रतिगृहीतं क्रीतं वेति वादिनः साक्षिणः प्रष्टव्या भवन्तीत्यर्थः ।

नारदः

आधर्ये पूर्वपक्षस्य यस्मिन्नर्थवशाद्भवेत् ।
विवादे साक्षिणस्तस्य प्रष्टव्याः प्रतिवादिनः ॥
कारणप्रतिपत्तौ तु पूर्वपक्षे विरोधिते ।
अभियुक्तेन वै भाव्यं विज्ञेयं पूर्वपक्षवत् ॥

कारणप्रतिपत्तौ कारणोत्तरे । भाव्यं विभावनीयं साधनम् । विज्ञेयं पूर्वपक्षवत् । यथा भाषावादी मिथ्योत्तरे सति स्वपक्षं साधयति तथा प्रतिवादिना स्वपक्षः प्रमाणेन साधनीयो भवतीत्यर्थः ।

इति प्रत्याकलितम्

---

## अथ क्रियापादः

तत्र बृहस्पतिः

श्रुत्वा पूर्वोत्तरं सभ्यैर्निर्दिष्टा यस्य भावना ।
विभावयेत्प्रतिज्ञातं सोऽखिलं लिखितादिभिः ॥

पूर्वोत्तरं प्रतिज्ञामुत्तरं च । नारदः

पूर्ववादेऽभिलिखिते यथोत्तरमशेषतः ।
अर्थी तृतीयपादे तु क्रियया प्रतिपादयेत् ॥

पूर्ववादो भाषा। अभिलिखितं पूर्वपक्षाभिभावकतया लिखितमुत्तरमिति यावत्। तृतीयपादः प्रत्याकलिताख्यः। तस्मिन् सति क्रियाप्रमाणम्। एवं चायमर्थः। भाषोत्तरप्रत्याकलिताख्यपादत्रये सति अर्थी स्वकार्यं प्रमाणेन साधयेदिति। अर्थ्यत्र साध्यवान्। क्रियाशब्दार्थमाह **व्यासः**

कार्यं हि साध्यमित्युक्तं साधनं तु क्रियोच्यते॥ इति।

**कात्यायनः**

वादिना यदभिप्रेतं स्वयं साधयितुं स्फुटम्।
स्वसाध्यं साधनं येन तत्साध्यं साध्यतेऽखिलम्॥
सारभूतं पदं मुक्त्वा असाराणि बहून्यपि।
साधयेत क्रिया या तु तां जह्यात्सारवर्जिताम्॥
पक्षद्वयं साधयेद्या तां जह्याद्दूरतः क्रियाम्॥

तथा।

क्रियां बलवतीं मुक्त्वा दुर्बलां योऽवलम्बते।
स जयेऽवधृते सभ्यैः पुनस्तां नाऽऽप्नुयात्क्रियाम्॥

**नारदः**

निर्णिक्ते व्यवहारे तु प्रमाणमफलं भवेत्।
लिखितं साक्षिणो वापि पूर्वमावेदितं न चेत्॥
यथा पक्वेषु धान्येषु निष्फलाः प्रावृषो गुणाः।
निवृत्तव्यवहाराणां प्रमाणमफलं भवेत्॥

क्रियाविभागमाह **बृहस्पतिः**

द्विप्रकारा क्रिया प्रोक्ता मानुषी दैविकी तथा।
एकैकाऽनेकधा भिन्ना ऋषिभिस्तत्त्ववेदिभिः॥
साक्षिलेख्यानुमानं च मानुषी त्रिविधा क्रिया।
घटाद्या धर्मजान्त्या च दैवी नवविधा स्मृता॥
साक्षी द्वादशभेदस्तु लिखितं दशधा स्मृतम्।
अनुमानं च द्विविधं नवधा दैविकी क्रिया॥

अत्र 'दैविकी नवधा भवेदि'ति भेदकथनेऽपि 'नवधा दैविकी क्रिये'ति पुनरुपादानं 'एकादशविधः साक्षी शास्त्रे दृष्टो मनीषिभिः' 'साक्षी द्वादश भेदस्तु' इत्यादिवदत्रापि मतभेदनिराकरणाभिप्रायेण। एतत्संख्याविशेषस्तु स्वस्वप्रकरणे कथयिष्यते।

**कात्यायनः**

साक्षिणो लिखितं भुक्तिः प्रमाणं त्रिविधं विदुः।
लेशोद्देशस्तु युक्तिः स्यादिष्यानीह विषादयः॥

ऋणे लेख्यं साक्षिणो वा युक्तिर्लेशादयोऽपि वा।
दैविकी वा क्रिया प्रोक्ता प्रजानां हितकाम्यया ॥

लेशोऽन्यथानुपपन्नो धर्मः। उद्देशस्तु तत्परामर्शः। तेन परामृष्यमाणोऽन्यथानुपपन्नो धर्म इत्यर्थः।

अत एव नारदः

प्रमादाद्धनिनो यत्र न लेख्यं न च साक्षिणः।
अर्थे चापह्नुते वादी तस्योक्तस्त्रिविधो विधिः ॥

वादी गृहीतधनः, विधिः धनसाधनोपायः।

चोदना प्रतिकालं च युक्तिलेशस्तथैव च ॥
तृतीयः शपथः प्रोक्तस्तैरृणं साधयेत्क्रमात्।

प्रतिकालं चोदना प्रत्यर्पणकालो यदा यदा प्राप्तः तदा तदा मदीयं दीयतामितीतरजनसमक्षमन्येनाप्रतिहता प्रेरणा सा प्रथमोपायः। तदभावे युक्तिलेशः अमुष्मिन्देशे अमुष्मिन्कालेऽमुनाऽर्थसम्बन्धेनेयत्परिमाणमेतदर्थमृणं गृहीतं त्वयेत्यादिर्द्वितीयोपायः। अस्याप्यसंभवे तृतीयोपायः शपथः। अयमेवार्थः स्पष्टीकृतस्तेनैव।

अभीक्ष्णं चोद्यमानोऽपि प्रतिहन्यान्न तद्वचः।
त्रिचतुःपञ्चकृत्वो वा परतोऽर्थः समाचरेत् ॥
नोदनाप्रतिघाते तु युक्तिलेशैस्तमन्वियात्।
देशकालार्थसम्बन्धपरिमाणक्रियादिभिः ॥
युक्तिष्वप्यसमर्थासु शपथैरेनमर्दयेत्।
अर्थकालबलापेक्षमग्न्यम्बुसुकृतादिभिः ॥ इति।

विवादमात्रविषये कात्यायनः

प्रमाणहेत्वभावे तु दिव्यैरेव तु निश्चयम्।
सर्वेष्वेव विवादेषु सदा कुर्यान्नराधिपः ॥
सर्वाभावे तु यत्नेन नान्यथैव कथाचन ॥ इति।

प्रमाणहेतुपदार्थमाह व्यासः

लिखितं साक्षिणो भुक्तिः प्रमाणं त्रिविधं स्मृतम्।
अनुमानं विदुर्हेतुं तर्कं चैव मनीषिणः ॥ इति।

एवं च दृष्टप्रमाणेनासिद्धावदृष्टं प्रमाणमाश्रयणीयं नान्यथेति कात्यायनवचनतात्पर्यार्थः।

अस्य कश्चिदपवादमाह बृहस्पतिः

प्रथमे वा तृतीये वा प्रमाणं दैवमानुषम्।
उत्तरे स्याच्चतुर्थे तु ससाक्षिजयपत्रकम् ॥

प्राङ्न्यायोत्तरे साक्षिजयपत्रयोरन्यतरेणासाधयन्वादी न प्राग्विजयीत्याशयः।

**याज्ञवल्क्यः**

प्रमाणं लिखितं भुक्तिः साक्षिणश्चेति कीर्तितम् ।
एषामन्यतमाभावे दिव्यान्यतममुच्यते ॥

**कात्यायनः**

यद्येको मानुषीं ब्रूयादन्यो ब्रूयात्तु दैविकीम् ।
मानुषीं तत्र गृह्णीयान्न तु दैवीं क्रियां नृपः ॥

विशिष्टसाध्ये विशिष्यांशे मानुषप्रमाणसंभवे विशिष्टार्थसाधकमपि न दिव्यं ग्राह्यम् ।

तथा च **कात्यायनः**

यद्येकदेशव्याप्ताऽपि क्रिया विद्येत मानुषी ।
सा ग्राह्या न तु पूर्णाऽपि दैविकी वदतां नृणाम् ॥

उदाहरणं तु यथा रूपकशतमनया वृद्ध्या गृहीत्वाऽयं न प्रयच्छतीत्यभियोगापह्नवे ग्रहणे साक्षिणः सन्ति नो सख्यायां वृद्धिविशेषे वा, अतो दिव्येन भावयामीत्युक्ते तत्रैकदेशविभावितन्यायेनापि वृद्धिसंख्याविशेषसिद्धेर्न दिव्यस्यावकाशः ।

लेख्यसद्भावे साक्षिणामप्यनुपादानमाह **स** एव ।

क्रिया न दैविकी प्रोक्ता विद्यमानेषु साक्षिषु ।
लेख्ये च सति वादेषु न स्याद्दिव्यं न साक्षिणः ॥

**पितामहः**

स्थावरेषु विवादेषु दिव्यानि परिवर्जयेत् ।
साक्षिभिर्लिखितेनाऽथ भुक्त्या चैतान्प्रसाधयेत् ॥

एतत्स्थावरेषु विषयेषु साक्ष्यादीनां प्रायिकतया तदादरार्थम् । तेन तत्सद्भावे दिव्यानि परिवर्जयेदित्यनसेयम् । प्रायिकत्वं च स्थावरेषु लिखितसाक्षिभुक्तयो नहि सर्वथा न संभवन्तीति । तेन तत्र सदेहविरहान्न दिव्यम् । यत्र पुनः कालवशाल्लिखितं नष्टं साक्षिणश्चोपरताः भोगश्चामूलः तत्र दिव्येन विना सन्देहानिवृत्तेर्भवेदेव दिव्यमिति । ननु विवादान्तरेष्वपि साक्ष्यादिसभवे दिव्यानवतार इति किमिति स्थावरविषयेऽपि शिष्यनिषेधः । सत्यमेतत् । किन्तु विवादान्तरे यथोक्तसाक्ष्याद्युपन्यासेऽर्थिना कृते यदि प्रत्यर्थी विपक्षदण्डांगीकारावष्टंभेन दिव्यमेवागीकरोति तदा दिव्यमपि संभवति । यतः साक्ष्यादीनामाशयादिदोषसभवाद्दिव्यस्य निर्दोषत्वेन सविषयत्वाद्धर्मस्य च सत्याधिकरणत्वात् ।

अत एव **नारदः**

तत्र सत्ये स्थितो धर्मो व्यवहारस्तु साक्षिणि ।
दैवसाध्ये पौरुषेयं न लेख्यं वा प्रयोजयेद् ॥ इति ।

प्रकृते तु दण्डावष्टम्भेऽपि न दिव्यावलम्बनमित्येतदर्थं पितामहवचनमिति । अन्ये तु

स्थावरादिवादेषु मानुषप्रमाणाभावेऽपि न दिव्यावतारः किन्तु राजाज्ञया तत्र निर्णयसम्भव इति वर्णयन्ति । उदाहरन्ति चात्र पितामहवचनम्

लेख्यं यत्र न विद्येत न भुक्तिर्न च साक्षिणः ।
न च दिव्यावतारोऽस्ति प्रमाणं तत्र पार्थिवः ॥
निश्चेतुं ये न शक्याः स्युर्वादाः सन्दिग्धरूपिणः ।
तेषां नृपः प्रमाणं स्यात्स सर्वस्य प्रभुर्यतः ॥ इति ।

विषयभेदेन क्रियाभेदमाह

कात्यायनः

वाक्पारुष्ये च भूमौ च दिव्यं न परिकल्पयेत् ।
दत्त्वाऽदत्ते तथाऽऽदत्ते स्वामिना निर्णये सति ॥
विक्रियादानसम्बन्धे क्रीत्वा धनमनिच्छति ।
द्यूते समाह्वये चैव विवादे समुपस्थिते ॥
साक्षिणः साधनं प्रोक्तं न दिव्यं न च लेख्यकम् ।
पूगश्रेणीगणादीनां या स्थितिः परिकीर्तिता ॥
तस्यास्तु साधनं लेख्यं न दिव्यं न च साक्षिणः ।
द्वारमार्गक्रियाभोगजलवाहादिके तथा ॥
भुक्तिरेव तु गुर्वी स्यान्न लेख्यं न च साक्षिणः ।
प्रक्रान्ते साहसे वादे पारुष्ये दण्डवाचिके ॥
बलोद्भूतेषु कार्येषु साक्षिणो दिव्यमेव वा ॥ इति ।

दत्त्वादत्त इति । दत्वा प्रतिश्रुत्यानर्पिते । तथात्र आदत्ते दत्वा बलादाच्छिद्य गृहीते । स्वामिनां निर्णये सति एतत्स्वामिकमेतदिति निश्चये सति । दत्वादत्तादिविवादेषु साक्षिणः प्रमाणं न पुनर्दिव्यं न च लेख्यकं चेत्यर्थः । केचिदसतीति पदच्छेदमाहुः । तत्र निर्णयार्थमिति नेयम् । धनं मूल्यरूपं अनिच्छति दातुमिति शेषः । अयच्छतीति क्वचित्पाठः । समाह्वये प्राणिद्यूते । द्वारमार्गक्रियेति । द्वारेण जननिःसरणादिक्रिया द्वारक्रिया । मार्गेण गवादीनां निःसरणक्रिया मार्गक्रिया । भोगः भोग्यो विषयः । उपानत् छत्रादिः । जलवाहो जलनिर्गममार्गः ।

व्यासः

रहः कृतं प्रकाशं च कार्यं विविधमुच्यते ।
प्रकाशं साक्षिभिर्भाव्यं दैविकेन रहः कृतम् ॥

भाव्यं साधनीयं साक्षिसमत्वेऽपि दिव्यमेव ग्राह्यमित्याह

कात्यायनः

समत्वं साक्षिणां यत्र दिव्यैस्तत्रापि शोधयेत् ।
प्राणान्तिकविवादे च विद्यमानेषु साक्षिषु ॥
दिव्यमालम्बते वादी न पृच्छेत्तत्र साक्षिणः ॥

बृहस्पतिरपि

लिखिते साक्षिवादे च सन्देहो जायते यदा ।
अनुमाने च संभ्रान्ते तत्र दिव्यं विशोधनम् ॥
नृपद्रोहे साहसे च कल्पयेद्दैविकीं क्रियाम् ॥

व्यासोऽपि

न मयैतत्कृतं लेख्यं कूटमन्येन कारितम् ।
अधरीकृत्य तत्पत्रमर्थे दिव्येन निर्णयः ॥

निर्णेतव्येऽर्थे निर्णयं दिव्येन कुर्यादित्यर्थः ॥

कात्यायनः

यत्र स्यात्सोपधं लेख्यं तद्राह्ये श्रावितं यदि ।
दिव्येन शोधयेत्तत्र राजा धर्मासनस्थितः ॥

सोपधं सच्छलम् ।

नारदः

अरण्ये विजने रात्रावन्तर्वेश्मनि साहसे ।
न्यासस्यापह्नवे चैव दिव्या संभवति क्रिया ॥

न्यासो नाम गृहस्वाम्यसमक्ष गृहजनहस्ते सपुटपेटकादिप्रक्षेपो गृहस्वामिने समर्पणीयमेतदिति । एतच्च मानुषासंभव एव ।

तथा

यदा साक्षी न विद्येत विवादे वदतां नृणाम् ।
तदा दिव्यैः परीक्षेत शपथैश्च पृथग्विधैः ॥

अत्र गुरुषु दिव्यशब्दो लघुषु शपथशब्दश्च प्रायेण लोके प्रयुज्यत इति दिव्यशपथयोर्भेदेनोपन्यासः ।

तथा

स्त्रीणां शीलाभियोगे च स्तेयसाहसयोरपि ।
एष एव विधिर्दृष्टः सर्वार्थापह्नवेषु च ॥

क्वचित्साक्षिसद्भावेऽपि दिव्यमित्याह बृहस्पतिः

महाशापाभिशापेषु निक्षेपहरणे तथा ।
दिव्यैः कार्यं परीक्षेत राजा सत्स्वपि साक्षिषु ॥

व्यासः

प्रथमा यत्र भिद्यन्ते साक्षिणश्च तथा परे ।
परेभ्यश्च तथा चान्ये तं वादं शपथैर्नयेत् ।

भिद्यन्ते विरुद्धबुद्धयो भवन्तीत्यर्थः । तत्र न केवल प्रथमास्तेभ्यः परे तेभ्योऽपि परे साक्षिणो विप्रतिपद्यन्ते तं वादं शपथैर्निर्णयेदित्यर्थः । अत्र साक्षिविप्रतिपत्तिमात्रे तात्पर्यम् ।

नारदकात्यायनौ

प्रमाणानि प्रमाणज्ञैः परिपाल्यानि यत्नतः ।
सीदन्ति हि प्रमाणानि प्रमाणैरव्यवस्थितैः ॥ इति ।

अव्यवस्थितैरस्थाने व्याक्रियमाणैः प्रमाणैः प्रमाणज्ञैः प्रमाणानि सीदन्ति निर्णयकारणानि (न?)भवन्ति । अतः पुरुषेणावधातव्यमित्यर्थः । यद्वा अव्यवस्थितैः प्रमाणैः प्रमाणानि प्रमाकर्तारो यतो विनश्यन्ति अतः कस्यात्र किं प्रमाणमित्यवधारणकुशलैरवधेयमिति । क्वचित्तु सीदन्ति हि प्रमेयाणीत्ययं पाठः ।

इति क्रियापादे प्रमाणविषयः ।

इति श्रीमन्महीमण्डलाखण्डलश्रीनानामह्लारभ्रधिपमप्रतिशापरिपूरणपरायण-
कलिकालकर्णप्रतापलङ्केश्वरशरणागतराजवज्रपञ्जरपरमवैष्णवारिपुगज-
सिंहेत्यादिनिजविरुदराजीविराजमानमानोन्नतमहाराजाधिराज-
श्रीपृथ्वीचन्द्रदेवविरचिते धर्मतत्त्वकलानिधौ महानिबन्धे
व्यवहारप्रकाशे आसेधभाषाऽऽदेयव्यवहारादि
निर्णयो नाम द्वितीय उल्लास

———o———

# अथ लिखितम्

तत्र साक्षिभेदस्वरूपमभिधाय

**बृहस्पतिः**

लिखितस्याधुना वच्मि विधानमनुपूर्वशः ।
षाण्मासिकेऽपि विषये भ्रान्तिः सञ्जायते यतः ॥
धात्राऽक्षराणि सृष्टानि पत्रारूढान्यतः पुरा ।

तद्द्विविधं लौकिकं राजकीयं च ।

तथा च **वसिष्ठः**

लौकिकं राजकीयं च लेख्यं विद्याद्विलक्षणम् ॥ इति ।

लौकिकं पुनः सप्तविधम् ।

तथा च **बृहस्पतिः**

भागदानक्रियाधानसंविद्दासऋणादिभिः ।
सप्तधा लौकिकं लेख्यं त्रिविधं राजशासनम् ॥

एतेषां लक्षणान्याह स एव

भ्रातरः संविभक्ता ये स्वरुच्या तु परस्परम् ।
विभागपत्रं कुर्वन्ति भागलेख्यं तदुच्यते ॥
भूमिं दत्त्वा तु यः पत्रं कुर्याच्चन्द्रार्ककालिकम् ।
अनाच्छेद्यमनाहार्यं दानलेख्यं तु तद्विदुः ॥
गृहक्षेत्रादिकं क्रीत्वा तुल्यमूल्याक्षरान्वितम् ।
पत्रं कारयते यत्तु क्रयलेख्यं तदुच्यते ॥
जङ्गमं स्थावरं बन्धं दत्त्वा लेख्यं करोति यत् ।
गोप्यभोग्यक्रियायुक्तमाधिलेख्यं तदुच्यते ॥
ग्रामो देशश्च यत्कुर्यान्मूलं लेख्यं परस्परम् ।
राजाऽविरोधि धर्मार्थं संवित्पत्रं वदन्ति तत् ॥
वस्त्रान्नहीनः कान्तारे लिखितं कुरुते तु यत् ।
कर्माणि ते करोमीति दासपत्रं तदुच्यते ॥
धनं वृद्ध्या गृहीत्वा तु स्वयं कुर्याच्च कारयेत् ।
उज्जा(द्धा ?)मपत्रं तत्प्रोक्तं ऋणलेख्यं मनीषिभिः ॥

उज्जा(द्धा ?)मपत्रमृणपत्रम् । लौकिकं मत्वाह

नारदः

लेख्यं तु द्विविधं ज्ञेयं स्वहस्तान्यकृतं तथा ।
असाक्षिमत्साक्षिमच्च सिद्धिर्देशस्थितेस्तयोः ॥

स्वहस्तलिखितमसाक्षिकं ससाक्षिकं च 'विनापि साक्षिभिर्लेख्यं स्वहस्तलिखितं तु यदि'ति याज्ञवल्क्यवचनेऽपिशब्देन साक्षिमत्त्वस्याप्यवगमात् । अन्यकृतं तु साक्षिमदेव प्रमाणम् ।

तथा च पितामहः

वादिभ्यामभ्यनुज्ञातं लेखकेन ससाक्षिकम् ।
लिखितं सर्वकार्येषु तत्प्रमाणं स्मृतं बुधैः ॥ इति ।

तयोः ससाक्षिकयोर्देशसमाचारात्सिद्धिः ।

मरीचिः

स्थावरे विक्रयाधाने विभागे दान एव च ।
लिखितेनाप्नुयात्सिद्धिमविसंवाद एव च ॥
सिद्ध्यते वाचिकोऽप्याधिः स्थावरेषु दशाब्दिकः ।
प्रतिग्रहे च क्रीते च नालेख्या सिद्ध्यति क्रिया ॥

स्थावर इति क्षेत्रादिविषये । विक्रयविभागादीनां लिखितं विना प्रायशो न सिद्धिरित्यर्थः । अविसंवादे संविदि । सिध्यते वाचिकोऽप्याधिरिति । स्थावरविषये आधिर्दशवर्षपर्यन्तमुपभुक्तः सन् वाचिकोऽपि लेख्यं विनापि सिध्यतीत्यर्थः ।

विष्णुः

अथ लेख्यं त्रिविधं राजसाक्षिकं ससाक्षिकमसाक्षिकं चेति ।
राजसाक्षिकं राजाधिकरणे तन्नियुक्तकायस्थकृतं तदध्यक्षचिह्नितम् ।

अत एव कात्यायनः

राज्ञः स्वहस्तसंयुक्तं स्वमुद्रासंयुतं तथा ।
राजकीयं स्मृतं लेख्यं सर्वेष्वर्थेषु साक्षिकम् ॥ इति ।

यत्र कुत्रापि लिखितं साक्षिहस्तचिह्नितं ससाक्षिकं स्वहस्तलिखितमसाक्षिकम् ।

तथा च विष्णुः

यत्र क्वचन येन केनचिल्लिखितं साक्षिभिः स्वहस्तचिह्नितं ससाक्षिकं स्वहस्तलिखितमसाक्षिकम् ।

अन्यकृतलेख्यविषये याज्ञवल्क्यः

यः कश्चिदर्थो निष्णातः स्वरुच्या तु परस्परम् ।
लेख्यं तु साक्षिमत्कार्यं तस्मिन् धनिकपूर्वकम् ॥

उत्तमर्णाधमर्णयोर्योऽर्थो हिरण्यादिः परस्परं स्वरुच्या इयता समयेनैवानया वृद्ध्या देयमिति निष्णातो व्यवस्थितः तस्मिन्नर्थे कालान्तरे वस्तुस्वरूपावधारणार्थं लेख्यं साक्षिमत्कार्यम्। धनिकपूर्वं धनिकनामलेखनपूर्वकमिति यावत् ।

जानपदलेखनप्रकारमाह व्यासः

लिखेज्जानपदं लेख्यं प्रसिद्धस्थानलेखकम् ।
राजवंशक्रमयुतं वर्षमासार्द्धवासरैः ॥

वासरस्थितिः अत्र युतमित्यनुषज्यते। तथापि

पितृपूर्वं नामजाती धनकर्णिकयोर्लिखेत् ।
द्रव्यभेदं प्रमाणं च वृद्धिं चोभयसंमताम् ॥

अत्रोभयसमत्वं द्रव्यादेरपि विशेषणं लेख्यं कार्यमित्यनुवृत्तौ ।

**याज्ञवल्क्यः**

समामासतदर्द्धाहर्नामजातिस्वगोत्रकैः ।
सब्रह्मचारिकात्मीयपितृनामादिचिह्नितम् ॥

नाम धनिकर्णिकयोः देवदत्त इत्यादि । जातिर्ब्राह्मणत्वादिः । गोत्रं वासिष्ठादि । सब्रह्मचारिकं बह्वृचादिशाखाध्ययनप्रयुक्तं गुणनाम 'बह्वृचः कठ' इति । आत्मीयपितृनाम धनिकर्णिकपितृनाम आदिग्रहणाद्द्रव्यजातिसंख्याचारादिसंग्रहः ।

अत एव कात्यायनः

उत्पत्तिं जातिसंख्यां च धनसंख्यां च लेखयेत् ।
स्मरत्येवं प्रयुक्तस्य नश्येदर्थस्त्वलेखतः ॥
सर्वजानपदान्वर्णान् लेखकस्तान्निवेशयेत् ॥

स्मरत्येवं प्रयुक्तस्येति। 'अधीगर्थदयेशां कर्मणि' (पा० २-३-५२) इति षष्ठी।

वसिष्ठोऽपि.

कालं निवेश्य राजानं स्थानं निवसनं तथा ।
दायकं ग्राहकं चैव पितृनाम्ना च संयुतम् ॥
जातिं स्वगोत्रशाखां च द्रव्यमानं ससंख्यकम् ।
वृद्धिं ग्राहकहस्तं च विदितार्थं च साक्षिणः ॥ इति ।

ग्राहकहस्तेनाभिनिवेशनप्रकारमाह याज्ञवल्क्यः

समाप्तेऽर्थे ऋणी नाम स्वहस्तेन निवेशयेत् ।
मतं मेऽमुकपुत्रस्य यदत्रोपरि लेखितम् ॥ इति ।

अर्थे धनिकाधमर्णयोः स्वरुच्या निरूपिते समाप्ते लिखिते ऋणी अधमर्णः स्वहस्तेन

स्वनाम विनिवेशयेत्। स्वहस्तेनेति निश्चयदार्ढ्यार्थम्। तेन निवेशनमात्रे तात्पर्यम्। एवं च मतं मेऽमुकपुत्रस्येति स्वहस्तमात्रोपलक्षणम्। अत्रोपरीति वदन् पूर्वलिखिताक्षरसंस्थानादधस्तात् स्वहस्ताक्षरसंस्थानमिति दर्शयति। ऋणीति साक्षिणामपि प्रदर्शनार्थम्।

तथा च स एव

साक्षिणश्च स्वहस्तेन पितृनामकपूर्वकम्।
अत्राहममुकः साक्षी लिखेयुरिति ते समाः॥

समाः द्वित्वादिसंख्यातो गुणतश्च। गुणत एवेति कल्पतरुः। केचित्तु आकारप्रश्लेषेण(?) साक्षिसंख्यानियमं विपरीतं वर्णयन्ति। साक्षिण इति बहुवचनं च गुरुतरकार्यलेख्यविषयम्। अत एव हारीतेन साक्षिद्वयेन लेख्यसिद्धिरुक्ता।

उत्तमर्णाधमर्णौ च साक्षिणौ लेखकस्तथा।
समवायेन चैतेषां लेख्यं कुर्वीत नान्यथा॥ इति।

अत एवोत्तमर्णादिपुरुषपञ्चकारूढत्वात्पञ्चारूढं पत्रमिति लोकप्रसिद्धिः। साक्षिसंख्याधिक्ये पुनरस्य व्यवहारस्य गौणत्वमिति। यदा त्वधमर्णः साक्षी वा लिपिज्ञो न भवति तदाऽन्येनापि लेखयेत्।

तथा च व्यासः

अलिपिज्ञ ऋणी यः स्याल्लेखयेत्स्वमतं तु सः।
साक्षी वा साक्षिणाऽन्येन सर्वसाक्षिसमीपगः॥ इति।

साक्षिस्वहस्तलेखनानन्तरं लेखकोऽपि स्वसमाप्तिं लिखेत्।

तथा च याज्ञवल्क्यः

उभयाभ्यर्थितेनैतन्मया ह्यमुकसूनुना।
लिखितं ह्यमुकेनेति लेखकोऽन्ते ततो लिखेत्॥

उभयाभ्यर्थितेन उत्तमर्णाधमर्णप्रार्थितेनेति।

इति लौकिकं लेख्यम्

———o———

## अथ राजशासनम्

तच्च त्रिविधम्। त्रिविधं राजशासनमिति बृहस्पतिवचनात्।

तत्र भूमिनिबन्धादिपात्रे दत्वा लेखितमेकम्। प्रसादादिना दत्वा तद् द्वितीयम्। जयपत्रं तृतीयमिति।

तत्र प्रथमे प्रकारविशेषमाह व्यासः

राज्ञा तु स्वयमादिष्टः सन्धिविग्रहलेखकः।
ताम्रपट्टे पटे वापि प्रलिखेद्राजशासनम्॥
स्थानं वंशानुपूर्वीं च देशं ग्राममुपागतान्।
ब्राह्मणांश्च तथा चान्यानमात्याधिकृतान् लिखेत्॥
कुटुंबिनोऽथ कायस्थदूतवैद्यमहत्तरान्।
मेदचंडालपर्यन्तान्सर्वान्संबोधयन्निति॥
मातापित्रोरात्मजस्य पुण्यायामुकसूनवे।
दत्त मयामुकायाद्य दानं सब्रह्मचारिणे॥
चन्द्रार्कसमकालीनं पुत्रपौत्रान्वयानुगम्।
अनाच्छेद्यमनाहार्यं सर्वाभाव्यविवर्जितम्॥
दातुः पालयितुः स्वर्गं हर्तुर्नरकमेव च।
ज्ञातं मयेति लिखितं दात्रध्यक्षाक्षरैर्युतम्॥
अब्दमासतदर्द्धाहोराजमुद्राङ्कितं तथा।
अनेन विधिना लेख्यं राजशासनकं लिखेद्॥ इति।

शिष्यन्ते भविष्यन्तो नृपतयो येन 'दानाच्छ्रेयोऽनुपालनमि'त्यादिना तच्छासनम्। स्थानमत्र राजधानी वंशानुपूर्वीं शौर्यवीर्यौदार्यश्रुतादिगुणशालिनां प्रपितामहपितॄणामनुक्रमम्। उपागतान् तत्काल आगन्तुकान्। सब्रह्मचारिणे सहाध्यायिने। एतच्च पात्रमात्रोपलक्षणम्। सर्वाभाव्यविवर्जितं दैवब्राह्मणनापितादिलभ्यविवर्जितं। दात्रध्यक्षाक्षरैर्युतम्। दातुरक्षरैः। 'मतं मेऽमुकपुत्रस्य यदत्रोपरि लेखितमि'त्यनेन संयुतम्। एवमध्यक्षस्यापि।

व्यासः

सामान्योऽयं दानसेतुर्नृपाणां काले काले पालनीयो भवद्भिः।
पश्चात्पश्चाद्भाविनः पार्थिवेन्द्रान् भूयो भूयो याचते रामचन्द्रः॥
दानपालनयोर्मध्ये दानाच्छ्रेयोऽनुपालनम्।
दानात्स्वर्गमवाप्नोति पालनादच्युतं पदम्॥

**याज्ञवल्क्यः**

दत्वा भूमिं निबन्धं वा कृत्वा लेख्यं तु कारयेत् ।
आगामिभद्रनृपतिपरिज्ञानाय पार्थिवः ॥
पटे वा ताम्रपट्टे वा स्वमुद्रोपरिचिह्नितम् ।
अभिलेख्याऽऽत्मनो वंश्यानात्मानं च महीपतिः ॥
प्रतिग्रहप्रमाणं च दानच्छेदोपवर्णनम् ।
स्वहस्तकालसंपन्नं शासनं कारयेत्स्थिरम् ॥ इति ।

निबन्धः आयस्थाने शुल्कशालादौ प्रत्यहं नियतवस्तुदानम् । यथा पर्णभारकं प्रतिपर्णशतं माह्यं त्वयेत्यादि । परिज्ञानाय अनेन दत्तमनेन प्रतिगृहीतमित्यवबोधाय । पार्थिवः पृथिवीश्वरः । तेन भूमिपतेरेव भूमिदाने निबन्धदाने वाऽधिकारो न भोगपतेरिति दर्शितम् । आत्मानं चेति चकारात्प्रतिग्रहीतारमपि । प्रतिग्रहेत्यादि । प्रतिगृह्यत इति प्रतिग्रहो निबन्धस्तस्य रूपकादि-परिमाणम् । दीयत इति दानं क्षेत्रादि तस्य छेदः । छिद्यते विच्छिद्यते अनेनेति छेदो नद्यादि-वर्तनपरिमाणं च । तस्योपवर्णनं–दानच्छेदनि च(?)(दिति?)अमुकनद्या दक्षिणतोऽयं ग्राम अमुकग्रामादुत्तरतोऽमुकग्रामात्पूर्वतो वा इयद् द्वयनिवर्तनं क्षेत्रमित्यादि । यद्वा दानच्छेदोपवर्णनं दानच्छेदनिन्दोपवर्णनम् ।

दातुः पालयितुः स्वर्गं हर्तुर्नरकमेव च ।
षष्टिं वर्षसहस्राणि दानच्छेदफलं लिखेत् ॥

इति **बृहस्पति**वचनस्वरसात् । प्रसादलेख्याख्यं शासनमाह **बृहस्पतिः**

देशादिकं यस्य राजा लिखितेन प्रयच्छति ।
सेवाशौर्यादिना तुष्टः प्रसादलिखितं हि तत् ॥ इति ।

जयपत्राख्यमपि **स** एवाह

यद्वृत्तं व्यवहारेषु पूर्वपक्षोत्तरादिकम् ।
क्रियावधारणोपेतं जयपत्रेऽखिलं लिखेत् ॥
पूर्वोत्तरक्रियायुक्तं निर्णयान्तं यदा नृपः ।
प्रदद्याज्जयिने लेख्यं जयपत्रं तदुच्यते ॥

**वृद्धवसिष्ठः**

यथोपन्यस्तसाध्यार्थसंयुक्तं सोत्तरक्रियम् ।
सावधारणकं चैव जयपत्रकमिष्यते ॥
प्राड्विवाकादिहस्ताङ्कं मुद्रितं राजमुद्रया ।

आदिपदेन सभ्यादिपरिग्रहः ।

सभासदश्च ये तत्र स्मृतिशास्त्रविदः स्थिताः ।
यथा लेख्यविधौ तद्वत् स्वहस्तं दद्युरेव ते ॥

इति **स्मृत्यन्तर**स्मरणात् ।

सिद्धेऽर्थे वादिने दद्याज्जयिने जयपत्रकम् ॥ इति ।

अत्र विशेषमाह **कात्यायनः**

अर्थिप्रत्यर्थिवाक्यानि प्रतिज्ञा साक्षिवाक्तथा ।
निर्णयश्च यथा तस्य यथा चावधृ(?)तं स्वयम् ॥
एतद्यथाक्षरं लेख्ये यथापूर्वं निवेशयेत् ।
सभासदश्च ये तत्र स्मृतिशास्त्रविदस्तथा ॥
यथा लेख्यविधौ तद्वत्स्वहस्तं तत्र दापयेत् ।
अभियोक्त्राभियुक्तानां वचनं प्राङ् निवेशयेत् ॥
सभ्यानां प्राड्विवाकस्तु कुलानां च ततः परम् ।
निश्चयं स्मृतिशास्त्रस्य मतं तत्रैव लेखयेत् ॥
अनेन विधिना लेख्यं पश्चात्कारं विदुर्बुधाः ।
निरस्ता तु क्रिया यत्र प्रमाणेनैव वादिनाम् ॥
पश्चात्कारो भवेत्तत्र न सर्वेषु विधीयते ॥ इति ।

पश्चात्कारो जयपत्रम् । यत्र पुनः प्रमाणेन क्रिया निरस्ता तत्रैव नान्यत्र । **पारिजात**स्त्वन्यथाह—यत्र दिव्यमानुषक्रियाव्यतिरेकेण वादिप्रतिवादिनोर्वचनपर्यालोचनादिनाऽन्यतरपक्षावधारणं तत्पश्चात्कारसंज्ञकं जयपत्रं न सर्वत्रेति । जयपत्रं चतुष्पाद्व्यवहारेष्वेव ।

साधयेत्साध्यमर्थं यच्चतुष्पादान्वितं च यत् ।
राजमुद्राङ्कितं चैव जयपत्रकमिष्यते ॥

इति **स्मृत्यन्तर**स्मरणात् । एवं चान्यवाद्यादिहीनवादिषु न जयपत्रम्, किन्तु हीनपत्रमेव तद्धि कालान्तरे दण्डप्राप्त्यर्थम् । जयपत्रं तु प्राङ्न्यायविधिसिद्ध्यर्थमिति विशेषः ॥ अथ

सामन्तेष्वथ भृत्येषु राष्ट्रपालादिकेषु च ।
कार्यमादिश्यते येन तदाज्ञापत्रमुच्यते ॥
ऋत्विक्पुरोहिताचार्यमान्येष्वभ्यर्हितेषु तु ।
कार्यं निवेद्यते येन एवं प्रज्ञापना मता ॥

इत्यादीनि **वसिष्ठो**क्तानि आज्ञाप्रज्ञापनादिपत्राणि व्यवहारविधौ नातीवोपभुक्तानीति नेह प्रतन्यन्ते ।

———o———

## अथ सलेख्यम्

तत्र कात्यायनः

राजा क्रियां समाहूय यथान्यायं विचारयेत् ।
लेख्याचारेण लिखितं साक्षाचारेण साक्षिणः ॥

सव्यक्तवर्णवाक्यादिको लेख्याचारः । तथा

लेख्यं तु साक्षिमत्कार्यमविलुप्ताक्षरक्रमम् ।
देशाचारस्थितियुतं समर्थं सर्ववस्तुषु ॥

नारदः

देशाचाराऽविरुद्धं यद्व्यक्ताधिविधिलक्षणम् ।
तत्प्रमाणं स्मृतं लेख्यमविलुप्तक्रमाक्षरम् ॥

विधानं विधिः । आधेर्विधिराधीकरणं तस्य लक्षणं गोप्याधिकालकृतमित्यादि तद्व्यक्तं विस्पष्टं यस्मिंस्तद्व्यक्ताधिविधिलक्षणम् । स्पष्टबन्धकविधानप्रकारमिति यावत् । एतचाधिपत्राभिप्रायम् । अविलुप्तक्रमाक्षरमिति अर्थानां क्रमः क्रमश्चाक्षराणि च क्रमाक्षराणि अविलुप्तानि क्रमाक्षराणि यस्मिंस्तत्तथा ।

कात्यायनः

वर्णवाक्यक्रियायुक्तमसन्दिग्धं स्फुटाक्षरम् ।
अहीनक्रमचिह्नं तु लेख्यं तत्सिद्धिमाप्नुयात् ॥

क्रियाऽत्र साध्यम् । चिह्नं मुद्रा, सा च राजादिकृता ।

याज्ञवल्क्यः

विनाऽपि साक्षिभिर्लेख्यं स्वहस्तलिखितं च यत् ।
तत्प्रमाणं स्मृतं सर्वं बलोपधिकृतादृते ॥

यल्लेख्यं अधमर्णेन साक्षिभिर्विनापि लिखितम्, तत्प्रमाणं स्मृतं मन्वादिभिरिति शेषः । बलोपधिकृतादृते । बलं बलात्कारः, उपधिः छद्म । बलोपधिकृतत्वमात्रोपलक्षणम् । तेनान्यैरपि शिशुप्रभृतिभिः कृतसलेख्यमवगन्तव्यम् ।

कात्यायनः

ख्यापितं चेद्द्वितीयेऽह्नि न कश्चिद्विनिवर्तते ।
यथा तु स्यात्प्रमाणं तन्मत्तोन्मत्तकृतादृते ॥

याज्ञवल्क्यः

देशान्तरस्थे दुर्लेख्ये नष्टोन्मृष्टे हृते तथा ।
भिन्ने दग्धे तथा छिन्ने लेखमन्यत्तु कारयेत् ॥

अत्र व्यवहारासमर्थे पत्रे पत्रान्तरं कारयेदिति विधीयते। व्यवहारासमर्थत्वं च देशान्तरस्थत्वादिभिः। देशान्तरस्थे अत्यन्तदूरदेशस्थे। दुर्लेख्ये दुष्टानि सन्दिग्धानि अवाचकानि वा लेख्यानि लिप्यक्षराणि पदानि वा यस्मिन् तत्र। उन्मृष्टे मषीदौर्बल्यादिना मृदिताक्षरे। हृते तस्करादिना, भिन्ने विदलिते, छिन्ने द्विधाभूते। अत्र लेख्यान्तरकरणं वादिप्रतिवादिसमतायेव। विमतौ तु व्यवहारप्राप्तौ विदेशगतपत्रानयनाय समयं दद्यात्। नष्टपत्रादौ तु साक्षिभिर्निर्णयः।

अत एव नारदः

लेख्ये देशान्तरे नष्टे शीर्णे दुर्लिखिते हृते।
सतस्तत्कालकरणमसतो द्रष्टृदर्शनम्॥ इति।

सतो वर्तमानस्य पत्रस्य देशान्तरस्थस्यानयनाय कालकरणं कालोऽवधित्वेन देयः। द्रष्टृदर्शनं पूर्वं ये द्रष्टारः साक्षिणस्तैर्दर्शनं व्यवहारसमापनं कार्यम्। साक्ष्यभावे तु दिव्येनैव निर्णय इति।

अलेख्यसाक्षिकैर्देवीं व्यवहारे विनिर्दिशेत्। इति वचनात्।

कात्यायनः

मलैर्यद्भेदितं दग्धं छिद्रितं वीतमेव च।
तदन्यत्कारयेल्लेख्यं स्वेदेनोल्लिखितं तथा॥

वीतमपगतम्॥

---

## अथ दुष्टलेख्यम्

तत्र कात्यायनः

साक्षिदोषोद्भवे दुष्टं पत्रं वै लेखकस्य च।
धनिकस्योपधादोषात्तथा धारणिकस्य च॥
दुष्टैर्दुष्टं भवेल्लेख्यं शुद्धैः शुद्धं विनिर्दिशेत्।
तत्पत्रमुपधादुष्टैः साक्षिलेखककारकैः॥

उपधा आशयदोषः।

पुनः कात्यायनः

स्थानभ्रष्टास्त्वपङ्क्तिस्थाः सन्दिग्धा लक्षणच्युता
यत्रैते स्युः स्थिता वर्णा लेख्यं दुष्टं तथा भृगुः

तथा—

धनिकेन स्वहस्तेन लिखितं साक्षिवर्जितम्।
भवेत्कूटं न चेत्कर्ता कृतं हीति विभावयेत्॥

देशाचारविरुद्धं यत्सन्दिग्धं क्रमवर्जितम् ।
कृतमस्वामिना यच्च साध्यहीनं च दुष्यति ॥ इति ।

न चेदित्यादि । कर्ता लेखनकर्तोत्तमर्णः अधमर्णसम्प्रतिपत्त्या मयैतल्लिखितमिति यदि न विभावयेत्तदा तत्कूट भवेन्न प्रमाणत्वेन निश्चीयत इत्यर्थः ।

हारीतोऽपि

यच्च काकपदाकीर्णं तल्लेख्यं कूटतामियात् ।
बिन्दुमात्रादिहीनं यत्संहितं चरितं च यत् ॥

बृहस्पतिः

मुमूर्षुशिशुभीतार्तैः स्त्रीमत्तव्यसनातुरैः ।
निशोपधिबलात्कारकृतं लेख्यं न सिध्यति ॥

मुमूर्ष्वादिलिखितमयथार्थत्वशङ्कया न प्रमाणतां प्रतिपद्यत इति बृहस्पतिवचनतात्पर्यार्थम् ।

नारदः

अश्रुतार्थमभूतार्थं व्याहतार्थं तथैव च ।
लेख्यं न सिद्धिमाप्नोति जीवत्स्वपि हि साक्षिषु ॥

अश्रुतार्थं सम्यगप्रतीतार्थम् । अभूतार्थं युक्तिभिरनुसन्धीयमानो यस्यार्थोऽसत्य एव तत् । व्याहतार्थं पूर्वापरविरुद्धार्थम् ॥

बृहस्पतिः

दूषितो गर्हितः साक्षी यत्रैको विनिवेशितः ।
कूटलेख्यं तु तत्प्रोक्तं लेखको वापि तद्विधः ॥
यदुज्ज्वलं चिरकृतं मलिनं स्वल्पकालिकम् ।
भग्नोन्मृष्टाक्षरयुतं लेख्यं कूटत्वमाप्नुयात् ॥

तद्विधो गर्हितः । लेखकोऽपि गर्हितो यत्र तदपि कूटलेख्यं प्राहुरित्यर्थः ॥

---

## अथ दूषितलेख्यपरीक्षणम्

तत्र कात्यायनः

साक्षिलेखककर्तारः कूटतां यान्ति ते यथा ।
तथा दोषाः प्रयोक्तव्या दुष्टैर्लेख्यं प्रदुष्यति ॥

तत्र ये गूढदोषास्ते वादिना वक्तव्याः, ये पुनः प्रकटास्ते सभ्यैरेवोद्भावनीयाः। तथा च स एव—

प्रमाणस्य हि ये दोषा वक्तव्यास्ते हि वादिना।
गूढास्तु प्रकटाः सभ्यैः काले शास्त्रप्रदर्शनात्॥ इति।

प्रमाणस्य प्रमाणत्वेनोपन्यस्तस्य काले प्रमाणपरीक्षाकाल इत्यर्थः। समयातिक्रमेणोपन्यस्तास्तु दोषा न प्रामाण्यं निघ्नंति।

तथा च बृहस्पतिः

लेख्यदोषास्तु ये केचित्साक्षिणश्चैव ये स्मृताः।
वादकाले तु वक्तव्याः पश्चादुक्तं न दूषयेत्॥ इति।

पश्चात् प्रमाणपरीक्षापर्यवसानानंतरम्। उक्तं दूषणं वाद्युपन्यस्तप्रमाणं न दूषयेदित्यर्थः।

व्यासः

लेख्यमालेख्यवत्केचिल्लिखन्ति कुशला नराः।
तस्मान्न लेख्यसामर्थ्यात्सिद्धिरैकान्तिकी मता॥ इति।

कात्यायनः

राजा क्रियां समाहूय यथान्यायं विचारयेत्।
लेख्याचारेण लिखितं साक्ष्याचारेण साक्षिणः॥
दर्पणस्थं यथाबिम्बमसत् सदिव दृश्यते।
तथा लेख्यस्य बिम्बानि कुर्वन्ति कुटिला नराः॥

क्रियां विचारयेदित्यन्वयः। समाहूय वादिन इति शेषः। व्यक्तवर्णवाक्यादिको लेख्याचारः साक्ष्याचारो वक्ष्यमाणलक्षणः। तेन सम्यक्परीक्षणीयं लेख्यमित्यर्थः।

तथा च नारदः

पुरुषाः सन्ति लोभाद्यैर्विब्रूयुः कार्यमन्यथा।
सन्ति चान्ये दुरात्मानः कूटलेख्यकृतो नराः॥
परीक्ष्यमेतदुभयं स्वयं राज्ञा विशेषतः।
लेख्याचारेण लिखितं साक्ष्याचारेण साक्षिणः॥ इति।

बृहस्पतिः

ज्ञात्वा कालं च देशं च कुशलाः कूटकारकाः।
कुर्वन्ति सदृशं लेख्यं तद्यत्नेन विचारयेत्॥
स्त्रीबालार्तानलिपिज्ञान् वञ्चयन्ति स्वबान्धवाः।
लेख्यं कृत्वा स्वनामाङ्कं ज्ञेयं युक्त्यागमैस्ततः॥

त्रिविधस्यापि लेख्यस्य भ्रान्तिः संजायते यदा ।
ऋणिसाक्षिलेखकानां हस्तैक्याच्छोध्यते ततः ॥
उज्ञा(? द्या)मसुदयादानादाधानं फलसङ्ग्रहात् ।
प्रयोगित्वं धनाद्यत्वाज्ज्ञेयं यत्रोपधिः कृतः ॥

त्रिविधस्यापीति ।

राजलेख्यं स्थानकृतं सहस्तलिखितं तथा ।
लेख्यं तु त्रिविधं प्रोक्तं भिन्नं तद्बहुधा पुनः ॥

इति बृहस्पत्युक्तविधानत्रयवतः । उदयो वृद्धिः । आधानमाधिः । फलसग्रहः फलोपभोगः । प्रयोगित्वमुत्तमर्णत्वम् । यत्र पत्रादावुपधिः कपट उद्भावितः तत्रोज्ञा(? द्या)मादिकं धृक्रयादिग्रहणादवधारणीयम् ।

याज्ञवल्क्यः

सन्दिग्धलेख्यशुद्धिः स्यात्स्वहस्तलिखितादिभिः ।
युक्तिप्राप्तिक्रियाचिह्नसंबन्धागमहेतुभिः ॥

स्वहस्तलिखितं प्रमितस्वहस्तलिखितान्तरं सदृशं आदिशब्दात्साक्षिलेखकस्वहस्तलिखितान्तरपरिग्रहः ।

तथा च व्यासः

सन्देहेऽपि च लेख्यस्य विशुद्धिः परिकीर्तिता ।
ऋणिसाक्षिलेखकानां स्वहस्ताक्षरपंक्तिभिः ॥

युक्तिप्राप्तिः । अस्मिन्देशेऽस्मिन्कालेऽस्य पुरुषस्य इदं द्रव्य घटत इत्यादिरूपा । यद्वा, युक्तिः प्राप्तिरिति हेतुद्वयं यस्मिन्काले सहस्रग्रहण पत्रे लिखितमस्ति तस्मिन् काले नास्य सहस्रसंभावना न वा मम सहस्रेण प्रयोजन सेयमाशंका युक्त्या निराक्रियते। अस्ति तत्काले सहस्रसभावना अस्ति चास्य सहस्रेण प्रयोजनमिति । अथैवं मते—नास्त्येव मम तदा तद्देशप्राप्तिः देशान्तरस्थत्वात् सा चाप्राप्तिस्तदा तद्देशसन्निधानेन निराक्रियते अस्त्यनयोस्तद्देशप्राप्तिरिति । क्रिया तत्साक्ष्युपन्यासः। चिह्नमसाधारणं स्वहस्तमुद्रादिसम्बन्धः अर्थिप्रत्यर्थिनोः परस्परविश्वासेन पूर्वमपि दानग्रहणादिरूपः। आगमोऽस्यैतावतो धनस्य सम्भावितः प्राप्त्युपायद्रव्यहेतुभूता क्रिया वा । एतैः स्वहस्तादिभिर्हेतुभिः सन्दिग्धालेख्यशुद्धिः स्यादित्यन्वयः । यत्र पुनरन्य एव ऋणं ददाति पत्रं च केनापि हेतुना अन्यनाम्ना लिखित तत्र विप्रतिपत्तौ सम्बन्धागमादिहेतुभिर्निर्णयः कार्यः यस्य नाम्ना तत्पत्रं कृत तेन सह यदि धनप्रयोक्तुरेवंविधविश्वासहेतुः सम्बन्धः कश्चिदस्ति । एवमागमे तदीयपंजिकाया यदि पुराणाक्षरेण पत्रस्थदिनमासद्रव्यसङ्ख्यादीनि प्रतीयन्ते तदा तदपि प्रमाणमेव ।

तदाह नारदः

लेख्यं यच्चान्यनामाङ्कं हेत्वन्तरकृतं भवेत् ।
विप्रत्यये प्रतीक्ष्यं तत्सम्बन्धागमहेतुभिः ॥ इति ।

यदि पुनः स्वहस्तनिह्नवेन लिखितं दूषयति तदा तदारूढसाक्ष्यादितो दुष्टमदुष्टं वेति निश्चेतव्यम् ।

तथा च कात्यायनः

दत्तलेख्ये स्वहस्तं तु ऋणिको यदि निह्नुते ।
पत्रस्थैः साक्षिभिर्वाच्यो लेखकस्य मतेन च ॥ इति ।
यच्चान्यस्य कृतं लेख्यमन्यहस्तेषु दृश्यते ।
अवश्यं तेन वक्तव्यं पत्रस्यागमनं ततः ॥

ततो लेख्यस्वामिनः सकाशादित्यर्थः ।

कात्यायनः

न लेखकेन लिखितं न दृष्टं साक्षिभिस्तथा ।
एवं प्रत्यर्थिनोक्ते तु कूटलेख्यं प्रकीर्तितम् ॥

उक्ते, तथ्येनेति शेषः ।

तथा च बृहस्पतिः

नातथ्येन प्रमाणं तु दोषेणैव तु दूषयेत् ।
मिथ्याभियोगे दण्ड्यः स्यात्साध्यार्थाच्चापि हीयते ॥ इति ।

कात्यायनः

कूटोक्तौ साक्षिणा वाक्यं लेखकस्य च पत्रकम् ।
नयेच्छुद्धिं न यः कूटं स दाप्यो दम उत्तमम् ॥ इति ।

साक्षिणा वाक्यं लेखकस्य पत्रं च प्रति अभियुक्तेन कूटोक्तौ कृतायां स्वहस्तलिखितादिना वादी यदि कूटं पत्रं शुद्धिं न(?)नयेत् तर्हि स उत्तमसाहसं दण्ड्यः ।

व्यासः

स्थावरे विक्रयाधाने कूटलेख्यं करोति यः ।
स सम्यग्भावितः कार्यो जिह्वापाण्यङ्घ्रिवर्जितः ॥

सम्यग्भावितः कूटलेखकर्तृत्वेन सम्यक् निश्चित ।

नारदः

आहर्ता भुक्तियुक्तोऽपि लेख्यदोषान्विशोधयेत् ।
तत्सुतो भुक्तिदोषास्तु लेख्यदोषास्तु नाप्नुयात् ॥

आहर्ता ग्रहीता ।

**बृहस्पतिः**

उद्धरेल्लेख्यमाहर्ता तत्पुत्रो भुक्तिमेव तु।
अभियुक्तः प्रमीतश्चेत्तत्पुत्रोऽपि तमुद्धरेत् ॥

यथाहर्ता अभियुक्तो लेख्योद्धारमकृत्वैवोपरतस्तदा तत्सुतोऽपि तल्लेख्यमुद्धरेदित्युत्तरार्द्धस्यार्थः ।

**कात्यायनः**

अथ पञ्चत्वमापन्नो लेखकः सह साक्षिभिः ।
तत्स्वहस्तादिभिस्तेषां विशुद्धिस्तु न संशयः ॥
ऋणिस्वहस्तसन्देहे जीवतो वा मृतस्य वा ।
तत्स्वहस्तकृतैरन्यैः पत्रैस्तल्लेख्यनिर्णयः ॥

ऋणिस्वहस्त इत्युपलक्षणम् । साक्षिस्वहस्तसन्देहे लेखकस्वहस्तसन्देहेऽपि प्रमीततत्तत्स्वहस्तान्तरादिना निर्णयो बोद्धव्यः ।

तथा च **विष्णुः**

यत्रर्णी धनिको वापि साक्षी वा लेखकोऽपि वा ।
म्रियते तत्र तल्लेख्यं तत्स्वहस्तैः प्रसाधयेत् ॥ इति ।

राजकीयं लेख्यं प्रत्याह **कात्यायनः**

मुद्राशुद्धं क्रियाशुद्धं पारम्पर्यानुमोदितम् ।
अदूषितं च स्पष्टं च क्रियाचिह्नविभावकम् ॥
ईदृशं सिद्धिमाप्नोति शासनं नृपचिह्नितम् ।

क्रियाशुद्धं ससाक्षिकम्, अपशब्दानन्वयादिरहितं वा । पारम्पर्यानुमोदितं प्रमाणितपरम्परया स्वीकृतम् । क्रियाचिह्नविभावकं संबन्धप्रयोजकरूपोपपन्नम् । तथा

पश्चात्कारनिरुद्धं यत्तद्यत्नेन विचारयेत् ।
यदि साधुक्तियुक्तं च प्रमाणं लिखितं तदा ॥
अन्यथा मूलतः कार्यं पुनरेव विनिर्णयेत् ।
अतथ्यं तथ्यभावेन स्थापितं ज्ञानविभ्रमात् ॥
निरर्थं तत्प्रमाणं स्यादात्मनाऽपि कृतं नृपैः ॥ इति ।

पश्चात्काराख्यजयपत्रत्वेन निरुद्धम् । अन्यथा कार्यं विवादपदम् । मूलतः मूलादारभ्य ।

तथा

समुद्रे तु यदा लेख्ये मृताः सर्वेऽपि तत्स्थिताः ॥
लिखितं तत्प्रमाणं तु मृतेष्वपि हि तेषु वै ।

अत्र मुद्रादिवशात्प्रमाणमित्यर्थः ।

अत एव शासनमुदाहृत्य प्रजापतिः

कार्यो यत्नेन महता निर्णयो राजशासने ।
राज्ञा स्वहस्ततो मुद्रालेखकाक्षरदर्शनात् ॥

मुद्रालेखकाक्षरदर्शनात् मुद्रालेखकाक्षरयोर्दर्शनात् ।



## अथ लेख्यबलाबलचिन्ता

बृहस्पतिः

कुलश्रेणिगणादीनां यथाकालं प्रदर्शयेत् ।
श्रावयेत्स्मारयेच्चैव यथा स्याद्बलवत्तरम् ॥

नारदः

यदि लब्धं भवेत्किंचित्प्रज्ञप्तिर्वा कृता भवेत् ।
प्रमाणमेव लिखितं मृता यद्यपि साक्षिणः ॥

प्रज्ञप्तिमेव प्रपंचयति स एव

दर्शितं प्रतिकालं यत् श्रावितं स्मारितं च यत् ।
लेख्यं सिध्यति सर्वत्र मृतेष्वपि हि साक्षिषु ॥

प्रतिकालं पुनः पुनः । अत्र साक्षिपदं लेखकप्रभृतीनामुपलक्षणम् ।

कात्यायनः

दृष्टे पत्रे स्फुटं दोषं नोक्तवानृणिको यदि ।
ततो विंशतिवर्षाणि क्रान्तं पत्रं स्थिरं भवेत् ॥
शक्तस्य सन्निधावर्णे(? सन्निधौ बन्धे)यस्य लेख्येन भुज्यते ।
वर्षाणि विंशतिं यावत्तत्पत्रं दोषवर्जितम् ॥
अथ विंशति वर्षाणि आधिर्भुक्तस्तु निश्चितः ।
तेन लेख्येन तत्सिद्धिर्लेख्यदोषविवर्जिता ॥
सीमाविवादे निर्णीते सीमापत्रं विधीयते ।
तस्य दोषाः प्रयोक्तव्या यावद्वर्षाणि विंशतिम् ॥
आधानसहितं यत्र ऋणं लेख्ये निवेशितम् ।
मृतसाक्षिप्रमाणं तु स्वल्पभोगेऽपि तद्विदुः ॥

प्राप्तं वा तेन चेत्किंचिद्देयं चाथ निरूपितम् ।
विनापि मुद्रया लेख्यं प्रमाणं मृतसाक्षिकम् ॥ इति ।

यत्र पत्रे आधानसहितं शुद्रादिबन्धकसहितमृणं निवेशितं तत्पत्रं मृतसाक्ष्यपि स्वल्पभोगेन प्रमाणं विदुरित्यर्थः । भोगस्य च स्वल्पत्वं विंशतिवर्षापेक्षया । प्राप्तं चेत्यादि । तल्लिखिते पुरस्कृत्य यदि धनिकेन दत्तमृणं ग्राहकेन च किंचिदाप्तं ऋणग्राहकेण वा किंचिद्दत्तं धनिकेनाप्तं तदस्वहस्तितमपि प्रमाणमित्यर्थः ।

व्यासः

स्वहस्तकाज्जानपदं तस्मात्तु नृपशासनम् ।
प्रमाणतरमिष्टं हि व्यवहारार्थमागतम् ॥
द्वित्रिलिपिज्ञः स्वकृतमन्यलेख्येन युक्तिभिः ।
कुर्याद्धि सदृशं लेख्यं तस्माज्जानपदं शुभम् ॥
अप्रकाशात्साक्षियुक्तं लेखकाक्षरमुद्रितम् ।
लोकप्रसिद्धं स्वकृताद्वरमन्यकृतं शुभम् ॥
देशाध्यक्षादिना लेख्यं यत्र जानपदं कृतम् ।
समकालं पश्चिमं वा तत्र राजकृतं शुभम् ॥

स्वहस्तकात् स्वहस्तकृतलेख्यात् । अप्रकाशात् कृतादित्यन्वयः । अत्र बलवत्त्वमुत्तरोत्तरस्य कूटत्वासंभवात्तारतम्यतो बोद्धव्यम् ।

संवर्तः

लेख्ये लेख्यक्रिया प्रोक्ता वाचिके वाचिकी मता ।
वाचिकी तु न सिद्ध्येत्सा लेख्यस्योपरि या क्रिया ॥
लेख्यस्योपरि यत्साक्ष्यं कूटं तदभिधीयते ।
अधर्मस्य हि तद्द्वारमतो राजा विवर्जयेत् ॥
वाचिकैर्यदि सामर्थ्यमक्षराणां विहन्यते ।
क्रियाणां सर्वनाशः स्यादनवस्था च जायते ॥

लेख्ये लिखिते लेख्यरूपा क्रिया प्रोक्ता । विरोधिनीति शेषः । वाचिके वचने वाचिकी वचनरूपैव तथाभूतेत्यर्थः । अन्ये तु लेख्ये लेख्यगम्ये । लेख्यरूपा क्रिया प्रोक्ता प्रशस्तोक्ता । वाचिके वचनगम्ये वाचिकी साक्षिरूपा मता सम्मतेत्याहुः । लेख्यस्योपरि यत्साक्ष्यं लेख्यस्योपरि या क्रिया सा न प्रमाणं, साक्षिवचनाद् वादकमुक्तिप्रवर्तकस्वहस्तवतो लेख्यस्याधिकबलवत्त्वौचित्यात् । क्रियाणां लेख्यरूपाणाम् ।

कात्यायनः

न दिव्यैः साक्षिभिर्वाऽपि हीयते लिखितं क्वचित्।
लेख्यधर्मः सदा श्रेष्ठो ह्यतोऽन्येन न हीयते ॥
तद्युक्तिप्रतिलेख्येन तद्विशिष्टेन वा सदा ।
लेख्यक्रिया निरस्येत न साक्षिशपथैः क्वचित् ॥

बृहस्पतिरपि

न जातु हीयते लेख्यं साक्षिभिः शपथेन वा ।
अदर्शनाऽसाधिताभ्यां हानिं प्राप्नोत्युपेक्षया ॥

बहुकालव्यापिन्येति शेषः ।

बृहस्पतिरेव

आढ्यस्य निकटस्थस्य यच्छक्तेन न याचितम् ।
शुद्धर्णाशंकया तत्तु लेख्यं दुर्बलतामियात् ॥
लेख्यं त्रिंशत्समातीतमदृष्टाश्रावितं च यत् ।
न तत्सिद्धिमवाप्नोति तिष्ठत्स्वपि च साक्षिषु ॥

शुद्धर्णाशङ्कया निस्तीर्णमृणमित्याशङ्कया । अदर्शनेऽपि विशेषमाह स एव ।

प्रयुक्ते शान्तलाभे तु लिखितं यो न दर्शयेत् ।
न याचते च ऋणिकं तत्सन्दिग्धमवाप्नुयात् ॥

शान्तलाभे अधमर्णमस्तकाले ।

व्यासः

अदृष्टाऽश्रावितं लेख्यं प्रमीतधनिकर्णिकम् ।
अवन्धलग्नकं चैव बहुकालं न सिद्ध्यति ॥

अवन्धलग्नकं आधिप्रतिभूरहितम् । बहुकालं बहुकालीनम् ।

नारदः

मृताः स्युः साक्षिणो यत्र धनिकर्णिकलेखकाः ।
तदप्यनर्थं लिखितं ऋते त्वाधेः स्थिराश्रयात् ॥

आश्रयो भोगः । एतदपवादमाह बृहस्पतिः

उन्मत्तजडबालानां राजभीतप्रवासिनाम् ।
अप्रगल्भभयार्तानां न लेख्यं हानिमाप्नुयात् ॥

लेख्यमित्यत्र अदृष्टाऽश्रावितमपीति शेषः ।

**कात्यायनः**

यल्लेख्यं प्राड्विवाकैर्न दृष्टं दृश्यं प्रतिश्रुतम् ।
अलब्धं तु हृते लेख्ये कथं तत्प्राप्नुयाद्धनी ॥
आधानमुपरुद्धो या यावत्तिष्ठति लग्नकः ।
लेख्याभावे स्मृतं तावत्प्रमाणं द्रष्टृदर्शनम् ॥

यल्लेख्यं दृश्यदर्शनीयत्वेनाभ्युपगतं प्राड्विवाकादिभिश्च न दृष्टं तस्मिन् हृते अलब्धं धनं धनी कथं प्राप्नुयादित्यर्थः । कृत्स्नद्रव्यदानासमर्थं प्रत्याह **याज्ञवल्क्यः**

लेख्यस्य पृष्ठेऽभिलिखेद्दत्त्वा दत्त्वर्णिको धनम् ।
धनी चोपगतं दद्यात्स्वहस्तपरिचिह्नितम् ॥

यदा अधमर्णः पत्रस्थसकलद्रव्यदानासमर्थः कदाचित्किंचित्कदाचिच्च किंचिद्दद्यात्तदा पूर्वकृतलेख्यपृष्ठे एतावन्मया दत्तमिति लिखेद् उत्तमर्णो चोपगतं प्राप्तं धनं तस्यैव पृष्ठे स्वहस्ताङ्कचिह्नितं लिखेदेतावन्मया प्राप्तमिति । अथवा प्राप्तधनस्य प्रवेशपत्रं स्वहस्तलिखितचिह्नितमुत्तमर्णोऽधमर्णाय दद्यात् । एवं क्रमेण सकृद्वा लेख्यस्थद्रव्ये दत्ते अधमर्णकर्तव्यमाह **याज्ञवल्क्यः**

दत्त्वर्णं पाटयेल्लेख्यं शु      वाऽन्यत्तु कारयेत् ।

धनिकस्य सकाशाद्गृहीतं धनमधमर्णो धनिकाय अर्थं दत्त्वा पूर्वलिखितं तत्पत्रं पाटयेत् । यदा तत्पत्रं नष्टं दूरदेशान्तरस्थं वा तदा अधमर्णः शुद्ध्यै स्वाधमर्णत्वनिवृत्तये अन्यलेख्यं कारयेत्, उत्तमर्णेन पूर्वोक्तरीत्योत्तमर्णो विशुद्धिपत्रमधमर्णाय दद्यादित्यर्थः । यदि ऋणग्रहणावसरे ससाक्षिकं लिखितं कृतम्, तदा प्रतिदानमपि पूर्वसाक्षिसमक्षमेव कुर्यात् ।

तदाह स एव

साक्षिमच्च भवेद्यद्वा तद्दातव्यं ससाक्षिकम् । इति ।

इति लिखितम् ।



## अथ भुक्तिः

तत्र बृहस्पतिः

एतद्विधानमाख्यातं साक्षिणां लिखितस्य च ।
साम्प्रतं स्थावरे प्राप्तेर्भुक्तेश्च विधिरुच्यते ॥
विद्यया क्रयबन्धेन शौर्यभार्यान्वयागतम् ।
सपिण्डस्याप्रजस्यांशः स्थावरं सप्तधा स्मृतम् ॥

विद्यया प्रतिग्रहादिप्रकारेण क्रयेण प्रसिद्धेन बन्धेन बन्धकेन । शौर्यागतं युद्धादिना प्राप्तम् । भार्यागतं भार्यया सह लब्धम् । अन्वयागतं पित्रादिक्रमादागतम् ।

तथा

पित्र्ये लब्धे क्रयाधाने ऋक्थशौर्यप्रवेदनात् ।
प्राप्ते सप्तविधे भोगः सागमः सिद्धिमाप्नुयात् ॥
क्रमागतः शासनिकः क्रयाधानागमान्वितः ।
एवंविधस्तु यो भोगः स तत्सिद्धिमवाप्नुयात् ॥
संविभागक्रयप्राप्तं पित्र्य लब्धं च राजतः ।
स्थावरं सिद्धिमाप्नोति भुक्त्या हानिमुपेक्षया ॥
प्राप्तमात्रं येन भुक्तं स्वीकृत्यापरिपन्थितम् ।
तस्य तत्सिद्धिमाप्नोति हानिं चोपेक्षया तथा ॥
अध्यासनात्समारभ्य भुक्तिर्यस्याविघातिनी ।
त्रिंशद्वर्षाण्यविच्छिन्ना तस्य तां न विचालयेत् ॥ इति ।

पित्र्य इत्यादिना सप्तविधस्थावरस्य भोगविषयतया अनुवादः । प्रवेदनं विवाहः । अपरिपन्थितं अविरोधितम् । अध्यासनं अधिकृत्यावस्थानं प्राथमिकः सम्बन्धः । अविघातिन्यविघ्ना ।

विष्णुकात्यायनौ

सागमेन तु भोगेन भुक्तं सम्यग्यदा तु यत् ।
आहर्ता लभते तत्र नापहार्यं तु तत्क्वचित् ॥

आगमः स्वत्वहेतुः क्रयप्रतिग्रहादिः । भोगश्चागमाद्विपञ्चकोपेत एव प्रमाणम् ।

तदाह व्यासः

सागमो दीर्घकालश्च निश्छिद्रोऽन्यरवोज्झितः ।
प्रत्यर्थिसंनिधानश्च पञ्चांगो भोग इष्यते ॥

निश्छिद्रो विच्छेदरहितः । अन्यरवोज्झितः इदं क्षेत्रादिकमनेन बलाद्भुज्यत इत्यादिनापरापवादविधुरः । सनिधानश्च प्रत्यर्थिनः सनिधानं यस्य स तथा ।

बृहस्पतिः

यद्येकशासने ग्रामक्षेत्रारामाश्च लेखिताः ।
एकदेशोपभोगेऽपि सर्वे भुक्ता भवन्ति ते ॥

एकशासन इत्यादि । एकस्मिन् ताम्रादिशासनपट्टे । लिखितक्षेत्राद्यन्यतमभोगेनापि अनुपभुक्तापरभोगोऽपि स्वत्वमायातीत्यर्थः ।

नारदः

आदौ तु कारणं दानं मध्ये भुक्तिस्तु सागमा ।
कारणं भुक्तिरेवैका संतता या चिरन्तनी ॥

आदौ आद्ये पुरुषे दानमिति प्राप्त्युपायोपलक्षणम् । कारणं प्रमाणं तच्च साक्षिभिर्भावितं द्रष्टव्यम् । मध्ये समनन्तरपुरुषद्वये । चतुर्थादिषु सतता अविच्छिन्ना चिरन्तनी पुरुषत्रयानुगता भुक्तिरेव प्रमाणम् ।

विष्णुकात्यायनौ

पित्रा भुक्तं तु यद्द्रव्यं भुक्त्याचारेण धर्मतः ।
तस्मिन्प्रेते न वाच्योऽसौ भुक्त्या प्राप्तं हि तस्य तत् ॥
त्रिभिरेव तु या भुक्ता पुरुषैर्भूर्यथाविधि ।
लेख्याभावेऽपि तां तत्र चतुर्थः समवाप्नुयात् ॥

भुक्त्याचारेण आगमाद्यगसाहित्येन ।

कात्यायनः

भुक्तिर्बलवती शास्त्रे सन्तता या चिरन्तनी ।
विच्छिन्नाऽपि तु सा ज्ञेया या तु पूर्वप्रसाधिता ॥

पूर्वप्रसाधिता पूर्वैः पित्रादिभिः प्रसाधिता । ज्ञेया बलवतीत्यनुषङ्गः । अविच्छिन्नोऽप्यल्पकालीनो भोगो नागममपगमयितुमिष्टे किंतु साक्षिरूपं प्रमाणम् ।

तत्राह स एव

आदानकालादारभ्य भुक्तिर्या तु निरन्तरा ।
आदानं प्राप्य तस्यां तु प्रायः साक्ष्यं प्रवर्तते ॥

आदानं आहर्तप्रतिग्रहादिकम् । प्रायःपदेनादानाहित्वित्वादिकमपि गृह्यते ।

तथा

स्मार्ते काले क्रिया भूमेः सागमा भुक्तिरिष्यते ।
अस्मार्तेऽनुगमाभावात् क्रमात्त्रिपुरुषागता ॥

स्मृतिः स्मरणं तत्सम्बन्धी स्मार्तः स्मरणयोग्यः । स च वर्षशतरूपः 'शतायुर्वै पुरुषः' इति श्रुतेः। एतद्विलक्षणोऽस्मार्तः। क्रिया प्रमाणम्। अनुगमः आगमप्रतिसन्धानम्। तदभावात्

**याज्ञवल्क्यः**

आगमोऽभ्यधिको भोगाद्विना पूर्वक्रमागतात् ॥

आगमः क्रयादिः। साक्ष्यादिभिर्विभावितः आद्ये पुरुषे भोगापेक्षया अभ्यधिकः बलवान्। विनेति पूर्वेषां पित्रादीनां त्रयाणां क्रमः परम्परा तत आगतस्तस्माद्भोगाद्विना तेनागमाभावानिश्चये सति यस्त्रिपुरुषागतो भोगः स स्वतंत्रआगमनिश्चयं विनापि प्रमाणं भवतीति ततो नागमोऽभ्यधिक इत्यर्थः।

**व्यासः**

पिता पितामहो यस्य जीवेच्च प्रपितामहः।
त्रयाणां जीवतां भोगो विज्ञेयस्त्वेकपौरुषः ॥
प्रपितामहेन यद्भुक्तं तत्पुत्रेन विना च तम्।
तौ विना यस्य पित्रा च तस्य भोगस्त्रिपौरुषः ॥
वर्षाणि विंशतिं भुक्ता स्वामिनाऽव्याहता सती।
भुक्तिः सा पौरुषी भूमेर्द्विगुणा च द्विपौरुषी।
त्रिपौरुषी च त्रिगुणा न तत्रान्वेष्य आगमः ॥

भुक्ता कृता। **बृहस्पतिः**

अनुमानाद्वरः साक्षी साक्षिभ्यो लिखितं गुरु।
अव्याहता त्रिपुरुषी भुक्तिरेभ्यो गरीयसी ॥
अनुमानं सद्य एव साक्षी चामरणाद्भवेत्।
अव्याहतं लेख्यभोगं प्रमाणं तत् त्रिपौरुषम् ॥

अनुमानं आकारेंगितादिलिङ्गम्। सद्य एव विवादकाल एव प्रवर्तत इति शेषः।

**नारदः**

लिखितं बलवन्नित्यं जीवन्तस्त्वेव साक्षिणः।
कालातिहरणाद्भुक्तिरिति शास्त्रेषु निश्चयः ॥
त्रिविधस्यास्य दृष्टस्य प्रमाणस्य यथाक्रमम्।
पूर्वं पूर्वं गुरु ज्ञेयं भुक्तिरेभ्यो गरीयसी ॥

एभ्यः साक्षिलिखितस्वल्पकालीनभोगेभ्यो बहुकालीना भुक्तिर्बलवती। भोगागमविषये विशेषमाह **याज्ञवल्क्यः**

आगमस्तु कृतो येन सोऽभियुक्तस्तमुद्धरेत्।
न तत्सुतस्तत्सुतो वा भुक्तिस्तत्र गरीयसी ॥

येन पुरुषेण भूम्यादेरागम॰ क्रयप्रतिग्रहादिरूपः कृतः स पुरुषः किमत्र प्रमाणमित्यभियुक्तः सन् लिखितादि तमागममुद्धरेत् साधयेत्। तत्सुतो द्वितीयोऽभियुक्तो नागममुद्धरेत् किन्तु अविच्छिन्नाप्रतिरवसमक्षभोगम्, अनेन चागममनुद्धरतो द्वितीयस्य न दण्डः, अपि तु विशिष्टं भोगमनुद्धरतो दण्ड इति प्रतिपादितम्। तत्सुतस्तृतीयो नागमं नापि विशिष्टं भोगमुद्धरेत्, अपि तु क्रमागतं भोगमात्रम्। अनेनापि तृतीयस्य क्रमायातभोगानुद्धरणे दण्डो नागमानुद्धरणे न विशिष्टभोगानुद्धरणे चेति सूचितम्। तत्र तयोर्द्वितीयतृतीययोर्भुक्तिरेव गरीयसी। तत्रापि द्वितीये गुरुस्तृतीये गरीयसीति विवेक्तव्यम्। त्रिष्वेकेनाप्यागमानुद्धरणेऽर्थहानिः समानैव।

तथा च स्मृत्यन्तरम्

आगमस्तु कृतो येन स दण्ड्यस्तमनुद्धरन्।
न तत्सुतस्तत्सुतो वा भोग्यहानिस्तयोरपि॥ इति।

**कात्यायनः**

येनोपात्तं हि यद्द्रव्यं सोऽभियुक्तस्तदुद्धरेत्।
चिरकालोपभोगेऽपि भुक्तिस्तस्यैव नेष्यते॥

अर्जकस्य चिरकालभुक्तिरपि आगमविभावनं विना न प्रमाणमित्यर्थः।

यदाऽऽहर्ता विमुक्तः स्यात् लेख्यं साक्षि तदा गुरु।
भोक्त्रभावे हि भुक्तिस्तु सुते ताभ्यां गरीयसी॥

अर्जकः स्वार्जिते प्रमाणत्वेन लेख्यादिकं दर्शयेत्। अर्जकाभावे तत्सुतस्य लेख्यादितो भुक्तिरेव प्रमाणमित्यर्थः।

तथा

नोपभोगे बलं कार्यमाहर्त्रा तत्सुतेन वा।
पशुस्त्रीपुरुषादीनामिति धर्मो व्यवस्थितः॥

आदिपदं जङ्गमान्तरपरम्।

**याज्ञवल्क्यः**

योऽभियुक्तः परेतः स्यात्तस्य रिक्थी तमुद्धरेत्।
न तत्र कारणं भुक्तिरागमेन विना कृता॥

योऽर्जको भोगे क्रियमाणेऽभियुक्त. स कृतव्यवहारनिर्णय एव परेतो विनष्टस्तस्य ऋक्थी पुत्रादिस्तमागममुद्धरेत्। न तु तत्र तस्मिन् व्यवहारे पूर्वा भुक्तिः साक्ष्यादिभावितापि प्रमाणम्। पूर्वाभियोगेन तस्या भुक्तेर्मंदीकृतत्वात्।

अत एव **नारदः**

तथाऽऽरूढविवादस्य(प्रेतस्य ?) व्यवहारिणः।
पुत्रेण सोऽर्थः संशोध्यो न तं भोगो निवर्तयेत्॥ इति।

आरूढविवादस्येत्यनेनैवकारो द्रष्टव्य.। त विवादम्।

तथा

आगमेन विशुद्धेन भोगो याति प्रमाणताम्।
अविशुद्धागमो भोगः प्रामाण्यं नाधिगच्छति ॥
अनागमं भुज्यते यत्र तद्भुक्तिर्वंश(?)नयेत् ।
प्रेते तु कर्तरि धनं याति तद्वंशभोग्यताम् ॥
अनागमन्तु यो भुंक्ते बहून्यब्दशतान्यपि ।
चोरदण्डेन तं पापं दण्डयेत्पृथिवीपतिः ॥ इति।

यो भुंक्त इति सन्तानाभिप्रायम्।

तथा

अन्वाहितं हृतं न्यस्तं बलावष्टब्धयाचितम् ।
अप्रत्यक्षं च यद्भुक्तं षडेतान्यागमं विना ॥

अन्वाहितं पुनराहितं न्यस्तं समर्पितम्। एषां षण्णां भोगो यतोऽनागमः अतः स्वत्वे न प्रमाणम्।

याज्ञवल्क्यः

पश्यतोऽब्रुवतो भूमेर्हानिर्विंशतिवार्षिकी ।
परेण भुज्यमानाया धनस्य दशवार्षिकी ॥

परेणाऽसम्बन्धिपुरुषेण भुज्यमानां भुवं धनं वा अश्वादिकं यस्य पश्यतोऽब्रुवतो मदीयेयं भूस्त्वया न भोक्तव्या अश्वादिकं च मदीयं न भोक्तव्यमित्येवंरूपेण प्रतिषेधमकुर्वतस्तस्य स्वामिनस्तस्या भूमेर्विंशतिवार्षिकी अप्रतिरथविंशतिवर्षोपभोगनिमित्ता हानिर्भवति धनस्य च (अ?) प्रतिरथदशवर्षोपभोगनिमित्ता हानिर्भवति। नन्वेतद्वचनमनुपपन्नम्। नह्यप्रतिषेधात्स्वत्वमपगच्छति अप्रतिषेधस्य दानविक्रयादेरिव स्वत्वापगमहेतुत्वस्य लोकशास्त्रयोरप्रसिद्धत्वात्। प्रमाणस्य प्रमेयोत्पादकत्वानुपपत्तेश्च। रिक्थक्रयादिषु स्वत्वकारकहेतुष्वपाठाच्च। तथाहि—स्वामी रिक्थक्रयसंविभागपरिग्रहाधिगमेषु ब्राह्मणस्याधिकं लब्धं क्षत्रियस्य विजितं निर्विष्टं वैश्यशूद्रयोरित्यष्टावेव स्वत्वकारकहेतून् गौतमः पठति स्म न भोगम्। न चेदमेव वचनं विंशतिवर्षोपभोगस्य स्वत्वोत्पत्तिहेतुत्वं प्रतिपादयतीति युक्तं स्वत्वस्य स्वत्वहेतूनां च लोकप्रसिद्धत्वेन शास्त्रैकसमधिगम्यत्वाभावात्।

किं च

अनागमं तु यो भुंक्ते बहून्यब्दशतान्यपि।
चोरदण्डेन तं पापं दण्डयेत्पृथिवीपतिः ॥

इत्येवदनागमोपभोगस्य स्वत्वहेतुत्वे विरुध्यते। न च 'अनागमं तु यो भुंक्ते' इत्येतत्परोक्ष-

भोगविषयं, 'पश्यतोऽब्रुवत' इति च समक्षभोगविषयमिति वाच्यम्। 'अनागमं तु यो भुंक्ते' इत्यत्र विशेषाश्रवणात्। नापि विंशतिवर्षोपभोगात्स्वत्वम्।

नोपभोगे बलं कार्यमाहर्त्रा तत्सुतेन वा।
पशुस्त्रीपुरुषादीनामिति धर्मो व्यवस्थितः॥

इति **कात्यायन**वचनाच्च। समक्षभोगेऽपि हानिकारणाभावेन हानेरसम्भवात्। अथोच्येत आधिप्रतिग्रहक्रयेषु पूर्वस्याः क्रियायाः प्राबल्यमपोद्य भूविषये विंशतिवर्षोपभोगयुक्तायाः धनविषये दशवर्षोपभोगयुक्ताया उत्तरस्याः क्रियायाः प्राबल्यमनेन वचनेनोच्यत इति तन्न, यतस्तेषूत्तरस्याः क्रियाएवानुपपत्तेः। तथाहि—स्वयमेव ह्याधेयं देयं विक्रेयं च भवति। न चाहितस्य दत्तस्य विक्रीतस्य वा स्वत्वमस्ति। अस्वस्य दाने प्रतिग्रहे च दण्ड स्मार्यते।

अदेयं यश्च गृह्णाति यश्चादेयं प्रयच्छति।
उभौ तौ चोरवच्छास्यौ दाप्यौ चोत्तमसाहसम्॥ इति।

तथा आध्यादीनां त्रयाणामपवादत्वे चास्य श्लोकेऽपवादो नोपपद्यते। तस्माद्भूम्यादीनां हानिरनुपपन्नैव। नापि व्यवहारहानि.।

उपेक्षां कुर्वतस्तस्य तूष्णीं भूतस्य तिष्ठतः।
काले विपन्ने पूर्वोक्ते व्यवहारो न सिद्ध्यति॥

इति **नारदेनो**पेक्षालिंगानामसत्ताया एव व्यवहारहानेरुक्तत्वात् न तु स्वभावकृतायास्तस्याः। तथा

अजडश्चेदपोगण्डो विषये चास्य भुज्यते।
भग्नं तद्व्यवहारेण भोक्ता तद्धनमर्हति॥

इति **मनुना**पि व्यवहारत एव भङ्गो दर्शितो न वस्तुतः। स चेत्थं(?)व्यवहारभंगो यथा भोक्ता किल वदति 'अजडोऽयमपोगण्डोऽस्य सन्निधौ विंशतिवर्षाणि निष्प्रतिरवं मया भुक्तं तत्र च बहवस्साक्षिणः सति यद्यस्य स्वम(?)न्यायेन मया भुज्येत तदा किमितेतावन्त कालमसावुदास्त' इति। तत्र चायं निरुत्तरो भवतीति। एवं निरुत्तरस्यापि वास्तवो व्यवहारो भवत्येव।

छलं निरस्य भूतेन व्यवहारान्नयेन्नृपः।

इति **याज्ञवल्क्येन** नियमितत्वात्।

अथैवमभिधित्सोर्मास्तु नाम वस्तुहानिर्न वा व्यवहारहानिः, तथापि पश्यतोऽप्रतिषेधतश्च व्यवहारहानिशङ्का भवतीति तन्निरासाय तूष्णीं न स्थातव्यमित्युपदिश्यत इति। तदपि न, स्मार्तकालीनाया भुक्तेर्हानिशङ्काकारणत्वाभावात्।

तूष्णीं न स्थातव्यमित्येतावन्मात्रामित्सायां विंशतिग्रहणमविवक्षितं स्यात्। अथोच्यते— विंशतिग्रहणमूर्ध्वं पत्रदोषोद्भावननिराकरणार्थम्।

यथाह कात्यायनः

शक्तस्य संनिधावर्थो यस्य लेख्येन भुज्यते।
विंशद्(?)वर्षाण्यतिक्रान्तं तत्पत्रं दोषवर्जितम्॥ इति।

तदपि न, आध्यादिष्वपि विंशतेरूर्ध्वं पत्रदोषोद्भावननिराकरणस्य समत्वेनापवादासंभवात्।

यथाह कात्यायनः

अथ विंशतिवर्षाणि आधिर्भुक्तः सुनिश्चितः।
तेन लेख्येन तत्सिद्धिर्लेख्यदोषविवर्जिता॥

तथा

सीमाविवादे निर्णीते सीमापत्रं विधीयते।
तस्य दोषाः प्रवक्तव्या यावद्वर्षाणि विंशतिः॥ इति।

एतेन च तस्य दशवार्षिकीत्येतदपि प्रत्युक्तम्। तस्मादस्य श्लोकस्य सत्योऽर्थो वक्तव्यः। उच्यते—भूमेर्धनस्य च फलहानिरिह विवक्षिता, न वस्तुहानिः, नापि व्यवहारहानिः। तथाहि—निराक्रोशाविंशतिवर्षोपभोगादूर्ध्वं यद्यपि स्वामी न्यायतः स्वक्षेत्रं लभते तथापि फलानुसरणं न लभते, अप्रतिषेधलक्षणात्स्वापराधादस्यास्य वचनात्। परोक्षभोगे तु विंशते रूर्ध्वमपि लभत एव फलानुसरणम्; पश्यत इति वचनात्। प्रत्यक्षभोगे च साक्रोश अबु(व?)त इति वचनात्। विंशतेः प्राक्प्रत्यक्षे निराक्रोशे च लभते, विंशतेर्ग्रहणात्। ननु तदुत्पन्नस्यापि फलस्य स्वत्वात्तद्धानिरनुपपन्नैव। सत्यम्; तस्य स्वरूपाविनाशेन तथैवावस्थाने यथा तदुत्पन्नपूगपनसवृक्षादीनाम्। यत्पुनस्तदुत्पन्नमुपभोगान्नष्टं तत्र स्वरूपनाशादेव स्वत्वनाशः।

अनागमं तु यो भुंक्ते बहून्यब्दशतान्यपि।
चोरदण्डेन तं पापं दण्डयेत्पृथिवीपतिः॥

इत्यनेन वचनेन निष्क्रयरूपेण गणयित्वा चौरवत्तत्समद्रव्यदानं प्राप्तं हानिर्विंशतिवार्षिकीत्यनेनापोद्यते। राजदण्डः पुनरस्त्येव विंशतेरूर्ध्वमपि। अनागमोपभोगादपवादाभावाच्च। तस्मात्स्वाम्युपेक्षालक्षणस्वापराधादस्याच्च वचनाद्विंशतेरूर्ध्वं नष्टफलं न लभत इति स्थितम्। एतेन धनस्य दशवार्षिकीत्येतदपि व्याख्यातम्।

अस्यापवादमाह याज्ञवल्क्यः

आधिसीमोपनिक्षेपजडबालधनैर्विना।
तथोपनिधिराजस्त्रीश्रोत्रियाणां धनैरपि॥

आधिश्च सीमा च उपनिक्षेपश्च आधिसीमोपनिक्षेपाः। जडश्च बालश्च जडबालौ,

तयोर्धने जडबालधने, आधिसीमोपनिक्षेपाश्च जडबालधने च आधिसीमोपनिक्षेपजडबालधनानि तैर्विना। रूपसंख्याप्रदर्शनेन रक्षणार्थं परस्य हस्ते निहितं द्रव्यं उपनिधानमुपनिधिः। एतेष्वाध्यादिषु पश्यतोऽब्रुवतोऽपि भूमेर्विंशतेर्धनस्य दशभ्यो वर्षेभ्य ऊर्ध्वमप्युपचयहानिर्न भवति। तथाविधपुरुषापराधसीम्नोश्चास्था(?)भावाद्युपेक्षाकारणस्य च तत्र तत्र सम्भवात्। तथाहि—आधावाधित्वोपाधिक एव भोग इत्युपेक्षायामपि न पुरुषापराधः। सीमाश्चिरकृताङ्गारादिलिङ्गैः साध्यत्वात्संभवत्युपेक्षा उपनिक्षेपोपनिध्योर्भुक्तेः प्रतिषिद्धत्वात्प्रतिषेधातिक्रमोपभोगे च नोदयलाभादुपेक्षोपपत्तिः॥ जडबालयोर्जडत्वाद्बालत्वाच्च युक्तैवोपेक्षा राज्ञश्च बहुकार्यव्याकुलत्वात् स्त्रीणामज्ञानादप्रागल्भ्याच्च श्रोत्रियाणामध्ययनाध्यापनतदर्थज्ञानानुष्ठानव्यग्रत्वादुचितोपेक्षा। तस्मादाध्यादिषु सर्वत्रापेक्षाकारणसंभवात् समक्षभोगे च निराक्रोशे च न कदाचिदपि फलहानिः।

---

## अथानुपभोगेनासिद्धिः

तत्र **याज्ञवल्क्यः**

आगमेऽपि बलं नैव भुक्तिः स्तोकापि यत्र नो।

आगमे विद्यमानेऽपि भुक्तिविरहात् तावत्कालं स्वत्वानुवृत्तिर्न सिध्यतीत्यर्थः।

यत्र वादिप्रतिवादिनौ स्वागमबलप्रवृत्तौ आगमयोश्च पूर्वापरभावो न निश्चीयते तत्र यस्य भुक्तिस्तस्यागमो बलीयानतत्नन्यस्येत्यर्थ इति केचित्।

**नारदः**

विद्यमानेऽपि लिखिते जीवत्स्वपि हि साक्षिषु।
विशेषतः स्थावराणां यन्न भुक्तं न तत्स्थिरम्॥
भुज्यमानान्परैरर्थान् यः स्वान्मोहादुपेक्षते।
समक्षं जीवतोऽप्यस्य तान् भुक्तिः कुरुते वशे॥

न तत्स्थिरं चिरकालवर्ति स्वत्वस्थापकप्रमाणमत्र भवतीत्यर्थः। यः परेण भुज्यमानान स्वानर्थान् मोहादुपेक्षते तस्य तत्सम्बन्धितया न निश्चीयन्ते स्वयमेवोपेक्षणादित्यर्थः।

अत्रैव **याज्ञवल्क्यः**

पश्यतोऽब्रुवतो भूमेर्हानिर्विंशतिवार्षिकी।
परेण भुज्यमाना या धनस्य दशवार्षिकी॥

व्यासः

उपेक्षिता यथा धेनुर्विना पालेन नश्यति ।
पश्यतोऽन्यैस्तथा भुक्ता भूमिः कालेन हीयते ॥
वर्षाणि विंशतिं यस्य भूमिर्भुक्ता परैरिह ।
सति राज्ञि समर्थस्य तस्य सेह न सिद्ध्यति ॥

पश्यन्तमनादृत्य परैर्या यस्य भूमिर्भुज्यते तस्य सा हीयते तदीयत्वे न निश्चीयत इत्यर्थः ।

नारदः

प्रत्यक्षपरिभोगात्तु स्वामिनो द्विदशाः समाः ।
आध्यादीन्यपि जीर्यन्ति स्त्रीनरेन्द्रधनादृते ॥

द्विदशाः समाः विंशतिवर्षाणि । स्त्रीनरेन्द्रधनादृते स्त्रीराजधनव्यतिरेकेण ।

मनुनारदौ

यत्किंचिद्दश वर्षाणि सन्निधौ प्रेक्षते धनी ।
भुज्यमानं परैस्तूष्णीं न स तल्लब्धुमर्हति ॥

दशवर्षाणीति भूम्यतिरिक्तधनाभिप्रायम् ।

गौतमः

अजडापोगण्डधनं दशवर्षभुक्तं परैः सन्निधौ भोक्तुः ।

अजडस्याबालस्य च धनं तत्सन्निधाने विवादे परैर्दशवर्षभुक्तं भोक्तुरेव स्वं जायत इति **कल्पतरुपारिजातौ** । वस्तुतः अजडापोगण्डस्वमपि तत्काले अविप्रतिपन्नदशवर्षावच्छिन्नपरभोगवशात् स्वामिसम्बन्धितया न निश्चेतुं शक्यत इति **रत्नाकरः** ।

मनुः

आधिश्चोपनिधिश्चोभौ न कालात्ययमर्हतः ।
अवहार्यौ भवेतां तौ दीर्घकालमवस्थितौ ॥

आधिर्बंधकः । उपनिधिस्तु प्रीत्या भोगार्थं समर्पितं क्षेत्रादि, न तु 'वासनस्थमनाख्याय'इत्यादिस्मृतिलक्षितः तस्य भोगानर्हत्वात् । न कालात्ययमर्हतः । मोक्षणकाले आधातृ-उपनिधातृभ्यां(?)अवश्यमोक्षणीयावित्यर्थः ।

अत्र हेतुमाह अवहार्यावित्यादिना, तौ हि चिरकालावस्थितौ भोक्तुरवहार्यौ भवेताम् । भोक्ता कदाचिदपहरेदपीत्यर्थः ।

बृहस्पतिः

ऋक्थिभिर्वा परैर्द्रव्यं समक्षं यस्य दीयते ।
अन्यस्य भुञ्जतः पश्चान्न स तल्लब्धुमर्हति ॥

पश्यन्नन्यस्य ददतः क्षितिं यो न निवारयेत् ।
स्वामी सताऽपि लेख्येन पुनस्तां न समाप्नुयात् ॥

अत्र क्षितिमिति देयद्रव्योपलक्षणम् ।

**तथा**

भूमेरभुक्तिर्लेख्यस्य यथाकालमदर्शनम् ।
अस्मारणं साक्षिणां च स्वार्थहानिकराणि तु ॥
तस्माद्यत्नेन कर्तव्यं प्रमाणपरिपालनम् ।
तेन कार्याणि सिध्यन्ति स्थावराणि चराणि च ॥

---

## अथान्यभोगे ह्यन्यपवादः

तत्र बृहस्पतिः

भुक्तिस्त्रिपुरुषी सिध्येत्परेषां नात्र संशयः ।
अनिवृत्ते सपिण्डत्वे सकुल्यानां न सिध्यति ॥
अस्वामिना तु यद्भुक्तं गृहक्षेत्रापणादिकम् ।
सुहृद्बन्धुसकुल्यस्य न तद्भोगेन हीयते ॥
विवाह्यश्रोत्रियैर्भुक्तं राज्ञाऽमात्यैस्तथैव च ।
सुदीर्घेणापि कालेन तेषां सिद्ध्यति तन्न ॥

सपिण्डत्वे विद्यमाने सत्यामपि त्रिपुरुषभुक्तौ सकुल्यानां भुज्यमानं स्वं न भवतीत्यर्थः । विवाह्योऽत्र जामाता ।

**गौतमः**

अजडापोगण्डधनं दशवर्षभुक्तं परैः सन्निधौ भोक्तुः ।

अस्य पर्युदासमाह

न श्रोत्रियप्रव्रजितराजपुरुषैः पशुभूमिस्त्रीणामनतिभोगः ।

पशुभूमिस्त्रीणां तु विषयाणां परैरतिभोगेऽपि स्वामिनो न सम्बन्धहानिरित्यर्थः । एतदप्यौत्सर्गिकम् ।

**कात्यायनः**

सनाभिभिर्बान्धवैश्च भुक्तं यत्स्वजनैस्तथा ।
भोगात्तत्र न सिद्धिः स्याद्भोगमन्येषु कल्पयेत् ॥

अन्येषु सनाभ्यादितोऽन्येषु ।

**मनुनारदौ**

आधिः सीमा बालधनं निक्षेपोपनिधिस्त्रियः ।
राजस्वं श्रोत्रियस्वं च नोपभोगेन नश्यति ॥

**बृहस्पतिः**

अशक्तालसरोगार्तबालभीतप्रवासिनाम् ।
शासनारूढमन्येन भुक्तं भुक्त्या न हीयते ॥

शासनारूढं ताम्रपट्टादिलिखितम् ॥

**कात्यायनः**

न भोगं कल्पयेत्स्त्रीषु देवराजधनेषु च ।
बालश्रोत्रियवित्ते च प्राप्ते च पितृतः क्रमात् ॥
न स्त्रीणामुपभोगः स्यात् विना लेख्यात्कदाचन ।
सुरश्रोत्रियराज्ञां तु तथा बालधने मतः ॥

**मनुः**

संप्रीत्या भुज्यमानानि न नश्यंति कदाचन ।
धेनुरुष्ट्रो वहन्नश्वो यश्च दम्यः प्रयुज्यते ॥

दम्यः प्रयुज्यते दमनार्थं यः समर्प्यते वृषभादिः ।

**कात्यायनः**

क्रयं शिल्पिषु निक्षिप्तं बन्धान्वाहितयाचितम् ।
प्रसह्याभिहरन्मोहाद्धीनो दण्ड्यः स वै भवेत् ॥

क्रयं मूल्यम् ।

**याज्ञवल्क्यः**

आध्यादीनां विहर्तारं धनिने दापयेद्धनम् ।
दण्डं च तत्समं राज्ञे शक्त्यपेक्षमथापि वा ॥

आध्यादीनां श्रोत्रियधनपर्यन्तानां चिरकालोपभोगबलेनापहर्तारं विवादास्पदीभूतं द्रव्यं स्वामिने दापयेदित्यनुवादः। दण्डं च तत्समं विवादास्पदीभूतद्रव्यसमं राज्ञे दापयेदिति विधिः। यद्यपि गृहक्षेत्रादिषु तत्समो दण्डो न भवति । तथापि

मर्यादायाः प्रभेदे च सीमातिक्रमणे तथा ।

इत्यादिना वक्ष्यमाणो दण्डो द्रष्टव्यः ।

अथ तत्समदण्डेनापहर्तुर्दमनं न भवति बहुधनत्वेन । तदा शक्त्यपेक्षं धनं दापयेत् । यावता तस्य दर्पोपशमो भवति तावद्दापयेत् । दण्डो दमनादित्याहुस्तेनादान्तान् दमयेदिति दण्डग्रहणस्य दमनार्थत्वात् । यस्य तत्सममपि द्रव्यं नास्ति, सोऽपि यावता पीड्यते तावद्दाप्यः, यस्य पुनः किमपि धनं नास्ति असौ धिग्दण्डादिना दमनीयः ।

—o—

## अथ विच्छिन्नभोगनिर्णयः

तत्र बृहस्पतिः

छिन्नभोगे गृहक्षेत्रे सन्दिग्धं यत्र जायते ।
लेख्येन भोगविद्भिर्वा साक्षिभिस्तद्विभावयेत् ॥
नामाघाटागमं संख्या दिग्भागं कालमेव च ।
भोगच्छेदनिमित्तं च ये विदुस्तेऽत्र साक्षिणः ॥
तदुत्पन्नाश्च सामन्ता ये च देशान्तरस्थिताः ।
मौलास्तु ते समुद्दिष्टाः प्रष्टव्याः कार्यनिर्णये ॥
अदुष्टास्ते तु यद्ब्रूयुः सन्दिग्धौ समदृष्टयः ।
तत्प्रमाणं तु कर्तव्यमेवं धर्मो न हीयते ॥
स्थावरस्यैतदाख्यातं लाभभोगप्रसाधकम् ।
प्रमाणहीनवादे तु निर्देश्या दैविकी क्रिया ॥

सन्दिग्धिः सन्देहः । नाम क्षेत्रादेः । आघाटः सीमा । आगमः स्वत्वहेतुः । संख्या भूमेरेव दिग्भागोऽपि तस्या एव । कालोऽप्यागमकालः । प्रमाणहीनवादे दृष्टप्रमाणहीनवादे ।

इति श्रीमन्महीमण्डलाखण्डलश्रीनागमल्लात्मजविषमप्रतिज्ञापरिपूरणपरायण-
कलिकालकर्णप्रतापलङ्केश्वरशरणागतराजवज्रपञ्जरपरमनैष्ठिकरिपुगजसिंहे-
त्यादिनिजनिखिलविरुदावलीविराजमानमाणिक्यमहाराजाधिराजश्री-
पृथ्वीचन्द्रविरचिते धर्मतत्त्वकलानिधौ महानिबन्धे व्यवहारप्रकाशे
लिखितभुक्तिनिरूपणं नाम तृतीय उल्लासः ।

—o—

## अथ साक्षिणः

तत्र गौतमः

विप्रतिपत्तौ साक्षिनिमित्ता व्यवस्था ॥

नारदोऽपि

सन्दिग्धेषु तु कार्येषु द्वयोर्विवदमानयोः ।
दृष्टश्रुतानुभूतत्वात्साक्षिभ्यो व्यक्तदर्शनम् ॥

दृष्टश्रुतानुभूतत्वादिति । केनापि प्रकारेण तत्प्रमितत्वं विवक्षितम् ।

मनुरपि

समक्षदर्शनात्साक्ष्यं श्रवणाच्चैव सिध्यति ।

। समक्षदर्शनात् प्रत्यक्षतो दर्शनात् । स च द्विविधः कृतोऽकृतश्च । तत्राद्यः पञ्चविधः, मः षड्विधः ।

तथाह नारदः

एकादशविधः साक्षी शास्त्रे दृष्टो मनीषिभिः ।
कृतः पञ्चविधस्तत्र षड्विधोऽकृत उच्यते ॥

कृतभेदानपि स एवाह

लिखितः स्मारितश्चैव यदृच्छाभिज्ञ एव च ।
गूढश्चोत्तरसाक्षी च साक्षी पञ्चविधः कृतः ॥ इति ।

लिखितलक्षणमाह बृहस्पतिः

जातिनामाभिलिखितं येन स्वं पित्र्यमेव च ।
निवासश्च स विज्ञेयः साक्षी लिखितसंज्ञकः ॥ इति ।

कात्यायनोऽपि

अर्थिना स्वयमानीतो यो लेख्ये संनिवेश्यते ।
स साक्षी लिखितो नाम स्मारितः पत्रकादृते ॥

स्मारितः पत्रकादृत इत्येतदेव विविच्याह स एव

यस्तु कार्यप्रसिद्ध्यर्थं दृष्ट्वा कार्यं पुनः पुनः ।
स्मार्यते ह्यर्थिना साक्षी स स्मारित इहोच्यते ॥

बृहस्पतिरपि

आहूय यः कृतः साक्षी ऋणन्यासक्रियादिके ।

यदृच्छया स्वयमेव य आगतः स यादृच्छिकः ।

तथाह बृहस्पतिः

क्रियमाणे तु कर्तव्ये यः कश्चित्स्वयमागतः ।
अस्ति साक्षित्वमस्माकमुक्तो याद‍ृच्छिकस्तु सः ॥

स्मारितयादृच्छिकयोः पत्रानारूढत्वेन साम्येऽपि भेदमाह कात्यायनः

प्रयोजनार्थमानीतः प्रसङ्गादागतश्च यः ।
द्वौ साक्षिणौ त्वलिखितौ पूर्वपक्षस्य साधकौ ॥ इति ।

गूढस्वरूपमाह स एव

अर्थिना स्वार्थसिद्ध्यर्थं प्रत्यर्थिवचनं स्फुटम् ।
यः श्राव्यते स्थितो गूढो गूढसाक्षी स उच्यते ॥

बृहस्पतिरपि

कुड्यव्यवहितो यस्तु श्राव्यते ऋणिभाषितम् ।
विनिह्नुते यथाभूतं गूढसाक्षी स कीर्तितः ॥

उत्तरसाक्षिस्वरूपमाह व्यासः

साक्षिणामपि यः साक्ष्यमुपर्युपरि भाषते ।
श्रवणाच्छ्रावणाद्वापि स साक्ष्युत्तरसंज्ञितः ॥

बृहस्पतिः

यत्र साक्षी दिशं गच्छेन्मुमूर्षुर्वा यथाश्रुतम् ।
अन्यं संश्रावयेत्तं तु विद्यादुत्तरसाक्षिणम् ॥ इति ।

प्रकृतभेदानाहतुः नारदकात्यायनौ

अन्यैः पुनरनिर्दिष्टाः साक्षिणः समुदाहृताः ।
ग्रामश्च प्राड्विवाकश्च राजा च व्यवहारिणाम् ॥
कार्येष्वभ्यन्तरो यश्च अर्थिना प्रहितश्च यः ।
कुल्याः कुलविवादेषु भवेयुस्तेऽपि साक्षिणः ॥ इति ।

अत्र ग्रामपदेन ग्रामस्था लक्ष्यन्ते, ते ह्यरुना अपि ग्रामकार्यज्ञा भवन्ति । अर्थिप्रहितो दूतः ।

ग्रामसाक्षिविषये विशेषमाह बृहस्पतिः

मुषितं घातितं यत्र सीमायाश्च समन्ततः ।
अकृतोऽपि भवेत्साक्षी ग्रामस्तत्र न संशयः ॥

नृपादिविषये बृहस्पतिकात्यायनौ

अर्थिप्रत्यर्थिनोर्वाक्यं यच्छ्रुतं भूभृता स्वयम् ।
स एव तत्र साक्षी स्याद्विसंवादे द्वयोरपि ॥

निर्णीते व्यवहारे तु पुनर्न्यायो यदा भवेत् ।
अध्यक्षः सभ्यसहितः साक्षी स्यात्तत्र नान्यथा ॥ इति ।

अत्र सभ्यपदं लेखकस्याप्युपलक्षणम् ।

तथा च कात्यायनः

लेखकः प्राड्विवाकश्च सभ्याश्चैवानुपूर्वशः ।
नृपाः पश्यन्ति तत्कार्यं साक्षिणः समुदाहृताः ॥

कार्यमध्यगतस्य स्वरूपमाहतुः बृहस्पतिकात्यायनौ

उभाभ्यां यस्य विश्वस्तं कार्यं वाऽपि निवेदितम् ।
गूढचारी स विज्ञेयः कार्यमध्यगतस्तथा ॥ इति ।

उभाभ्यां वादिप्रतिवादिभ्यां यस्य गूढचारिणो निभृतचारिणो विश्वासः कृतः, कार्यं च विनिवेदितं स कार्यमध्यगत इत्यर्थः । वाशब्दश्चार्थे । दूतस्वरूपमाह बृहस्पतिरेव

अर्थिप्रत्यर्थिवचनं शृणुयात्प्रेषितश्च यः ।
उभयोः संमतः साधुर्दूतकः समुदाहृतः ॥

कुल्यविषयेऽपि स एव

विभागदाने विपणे जातिर्यत्रोपदिश्यते ।
द्वयोः समानो धर्मज्ञः स कुल्यः परिकीर्तितः ॥ इति ।

पुनः स एव

लिखितो लेखितो गूढः स्मारितः कुल्यदूतकौ ॥
याहच्छिकश्चोत्तरश्च कार्यमध्यगतोऽपरः ।
नृपाध्यक्षस्तथा ग्रामः साक्षी द्वादशधा स्मृतः ॥ इति ।

लेखितस्वरूपमाह स एव

अर्थिक्रियां क्रियाभेदैः स्वस्य कृत्वा ऋणादिके ।
प्रत्यक्षं लेख्यते यश्च लेखितः स उदाहृतः ॥

मनुः

यत्राऽनिबद्धो वीक्षेत शृणुयाद्वापि किञ्चन ।
पृष्टस्तत्रापि यद्ब्रूयाद्यथादृष्टं यथाश्रुतम् ॥

अनिबद्धोऽनधिकृतः प्रसङ्गाच्चत्रागतः । अत्र दृष्टश्रुतत्वे प्रमाणमात्रोपलक्षणे ।

मनुः

पृष्टोऽप्यव्ययमानस्तु कृतावस्थो धनेषिणा ।
त्र्यवरैः साक्षिभिर्भाव्यो नृपब्राह्मणसंनिधौ ॥

पृष्टः प्राड्विवाकेन किं धारयसि न वेति । अपव्ययमानः निह्नुवानः । कृतावस्थः आसेधादिना कृतावस्थानः । धनैषिणा अर्थिना । त्र्यवरैः त्रयोऽवरा न्यूना येषां साक्षिणां ते त्र्यवराः त्रिचतुरादयः । कश्चित्तु त्रयश्च ते अवराः न विद्यन्ते च येभ्यस्ते तथेति ।

अत्र विशेषमाह **बृहस्पतिः**

नव सप्त पञ्च वा स्युश्चत्वारस्त्रय एव वा ।
उभौ वा श्रोत्रियौ ख्यातौ नैकं पृच्छेत्कदाचन ॥
लिखिता द्वौ तथा गूढौ त्रिचतुःपञ्च लेखिताः ।
यदृच्छास्मारिताः कुल्यास्तथा चोत्तरसाक्षिणः ॥
दूतकः खटिकाग्राही कार्यमध्यगतस्तथा ।
एक एव प्रमाणः स्यान्नृपोऽध्यक्षस्तथैव च ॥ इति ।

लिखितौ द्वौ तथा गूढाविति । लिखितौ द्वावपि साक्षिणौ भवतः, एवं गूढावपि । लेखिताद्या उत्तरसाक्ष्यन्ताः पञ्चापि त्रिचतुराद्याः साक्षिणः । श्रोत्रियावलिखितावपि भवतः । दूतकाद्यास्त्वेकैकश एव प्रमाणम् । प्रमाणमत्र साक्षित्वेन । ननु

न कार्यो नृपतिः साक्षी न च कारुकुशीलवाः

इति **मनुना** राज्ञः साक्षित्वं निषिद्धमिति कथं नृपस्य साक्षित्वमिति । सत्यम्; न कार्य इति वचनेन नृपतेः साक्षित्वकरणं निषिध्यते, प्राङ्न्यायादायकृतस्य तु साक्षित्वं भवत्येव विरोधः । अत्र दूतादीनां त्रयाणा एकैकस्य साक्षित्वं प्राकृतार्थस्मृतिहेतूत्कर्षवत्त्वेन लिखित-गूढयोस्तु तन्निकृष्टतरत्वेन लेखितादीनां पञ्चानां तन्निकृष्टतमत्वेन ज्ञेयमिति **कश्चित्**। नव सप्त पञ्च वा स्युरित्यादेरपवादमाह **याज्ञवल्क्यः**

उभयानुमतः साक्षी भवत्येकोऽपि धर्मवित् ।

धर्मवित् ज्ञानपूर्वकं नित्यनैमित्तिकधर्मानुष्ठानशीलः । स उभयानुमतश्चेत् तदा एकोऽपि साक्षी भवति। अपिशब्दात् द्वावपि तादृशौ साक्षिणौ भवतः। यद्यपि बहूनामपि धर्मवित्त्वं समानं तथापि तेषामुभयानुमत्यभावेऽपि साक्षित्वम्, एकस्य द्वयोर्वोभयसंमत्यैव साक्षित्वमिति विशेषः ।

**व्यासः**

अविक्रियश्च धर्मज्ञः साक्षी यत्रानुभूतवाक् ।
प्रमाणमेकोऽपि भवेत्साहसेषु विशेषतः ॥

अनुभूतवाक् यथार्थत्वेनानुभूतवचनः ।

**कात्यायनः**

अभ्यन्तरस्तु निक्षेपे साक्ष्यमेकोऽपि वाच्यते ।
अर्थिना प्रहितः साक्षी भवत्येकोऽपि याचते ॥

संस्कृतं येन यत्पण्यं तत्तेनैव विभावयेत् ।
एक एव प्रमाणं स विवादेषु प्रकीर्तितः ॥

अर्थिना प्रहितः सन् यो याचते अर्थाद्विषयं स एकोऽपि साक्षी भवतीत्यर्थः । याचित इति पाठे निक्षेपविशेषणत्वमिति । संस्कृतमित्यादि । यत्कण्टकादि पण्यं विवादविषयीभूतं येन सुवर्णकारादिना निर्मितं तत्तेनैव साक्षिणा साधयेदित्यर्थः ।

नारदः

सुदीर्घेणापि कालेन लिखितः सिद्धिमाप्नुयात् ।
संजानन्नात्मनो लेख्यमजानन्तं तु लेखयेत् ॥

अजानन्तं तु लेखयेदिति । ऋणादिलिखितसमये यो लेखनानभिज्ञो लेखितुं अजानन्तमात्मानं अन्येन लिपिज्ञेन साक्षिलेखनप्रकारेण लेखयेत् सोऽपि सुदीर्घकालेनापि सिद्धिमाप्नोतीत्यर्थः ।

साक्षिणः स्वहस्ताप्रत्यभिज्ञाने कात्यायनः

अथ स्वहस्तेनारूढस्तिष्ठेदेकः स एव तु ।
न चेत्प्रत्यभिजानीयात्तत्स्वहस्तैः प्रसाधयेत् ॥

यदा एक एव साक्षी स्वहस्तेन पत्रारूढः स्वहस्तं न प्रत्यभिजानीयात् । तदा प्रकारान्तरेणापि तत्स्वहस्तपरिचयः कार्य इत्यर्थः ।

साक्षिकालभेदेन साक्षिभेदसिद्धिमाह नारदः

आऽष्टमाद्वत्सरात्सिद्धिः स्मारितस्येह साक्षिणः ।
आ पञ्चमात्तथा सिद्धिर्यदृच्छोपगतस्य तु ॥
आ तृतीयात्तथा वर्षात्सिद्धिर्गूढस्य साक्षिणः ।
आ संवत्सरात्सिद्धिर्भवत्युत्तरसाक्षिणः ॥ इति ।

एतच्च प्रायिकाभिप्रायं न कालविषयनियमार्थम् । तेन दृष्टप्रमाणमूलकस्मृतिमत्त्वं सर्वेषापि साक्षित्वे प्रयोजकम् ।

यतः स एवाह

अथवा कालनियमो न दृष्टः साक्षिणः प्रति ।
स्मृत्यपेक्षं हि साक्षित्वमाहुः शास्त्रविदो जनाः ॥
यस्य नोपहता बुद्धिः स्मृतिः श्रोत्रे च नित्यशः ।
सुदीर्घेणापि कालेन स वै साक्षित्वमर्हति ॥ इति ।

ते च साक्षिणः कीदृशाः कार्या इत्याह मनुः

यादृशा अर्थिभिः कार्या व्यवहारेषु साक्षिणः ।
तादृशान्संप्रवक्ष्यामि यथा वाच्यमृतं तु तैः ॥

गृहिणः पुत्रिणो मौलाः क्षत्रविट्शूद्रयोनयः ।
अर्थ्युक्ताः साक्ष्यमर्हन्ति न ये केचिदनापदि ॥
आप्ताः सर्वेषु वर्णेषु कार्याः कार्येषु साक्षिणः ।
सर्वधर्मविदोऽलुब्धा विपरीतांस्तु वर्जयेत् ॥ इति ।

यथा वाच्यं यादृक् शपथादि कृत्वा । ऋतं सत्यम् । मौलाः प्रसिद्धकुलसंभूताः तद्ग्रामे परंपरया नियसन्तो वा । अर्थिनोक्ताः न स्वयमेव साक्षिणो वयमिति वादिनः । न ये केचित् प्रागुदीरितविशेषणविधुराः । अनापदि सति सम्भवे, असंभवे केवलधर्मश्रद्धायन्तोऽपि ग्राह्याः । आप्ता यथादृष्टार्थवादितया गृहीतसंवादाः । सर्वधर्मविदः अलुब्धाः तथात्वेन निश्चिताः । विपरीतान् उक्तगुणशून्यान् ।

व्यासः

मणिमन्त्रौषधिबलात्प्रदत्तं चाविधानतः ।
विसंवदेद्दिव्यमपि न तु साक्षी गुणान्वितः ॥

शंखलिखितौ

अथ साक्षिणः । श्रोत्रियो गुणवान् धीमान् माण्नकः शीलवान् । क्षत्रियस्तथा वैश्यः शूद्रो वा धर्मवांश्च यः ॥ शीलोपपन्नः कर्मप्रदानैर्विदितो न त्वेके । इति ।

याज्ञवल्क्यः

तपस्विनो दानशीलाः कुलीनाः सत्यवादिनः ।
धर्मप्रधाना ऋजवः पुत्रवन्तो धनान्विताः ॥
त्र्यवराः साक्षिणो ज्ञेयाः श्रौतस्मार्तक्रियापराः ।
यथाजाति यथावर्णं सर्वे सर्वेषु वा स्मृताः ॥ इति ।

यथाजातीति । जातिमनतिक्रम्य यथाजाति, जातयो मूर्धावसिक्ताद्या अनुलोमजाः । स्त्रियश्च तेन मूर्धावसिक्तादीना मूर्धावसिक्ताद्या एव साक्षिणः स्त्रीणां स्त्रिय इति । एवं यथावर्णं ब्राह्मणानां ब्राह्मणा इत्यादि ।

तथा च मनुः

स्त्रीणां साक्ष्यं स्त्रियः कुर्युर्द्विजानां सदृशा द्विजाः ।
शूद्राः सन्तश्च शूद्राणामन्त्यानामन्त्ययोनयः ॥ इति ।

नारदोऽप्याह

श्रेणिषु श्रेणिपुरुषाः स्वेषु वर्गेषु वर्गिणः ।
बहिर्वासिषु बाह्याः स्युः स्त्रियः स्त्रीषु च साक्षिणः ॥

वर्गवर्गिणोः स्वरूपमाह **कात्यायनः**

लिङ्गिनः श्रेणिपूगाश्च वणिग्व्रातास्तथैव च ।
समूहाख्याश्च ये चान्ये वर्गास्तानब्रवीन्मनुः ॥
दासचारणमल्लानां हस्त्यश्वायुधजीविनाम् ।
प्रत्येकैकं समूहानां नायका वर्गिणस्तथा ।
तेषां वादः स्ववर्गेषु वर्गिणस्तेषु साक्षिणः ॥ इति ।

---

## अथ साक्ष्यनर्हाः

तत्र तद्भेदानाह **नारदः**

असाक्ष्यपि हि शास्त्रेषु दृष्टः पंचविधो बुधैः ।
वचनाद्दोषतो भेदात्स्वयमुक्तिर्मृतान्तरः ॥

एतेषामुदाहरणान्याह **स एव**

श्रोत्रियाद्या वचनतस्तेनाद्या दोषदर्शनात् ।
भेदाद्विप्रतिपत्तिः स्याद्विवादे यत्र साक्षिणाम् ॥
स्वयमुक्तिरनिर्दिष्टः स्वयमेवेत्य यो वदेत् ।
मृतान्तरेऽर्थिनि प्रेते मुमूर्षुश्रावितादृते ॥

श्रोत्रियादीनाह **स एव**

श्रोत्रियास्तापसा वृद्धा ये च प्रव्रजितादयः ।
वचनात्तेप्यसाक्षित्वं नात्र हेतुरुदाहृतः ॥

तापसा वानप्रस्थाः, वृद्धा वार्द्धकेन स्खलितबुद्धयः । आदिपदाद्गुरुकुलनिवासिप्रभृतयः । अत्र श्रोत्रियाः कर्मानुष्ठाननिष्ठा विवक्षिताः, न पुनः श्रुतिपाठकृतः, तेषामसाक्षित्वेनोक्तत्वात् । श्रोत्रियादीनां अयथार्थवादित्वहेत्वभावेऽपि वचनबलादेव प्रतिषेधोऽध्यवसेयः; अन्ये तु श्रोत्रियादीनां रागद्वेषादिवैधुर्येऽपि प्रकृतविवादपदौदासीन्येन तद्विषयसत्यवचनानुरूपयथार्थज्ञानत्वादिकारणराहित्येनासाक्षित्वं प्रकृतविषय सत्यवचनानुकूलकारणवतां तेषां श्रोत्रियत्वमात्रेणासाक्षित्वे उभौ वा श्रोत्रियौ ख्यातविद्यादिवृद्धस्त्यादिवचनविरोधात् ॥ श्रोत्रियत्वमादाय विधिप्रवृत्तेश्च । नात्र हेतुरिति हेतुपदं हेतुविशेषपरमित्याहुः ॥

स्तेनाद्यानाह स एव

स्तेनाः साहसिकाश्चण्डाः कितवा बन्धकास्तथा ।
असाक्षिणस्ते दुष्टत्वात्तेषु सत्यं न विद्यते ॥ इति ।

चण्डा अत्यन्तकोपनाः । कितवा द्यूतकृतः । अत्र स्तनत्वादिकमपि प्रकृतविवादपद-विषयवचनगतान्यथाशंकाधायकत्वं विवक्षितं, भेदादसाक्षिणोऽपि तेनैव दर्शिताः

राज्ञा परिगृहीतेषु साक्षिष्वेवार्थनिश्चये ।
वचनं यत्र भिद्येत ते स्युर्भेदादसाक्षिणः ॥ इति ।
स्मृतिमत्साक्षिसाम्यं तु विवादे यत्र दृश्यते ।
सूक्ष्मत्वात्साक्षिधर्मस्य साक्ष्यं व्यावर्तते ततः ॥

स्मृतिमत्साक्षिसाम्यमिति । मत्याविगुणेन समाः सन्तो यत्र साक्षिणो भिद्यन्ते तत्र वचन-भेदात्तेऽत्र साक्षिणः । न पुनरसमा अपि इह तुल्यरूपाणां विप्रतिपत्तावनसेयम् । अतुल्यरूपाणां संख्यागुणाद्युत्कृष्टानां ग्रहणं(?) परिग्रहस्य वक्ष्यमाणत्वात् ।

स्वयमुक्तिलक्षणमाह स एव

स्वयमुक्तिरनिर्दिष्टः स्वयमेवै(?)त्य यो वदेत् ।
सूचीत्युक्तः स शास्त्रेषु न स साक्षित्वमर्हति ॥

यो ह्यनिर्दिष्टः स्वयमेवाह अहमत्र साक्षीति स स्वयमुक्तिरित्यर्थः ।

मृतान्तरोदाहरणमाह स एव

योऽर्थः श्रावयितव्यः स्यात्तस्मिन्नसति चार्थिनि ।
क्व तद्वदतु साक्षित्वमित्यसाक्षी मृतान्तरः ॥ इति ।

येनार्थिना प्रत्यर्थिना वा साक्षिणां योऽर्थः श्रावयितव्यो भवेद्यूयमत्रार्थे साक्षिण इति तस्मिन्नर्थिनि प्रत्यर्थिनि वाऽसति मृते अर्थे वाऽनिवेदिते विषयापरिचयात् । साक्षी कस्मिन्नर्थे कस्य वा कृते साक्ष्यं वदत्विति मृतान्तरः साक्षी न भवतीति ।

कात्यायनोऽपि

अर्थी यत्र विपन्नः स्यात्तत्र साक्षी मृतान्तरः ।
प्रत्यर्थी वा मृतो यत्र तत्राप्येवं प्रकल्पयेत् ॥ इति ।

तथा

नहि प्रत्यर्थिनि मृते प्रमाणं साक्षिणांतरः ॥

अश्रावयित्वा मृत इति विवक्षितम् । ननु चाश्राविनोऽपि अयं जानानः साक्षी किमिति न स्यादित्यत आह स एव

सन्तोऽपि न प्रमाणं स्युर्मृते धनिनि साक्षिणः । इति ।

तत्र तु मुमूर्षुणा पित्रा अमुकद्रव्यमियदेतया वृद्ध्या अमुककाले देवदत्ताय दत्तमत्रार्थे अमी साक्षिण इत्येवं पुत्रादयः श्राविताः । तत्र मृतान्तरोऽपि साक्षी ।

तथा च नारदः

मृतान्तरोऽर्थिनि प्रेते मुमूर्षुश्रावितादृते । इति ।

कात्यायनः

अन्येन हि कृतः साक्ष्यं नैवान्यस्य विवादयेत् ।
तदभावे नियुक्तो वा बान्धवो वाऽपि वादयेत् ॥
भावयेत्साक्षिभिः कार्यं मृते त्वर्थिनि बान्धवः ।
कुलादीनां समक्षं चेल्लिखितं भावयेत्सदा ॥ इति ।

आतुरश्रवणमपि क्वचित्तत्र हेतुरित्याह स एव

श्रावितो नातुरेणापि यस्त्वर्थो धर्मसंहितः ।
मृतेऽपि तत्र साक्ष्यं स्यात् षट्सु चान्वाहितादिषु ॥

अन्वाहितादयस्तु—

अन्वाहितं पारितकमाधिः साधारणं च यत् ।
निक्षेपः पुत्रदाराश्च सर्वस्वं चान्वये सति ॥

इति षाम्यस्थाः ।

मनुः

नार्थसम्बन्धिनो नाप्ता न सहाया न वैरिणः ।
न दृष्टदोषाः कर्तव्या न व्याध्यार्ता न दूषिताः ॥
न साक्षी नृपतिः कार्यो न च कारुकुशीलवाः ।
न श्रोत्रियो न लिङ्गस्थो न सङ्गेभ्यो विनिर्गतः ॥
नाध्यधीनो न वक्तव्यो न दस्युर्न विकर्मकृत् ।
न वृद्धो न शिशुर्नैको नान्त्यो न विकलेन्द्रियः ॥
नार्तो न मत्तो नोन्मत्तो न क्षुत्तृष्णोपपीडितः ।
न श्रमार्तो न कामार्तो न क्रुद्धो नापि तस्करः ॥ इति ।

अर्थसंबन्धिनो विप्रपद्यमानार्थसम्बन्धिनः । आप्तास्तद्वृत्तिजीविप्रभृतयः कात्यायनोक्ताः

तद्वृत्तिजीविनो ये च तत्सेवाहितकारिणः ।
तद्बन्धुसुहृदो भृत्या आप्तास्ते न तु साक्षिणः ॥ इति ।

सहायाः प्रतिभूप्रभृतयः । वैरिणः विप्रतिपन्नयोरन्यतरस्य । दृष्टदोषाः पूर्वसाक्ष्यमिथ्या-

भिधानाः। दूषिताः अभिशस्ताः। नृपतिः तस्य बहुव्यापारासक्तत्वेनास्मरणात्। कुशीलवो नटः। श्रोत्रियो वेदाध्ययनपरः। लिङ्गस्थो ब्रह्मचारी यतिश्च। सङ्गेभ्यो विनिर्गतः वानप्रस्थादिः सर्वदैकान्तसेवनादिशीलो वा। आध्यधीनः मानसव्यथाविह्वलः। परेण बन्धकीकृतदासादिवर्गवक्तव्यः दुराचारादिना गर्हितः कुष्ठादिना कुत्सितदेहो वा। दस्युर्घातकः क्रूरचेष्टो वा। विकर्मकृत् शास्त्रविरुद्धकर्मकृत्, सूतादिरित्यन्ये। शिशुः अपूर्णषोडशाब्दः। एकः एकसंख्यायोगी। अभावे द्वयोरपि ग्रहणम्। विवदमानान्यतर इति केचित्। आर्तः शोकादिना मत्तो मद्यादिना उन्मत्तो वातादिना। अत्रार्तादीनामार्तत्वादिधर्मविशिष्टानामसाक्षित्वं न पुनस्तदुपलक्षितानामपि।

**नारदः**

दासनैकृतिकाऽश्रद्धवृद्धस्त्रीबालचाक्रिकाः।
मत्तोन्मत्तप्रमत्तार्तकितवग्रामयाजकाः॥
महापथिकसामुद्रवणिक्प्रव्रजितातुराः।
व्यङ्गैकश्रोत्रियाचारहीनक्लीबकुशीलवाः॥
नास्तिकव्रात्यदाराग्नित्यागिनोऽयाज्ययाजकाः।
एकस्थालिसहायारिचरा ज्ञातिसनाभयः॥
प्राग्दृष्टदोषशैलूषविषजीव्यहितुण्डिकाः।
गरदोऽग्निदकीनाशशूद्रापुत्रोपपातिकाः॥
क्लान्तसाहसिकश्रान्तनिर्धूतान्त्यावसायिनः।
भिन्नवृत्ताः समावृत्तजडतैलिकमूलिकाः॥
भूताविष्टा नृपद्विष्टा वर्षानक्षत्रसूचकः।
अघशंस्यात्मविक्रेतृहीनाङ्गभगवृत्तयः॥
कुनखिश्यावदच्छ्वित्रिमित्रध्रुक्शठशौण्डिकाः।
ऐन्द्रजालिकलुब्धोग्रश्रेणीगणविरोधिनः॥
वधकश्चित्रकृत् खंवः पतितः कूटकारकः।
कुहकः प्रत्यवसितस्तस्करो राजपूरुषः॥
मनुष्यपशुमांसास्थिमधुक्षीराज्यसर्पिषाम्।
विक्रेता ब्राह्मणश्चैव द्विजो वार्धुषिकश्च यः॥
च्युतः स्वधर्मात्कुलिकः सूचिको हीनसेवकः।
पित्रा विवदमानश्च भेदकश्चेत्यसाक्षिणः॥ इति॥

नैकृतिकः पररन्ध्रान्वेषी। चाक्रिको वैतालिकः। महापथिको दीर्घाध्वगामी। सामुद्रवणिक् वहित्रयायी वणिक्। एकस्थाली एका पाकसाधनं स्थाली यस्य पुरुषस्य विप्रतिपन्नयोर-

न्यतरेण पुरुषेण सह यस्य सेवा एकं भोजनस्थानम्। तेनैकपाकः सहभोजनो वा एकस्थाली। अरिचरः अरिषु चरतीत्यरिचरः। वादिशत्रुसम्बन्धीति यावत्। ज्ञातयः सनाभ्यतिरिक्ताः सपिण्डाः। सनाभयः कात्यायनवचने स्फुटीभविष्यन्ति। शैलूषोऽत्र नटातिरिक्तरङ्गोपजीवी विवक्षितः, नटस्य कुशीलवपदेनैवोक्तत्वात्। विषजीवी विषस्य सङ्ग्रहणरक्षणादिव्यापारोपजीवी। अहितुण्डिकः सर्पक्रीडोपजीवी व्यालग्राही। गरदो विषदः। अग्निदः गृहादिदाहकः। कीनाशः कृपणः। उपपातिकः उपपातकवान्। क्लान्तः अतिखिन्नः। साहसिकः स्वबलावष्टम्भकारी। 'मनुष्यमारणं चौर्यं परदाराभिमर्शनम्। पारुष्यमुभयं चेति साहसं स्याच्चतुर्विधम्' इत्येतदन्यतमसाहसवान्वा। अश्रान्तः अयोगकारी। निर्धूतो ग्रामराजकुल्यश्रेण्यादिभिर्निःसारितः। लोकभयशून्य इति भवदेवः। भिन्नवृत्तो दुराचारः। असमावृत्तः अकृतसमावर्तनः। नैष्ठिकब्रह्मचारीत्येके। जडो मन्दबुद्धिः। तैलिकोऽत्र तिलविक्रयी। मूलको मूलं विप्रलम्भः, तत्कारी मौलिकः। वर्षासूचको वृष्टिसूचकः। नैमित्तिक इति यावत्। नक्षत्रसूचको ज्योतिर्विदः। अघशंसी अनृताभिधानशीलः परदोषप्रकाशको वा। भगवृत्तिर्जायाजीवी। शंवः धृष्टभाटनेन भिक्षाटनशीलः। कुहको दाम्भिकः। प्रत्यवसितः त्यक्तप्रव्रज्यः। कुलिकः परिच्छेदकेन नियुक्त इति कल्पतरुः। अस्य करणे निषेधः। विधिश्चाकृतसाक्ष्ये। सूचकः परदोषसूचनार्थं राज्ञा नियुक्तः।

कात्यायनः

कुल्याः सम्बन्धिनश्चैव विवाह्यो भगिनीपतिः।
पिता बन्धुः पितृव्यश्च श्वशुरो गुरवस्तथा॥
नगरग्रामदेशेषु नियुक्ता ये पदेषु च।
वल्लभाश्च न पृच्छेयुरुक्तास्ते राजपुरुषाः॥

ये कुल्याद्याः कीर्तितास्तान्साक्ष्यं न पृच्छेयुः।

बृहस्पतिः

मातुः पिता पितृव्यश्च भार्या भ्रातृव्यमातुलौ।
भ्राता सखा च जामाता सर्ववादेष्वसाक्षिणः॥
परस्त्रीपानसक्ताश्च कितवाः सर्वदूषकाः।
उन्मत्तार्ताः साहसिका नास्तिकाश्च न साक्षिणः॥

कात्यायनः

मातृष्वसृसुताश्चैव सोदर्याः सुतमातुलाः।
एते सनाभयः प्रोक्ताः साक्ष्यं तेषु न योजयेत्॥

तथा

विरुद्धा धर्मिणः स्युश्चेत्साक्ष्यं वर्गस्य न क्वचित्।

वर्गेनर्गिणौ लक्षितौ साक्ष्यधिकारे शङ्खलिखिताभ्याम्

शुल्कगुल्माधिकृतौ दूतो वेष्टितशिराः स्त्रियश्च सर्वा गुरुकुलवासिनः परिव्राजकनिर्ग्रन्थशल्यव्यालग्राहिणः। इति।

शुल्काधिकृतः शुल्कग्रहणस्थानाधिकारी। पदातिसमूहो गुल्मः, तदधिकृतो गुल्माधिकृतः। गुरुकुलनिवासिनो ब्रह्मचारिणः। निर्ग्रन्थः क्षपणकः।

नन्विदमसाक्षित्वकथनमनर्थकम्। साक्षिलक्षणाभिधानेनैवार्थात्तद्विलक्षणानामसाक्षित्वसिद्धेरिति–मैवं, लक्षणान्वितसाक्षिणामलाभे प्रतिषेधराहित्यमात्रशालिनां साक्षित्वं प्रतिपादनार्थम्। तथा प्रतिषेधस्य सफलत्वात् साहसादौ तु प्रातिस्विकनिषिद्धव्यतिरिक्तानां समान्यतः प्रतिषिद्धानामपि यथोक्तालाभ उपादानमिति।

---

## अथ साक्षिप्रत्युद्धारः

तत्र मनुनारदौ

साहसेषु च सर्वेषु स्तेयसंग्रहणेषु च।
वाग्दण्डयोश्च पारुष्ये न परीक्षेत साक्षिणः॥
अन्तर्वेश्मनि रात्रौ वा बहिर्ग्रामाच्च यो भवेत्।
एतेष्वेवाभियोगश्चेत्परीक्षा नात्र साक्षिणाम्॥

अत्र

मनुष्यमारणं चौर्यं परदाराभिमर्शनम्।
पारुष्यमुभयं चेति साहसं स्याच्चतुर्विधम्॥

इति वचनात्साहसपदेनैवावगतत्वात् स्तेयसंग्रहणादीनां पुनरुपादानमनर्थकमिति न वाच्यम्। तेषां स्वबलावष्टम्भेन क्रियमाणानां साहसपदाभिधेयत्वात् रहसि क्रियमाणानां तु संग्रहणादिपदाभिधेयत्वात्। अन्तर्वेश्मनीति असम्भवत्पुरुषान्तरदेशोपलक्षणम्। यत्तु गृहगतं कार्यमभिसारादि स्त्रीवेद्यमेव भवितुमर्हति यच्च बालस्थविरादिगोचर एव भवति तत्र साक्ष्यन्तराभावे स्त्र्यादीनामपि साक्षित्वम्।

तथाच मनुः

अनुभावी तु यः कश्चित्कुर्यात्साक्ष्यं विवादिनाम्।
अन्तर्वेश्मन्यरण्ये वा शरीरस्यापि चात्यये॥

स्त्रियाऽप्यसंभवे कार्यं बालेन स्थविरेण वा ।
शिष्येण बन्धुना वापि दासेन भृतकेन वा ॥ इति ।

अनुभावी येन तत्कार्यं प्रसङ्गादनुभूतम् । यः कश्चिदधमोऽपि । शरीरस्यात्यये तदैव यदि मृत्युस्तदापीत्यर्थः । दासो गर्भदासः । भृतकः भृत्या परिक्रीतः ।

**उशनाः**

दासोऽन्धो बधिरः कुष्ठी स्त्रीबालस्थविरादयः ।
एतेऽप्यनभिसंबन्धाः साहसे साक्षिणो मताः ॥

अनभिसंबन्धाः मित्रादिभावरहिताः । साहसे साहसेष्वित्यर्थः । अभिसंबन्धाश्चेत्साहसादिष्वपि ते वर्जनीयाः ।

अत एव **नारदः**

असाक्षिणो ये निर्दिष्टा दासनैकृतिकादयः ।
कार्यगौरवमासाद्य भवेयुस्तेऽपि साक्षिणः ॥

कार्यगौरवं साहसादि ।

तेषामपि न बालः स्यान्नैको न स्त्री न कूटकृत् ।
न बान्धवो न चारातिर्ब्रूयुस्ते साक्ष्यमन्यथा ।

तेषां दासनैकृतिकादिनां मध्येऽपि व्यक्तानृतहेतुशालिनो बालादयो वर्ज्या इत्यर्थः ।

व्यक्तानृतहेतूनपि तेषु स एवाह

बालोऽज्ञानादसत्यात्स्त्री पापाभ्यासाच्च कूटकृत् ।
विब्रूयाद्बान्धवः स्नेहाद्वैरनिर्यातनादरिः ॥

असत्यात् असत्यशीलत्वादित्यर्थः । निर्यातनं प्रतीकारः ।

**मनुः**

एकोऽलुब्धस्तु साक्षी स्याद्बह्वयः शुच्योऽपि न स्त्रियः ।
स्त्रीबुद्धेरस्थिरत्वाच्च दोषैश्चान्यैश्च ये वृताः ॥

एकोऽप्यलुब्धः पुमान् । बह्वयः शुच्यः अलुब्धा अपि । अन्यः अर्थसंबन्धित्वादिभिर्दोषैर्ये वृतास्ते बहवोऽपि न साक्षिणः । एकस्मिन्नलुब्धे विपरीतवादिनि ...

**कात्यायनः**

ऋणादिषु परीक्षेत साक्षिणः स्थिरकर्मसु ।
साहसान्यायिके चैव परीक्षा कुत्रचित्स्मृता ॥

## अथ साक्षिदूषणम्

तत्र बृहस्पतिः

साक्षिणोऽर्थिसमुद्दिष्टान्सत्सु दोषेषु दूषयेत् ।
अदुष्टान्दूषयन्वादी तत्समं दण्डमर्हति ॥ इति ।

तत्समं विप्रतिपत्तिविषयसमम् । ते च यथार्थदोषैरेव दूष्याः, अन्यथा दण्डाभिधानात् ।

यथा च कात्यायनः

नातथ्येन प्रमाणं तु दोषेणैव तु दूषयेत् ।
मिथ्याभियोगे दण्ड्यः स्यात्साध्यार्थाच्चापि हीयते ॥

प्रमाणं साक्ष्यादि । अत्र के दोषाः कथं वाच्या इत्यपेक्षायामाह स एव ।

प्रमाणस्य हि ये दोषा वक्तव्यास्ते विवादिना ।
गूढास्तु प्रकटाः सभ्यैः काले शास्त्रप्रदर्शनात् ॥

विवादिना विदितत्वेनानुद्भाविता दोषाः शास्त्रप्रदर्शनेन प्रकटीकृत्य सभ्यैर्वक्तव्या इत्यर्थः ।

व्यासः

सभासदां प्रसिद्धं यल्लोकसिद्धमथापि च ।
साक्षिणां दूषणं ग्राह्यमसाध्यं दोषवर्जनात् ॥
अन्यैस्तु साक्षिभिः साध्ये दूषणे पूर्वसाक्षिणाम् ।
अनवस्था भवेद्दोषस्तेषामप्यन्यसंभवात् ॥

असाध्यं सिद्धत्वेन साधनार्हम् । दोषवर्जनात् अनवस्थालक्षणदोषविरहात् । अन्यैस्तु परभूतसाक्षिभिरनधिगुणैः । अधिगुणैस्तु दूषणे दूषणस्याभावात् ।

बृहस्पतिः

लेख्यं वा साक्षिणो वाऽपि विवादे यस्य दूषिताः ।
तस्य कार्यं न सिद्ध्येत यावत्तं न विशोधयेत् ॥
पुनर्विवादं कुरुते तस्य राजा विचारयेत् ॥

अयं कूटसाक्षीत्यादिवचनमभिधाय यदि वादी पुनर्विवादं कुरुते तदा तद्विचारयेदित्यर्थः ।

व्यासः

साक्षिदोषाः प्रयोक्तव्याः संसदि प्रतिवादिना ।
पत्रे विलिख्य तान् सर्वान् वाच्याः प्रत्युत्तरं तु ते ॥
प्रतिपन्नौ न साक्षित्वमर्हन्ति तु कथंचन ।
अतोऽन्यथा भावनीयाः क्रियया प्रतिवादिना ॥

अभावयन् दमं दाप्यः प्रत्यर्थी साक्षिणः स्फुटम् ।
भाविताः साक्षिणो वर्ज्याः साक्षिधर्मनिराकृताः ॥
जितः स विनयं दाप्यः शास्त्रदृष्टेन कर्मणा ।
यदि वादी निराकाङ्क्षः साक्षिसभ्येष्ववस्थितः ॥

प्रत्युत्तरं उत्तरमुत्तरं प्रति ते दोषा वाच्या उद्भावनीयाः । प्रत्यर्थिना साक्षिषु दूषितेषु यदि ते दूषणं न प्रतिपद्यन्ते तदा क्रियया भावनीयाः । अथ दुष्टत्वेन न विभावयति तदा दण्ड्यः । यदा तु दुष्टतया भावितास्तदा त्याज्याः साक्षिणः । साक्षिवादर्थिता तु जितो भवतीत्यर्थः । अत्र साक्षिविचारण सभावितदोषविषयम् । असमावितदोषाणामपि विचारणेऽनवस्था स्यादित्यन्यैस्तु साक्षिभिरित्यनेन विरोधः । लोभादिना कूटसाक्षिनिर्देशेऽदुष्टानां वा दूषणे दण्डमाह कात्यायनः

येन कार्यस्य लोभेन निर्दिष्टाः कूटसाक्षिणः ।
गृहीत्वा तस्य सर्वस्वं कुर्यान्निर्विषयं ततः ॥
'तथ्येऽर्थे साक्षिणो यस्तु दूषयेत्प्रागदूषितान्'।
न च तत्कारणं ब्रूयात् प्राप्नुयात्पूर्वसाहसम् ॥

निर्विषयं विवादविषयरहितम् । पूर्वसाहसमुत्तमसाहसम् ।

---

## अथ साक्षिप्रश्नः

तत्र नारदः

आहूय साक्षिणः पृच्छेन्नियम्य शपथैर्भृशम् ।
समस्तान्विदिताचारान्विज्ञातार्थान्पृथक् पृथक् ॥

प्रश्ने कालविशेषमाह विष्णुः

साक्षिणश्चाहूयादित्योदये कृतशपथान्पृच्छेत् ।

मनुः

देवब्राह्मणसान्निध्ये साक्ष्यं पृच्छेदृतं द्विजान् ।
उदङ्मुखान्प्राङ्मुखान्वा पूर्वाह्णे वै शुचिः शुचीन् ॥

तथा

सभान्तः साक्षिणः प्राप्तानर्थिप्रत्यर्थिसन्निधौ ।
प्राड्विवाकोऽनुयुञ्जीत विधिनाऽनेन सान्त्वयन् ॥

ऋत सत्यम्। सभान्त सभामध्ये। अनुयुञ्जीत पृच्छेत्। विधिना वक्ष्यमाणेन। साक्षिभाषणेऽविलम्बनीयमित्याह

कात्यायनः

न कालहरणं कार्यं राजा साक्षिप्रभाषणे।
महान् दोषो भवेत्कालाद्धर्मव्यावृत्तिलक्षणः॥ इति।

अत्र राजपदं विचारकमात्रोपलक्षणम्।

साक्षिवादने विशेषमाह स एव

अर्थिप्रत्यर्थिसान्निध्ये साध्यार्थस्य च सन्निधौ।
प्रत्यक्षं देशयेत्साक्ष्यं परोक्षं च कथञ्चन॥
अर्थस्योपरि वक्तव्यं तयोरपि विना क्वचित्।
चतुष्पादेषु धर्मोऽयं द्विपदस्थावरेषु च॥
तौल्यगणिममेयानामभावेऽपि हि वादयेत्।
क्रिया कार्येषु सर्वेषु साक्षित्वेनान्यतोऽन्यथा॥ इति।

अर्थिप्रत्यर्थिसान्निध्य इत्यादि। वादिप्रतिवादिसान्निध्ये सति तत्समक्षमेव साक्षिवादनं कर्तव्यम्। तत्सान्निध्याशक्यत्वे तयोरसन्निधावपि। साध्यार्थसन्निधौ विवादविषयसन्निधौ। चतुष्पदादीनां सन्निधावेव साक्षिवादनं कर्तव्यम्। सति सम्भवे तौल्यगणिममेयानाम्। असन्निधावपि साक्षिवादनं विधेयमित्यर्थः। तौल्यं तोलनीयं सुवर्णादि। गणिमं गणेयं कपर्दकादि। मेयं मातव्यं धान्यादि। क्रिया कृतिव्यवहार इति यावत्।

बृहस्पतिः

समान्तःस्थैस्तु वक्तव्यं साक्ष्यं नान्यत्र साक्षिभिः।
सर्वसाक्ष्येष्वयं धर्मोऽन्यः स्यात्स्थावरेषु च॥
वधे च प्राणिनां साक्ष्यं वादयेच्छिन्नसन्निधौ।
तदभावे तु चिह्नस्य नान्यथैव विवादयेत्॥

तदभावे शिवाभावे चिह्नस्य अस्थिशृङ्गादेः सन्निधाविलन्वयः। साक्षिप्रश्ने प्रकारमाह

मनुः

यद्द्वयोरनयोर्वेत्थ कार्येऽस्मिंश्चेष्टितं मिथः।
तद्ब्रूत सर्वं सत्येन युष्माकं ह्यत्र साक्षिता॥
सत्यं साक्ष्ये वदन्साक्षी लोकानाप्नोति पुष्कलान्।
इह चानुत्तमां कीर्तिं वागेषा ब्रह्मपूजिता॥
साक्ष्येऽनृतं वदन्साक्षी पाशैर्बध्येत वारुणैः।
विवशः शतमाजातीस्तस्मात्साक्ष्ये वदेदृतम्॥

सत्येन पूयते साक्षी धर्मः सत्येन वर्धते ।
तस्मात्सत्यं हि वक्तव्यं सर्ववर्णेषु साक्षिभिः ॥
आत्मैव ह्यात्मनः साक्षी गतिरात्मा तथाऽऽत्मनः ।
माऽवमंस्थाः स्वमात्मानं नृणां साक्षिणमुत्तमम् ॥
मन्यन्ते वै पापकृतो न कश्चित्पश्यतीति नः ।
तांश्च देवाः प्रपश्यन्ति स्वस्यैवान्तरपूरुषः ॥
द्यौर्भूमिरापो हृदयं चन्द्रार्काग्नियमानिलाः ।
रात्रिः सन्ध्ये च धर्मश्च वृत्तज्ञाः सर्वदेहिनाम् ॥ इति ।

ब्रह्मपूजिता ब्रह्मणाऽनुमोदिताः । शतमाजातीरिति । शतं शतसंख्याः आजातीः आवृत्त्या जन्मानि । पूयते पूर्वकृतात्पापात् । आत्मेत्यादि । आत्मा परमात्मा । आत्मनः शरीरस्य जीवस्य च । साक्षी चेष्टितसाक्षात्कारवान् । गतिर्ज्ञानहेतुः । देवा इन्द्रियस्थाः सूर्यादयः । अन्तरपुरुषः परमात्मा । हृदयं मनः । साक्षिश्रावणे **विष्णुनारदौ**

अश्वमेधसहस्रं च सत्यं च तुलया धृतम् ।
अश्वमेधसहस्राद्धि सत्यमेवातिरिच्यते ॥

**नारदः**

पुराणैर्धर्मवचनैः सत्यमाहात्म्यदर्शनैः ।
अनृतस्यापवादैश्च भृशमुत्त्रासयेदिमान् ॥
नग्नस्तु प्रतिरुद्धः सन् बहिर्द्वारे बुभुक्षितः ।
अमित्रान् भूयसः पश्येद्यः साक्ष्यमनृतं वदेत् ॥
यां रात्रिमधिविन्ना स्त्री यां चैवाक्षपराजितः ।
यां च भाराभितप्ताङ्गो दुर्विवेक्ता(?) स तां वसेत् ॥

अधिविन्ना कृतविवाहान्तरपतिका ।

साक्षी साक्ष्यं समुद्दिष्टो गोकर्णशिथिलश्चरन् ।
सहस्रं वारुणान्पाशानात्मनि प्रतिमुञ्चति ॥
तस्य वर्षशते पूर्णे पाश एकः प्रमुच्यते ।
एवं संबन्धनात्तस्मान्मुच्यते नियतक्रमात् ॥

गोकर्णशिथिलश्चरन् गोकर्णवत् शिथिलश्चरन् व्यवहारे दृढमब्रुवन्नित्यर्थः ।

एकमेवाद्वितीयं यत्प्राहुः पावनमात्मनः ।
सत्यं स्वर्गस्य सोपानं पारावारस्य नौरिव ॥
वरं कूपशताद्वापी वरं वापीशताद् ह्रदः ।
वरं ह्रदशतात्पुत्रः सत्यं पुत्रशताद्वरम् ॥

भूर्धारयति सत्येन सत्यनोदेति भास्करः।
सत्येन वायुः पवते सत्येनापः स्रवन्ति च॥
सत्यमेव परं धाम सत्यमेव परं तपः।
सत्यमेव परो धर्मो लोकानामिति नः श्रुतम्॥
सत्यं देवाः समासेन मनुष्यास्त्वनृतं स्मृतम्।
इहैव तस्य देवत्वं यस्य सत्ये स्थितं मनः॥
नास्ति सत्यात्परो धर्मो नानृतात्पातकं परम्।
साक्षिधर्मे विशेषेण सत्यमेव वदेत्ततः॥
पुराणानुमतौ चात्र द्वौ श्लोकौ समुदाहृतौ।
यौ श्रुत्वा सत्यमेवेह सदा वाच्यं नरैर्बुधैः॥
यः परार्थेऽपहरते स्वां वाचं पुरुषाधमः।
आत्मार्थे किं न कुर्यात्स पापं नरकनिर्भयः॥
अर्था ये वाचि नियता वाङ्मूला वाचि निश्रिताः।
यस्तु तांस्तेनयेद्वाचं स सर्वस्तेयकृन्नरः॥

बौधायनः

त्रीनेव च पितॄन्हन्ति त्रीनेव च पितामहान्।
सप्त जातानजातांश्च साक्ष्यं साक्षी मृषा वदन्॥
पञ्च पश्वनृते हन्ति दश हन्ति गवानृते।
शतमश्वानृते हन्ति सहस्रं पुरुषानृते॥
सर्वं भूम्यनृते हन्ति साक्षी साक्ष्यं मृषा वदन्।

अत्रात्मानं परिगणय्य सप्तत्वं विवक्षितम्।

---

## अथ साक्षिशपथः

तत्र शङ्खलिखितौ

साक्षिणः स्वर्णरजतरत्नगोधान्यसूर्याग्निगजस्कन्धाश्वपृष्ठरथोपस्थशस्त्रादिभिः तथा पुत्रपौत्रैर्यथावर्णं परिग्रहविशेषः स्यात्। देवब्राह्मणस्वामिनामग्रत इति।

अत्र सुवर्णादीनां स्पर्शनेन सूर्यस्य दर्शनेन शापयेदिति शेषः। तथा पुत्रपौत्रैरिति। पुत्रपौत्रशिरःस्पर्शनेन स्वल्पेऽर्थे शापयेदित्यर्थः। यथावर्णमिति। यस्य वर्णस्य यद्द्रव्यस्पर्शनेन शपथोऽभिहितः स वर्णस्तद्द्रव्यस्पर्शेन शापनीय इत्यर्थः।

वर्णविशेषे प्रत्याह नारदः

सत्येन शापयेद्विप्रं क्षत्रियं वाहनायुधैः ।
गोबीजकाञ्चनैर्वैश्यं शूद्रं सर्वैस्तु पातकैः ॥

सत्येन शापयेत् । सत्य ब्रूहीति शापयेदित्यर्थः । अत्र विप्रपदमकृष्टब्राह्मणपरम् । तथा च गौतमः

शपथेनैकेन सत्यकर्म तदेव राजब्राह्मणसंसदि स्यादब्राह्मणानाम् । इति ।

वाहनायुधैरिति । वाहनायुधाना ते हानिर्मिथ्योक्तौ स्यादेवं शापयेदित्यर्थः ।

एवं गवादीनामपि । सर्वैः पातकैः 'ब्रह्मघ्नो ये स्मृता लोका' इत्यादिभिः साक्षिणं प्रति वक्ष्यमाणैः ।

मनुर्नारदश्च पठे

ब्रूहीति ब्राह्मणं पृच्छेत्सत्यं ब्रूहीति पार्थिवम् ।
गोबीजकाञ्चनैर्वैश्यं शूद्रं सर्वैस्तु पातकैः ॥
ब्रह्मघ्नो ये स्मृता लोका ये च स्त्रीबालघातिनः ।
मित्रद्रुहः कृतघ्नस्य ते ते स्युर्ब्रुवतो मृषा ॥
जन्मप्रभृति यत्किञ्चित् पुण्यं भद्र त्वया कृतम् ।
तत्ते सर्वं शुनो गच्छेद्यदि ब्रूयास्त्वमन्यथा ॥

भद्रेति शूद्रसम्बोधनम् ।

एकोऽहमस्मीत्यात्मानं यस्त्वं कल्याण मन्यसे ।
नित्यं स्थितस्ते हृद्येष पुण्यपापेक्षको मुनिः ॥

मुनिः ज्ञानवान् । पुण्यपापेक्षक· पुण्यपापेक्षणार्थम् ।

यमो वैवस्वतो देवो यस्तवैष हृदि स्थितः ।
तेन चेदविवादस्ते मा गङ्गां मा कुरून्गमः ॥

यमः यमनकर्ता, तेन चेदविवाद इति । तद्दर्शनाविरुद्धवादः । तदा कुरून् कुरुक्षेत्र गङ्गा च मा गम· । तदविसवादेन सर्वतीर्थफललाभ इति तात्पर्यार्थः ।

नग्नो मुण्डः कपालेन भिक्षार्थी क्षुत्पिपासितः ।
क्रुद्धः शत्रुकुलं गच्छेद्यः साक्ष्यमनृतं वदेत् ॥

कपालेन घटकर्परेण । एतेनैतावद्दुःखजनक पाप भवतीति तात्पर्यम् ।

अवाक्शिरास्तमस्यन्धे किल्बिषी नरकं व्रजेत् ।
यः प्रश्नं वितथं ब्रूयात्पृष्टः सन् धर्मनिश्चये ॥

अन्धो मत्स्यानिवाश्नाति निरपेक्षः सकण्टकान् ।
यो भाषतेऽर्थवैकल्यमप्रत्यक्षं सभां गतः ॥

अन्धः अन्धताहेतोः । मत्स्यानित्यादि । यथा आपाततः सुखं दुःखं तु महत्तथा-
त्रेत्यर्थः । अर्थवैकल्यमयथार्थं यथा भवति । अप्रत्यक्षं अचक्षुर्विषयम् ।

यस्य विद्वान् हि वदतः क्षेत्रज्ञो नाभिशङ्कते ।
तस्मान्न देवाः श्रेयांसं लोकेऽन्यं पुरुषं विदुः ॥

अथ श्लोकत्रये नारदस्य

यावतो बान्धवान्यस्मिन् हन्ति साक्ष्येऽनृतं वदन् ।
तावतः संप्रवक्ष्यामि शृणु सौम्यानुपूर्वशः ॥
पंच पश्वनृते हन्ति दश हन्ति गवानृते ।
शतमश्वानृते हन्ति सहस्रं पुरुषानृते ॥
हन्ति जातानजातांश्च हिरण्यार्थेऽनृतं वदन् ।
सर्वं भूम्यनृते हन्ति मा स्म भूम्यनृतं वदीः ॥

बान्धवान्पूर्वपुरुषान् । हन्ति नरके पातयति । केचित्तु तावत्पुरुषेषु दोषो भवतीत्य-
स्यार्थमाहुः । सहस्रं पूर्वपुरुषानेव । अजातान् पुत्रादीन् । अत्रापि सहस्रमित्यन्वयः । सर्वं
सहस्रादप्यधिकम् ।

अप्सु भूमिवदित्याहुः स्त्रीणां भोगे च मैथुने ।
अब्जेषु चैव रत्नेषु सर्वेष्वश्ममयेषु च ॥
पशुवत् क्षौद्रघृतयोर्यानेषु च तथाऽश्ववत् ।
गोवद्रजतवस्त्रेषु धान्ये ब्रह्मणि चैव हि ॥
एतान्दोषानवेक्ष्य त्वं सर्वाननृतभाषणे ।
यथाश्रुतं यथादृष्टं सत्यमेवाञ्जसा वद ॥

अप्सु तडागादिषु । स्त्रीणा भोगे च मैथुने मैथुनरूपस्त्रीसंभोगविषयमिथ्योक्तौ अब्जेषु
रत्नेषु मुक्तादिषु । अश्ममयेषु माणिक्यादिषु । ब्रह्मणि वेदे । अञ्जसा शीघ्रम् ।

याज्ञवल्क्यः

सुकृतं यत्त्वया किंचिज्जन्मान्तरशतैः कृतम् ।
तत्सर्वं तस्य जानीहि यं पराजयसे मृषा ॥

नारदः

सत्यं ब्रूह्यनृतं त्यक्त्वा सत्येन स्वर्गमेष्यसि ।
उक्त्वाऽनृतं महाघोरं नरकं प्रतिपत्स्यसे ॥

नरकेषु च ते शश्वजिह्वामुत्कृत्य दारुणाः ।
असिभिः शातयिष्यन्ति बलिनो यमकिङ्कराः ॥
शूलैर्भेत्स्यन्ति चाक्रम्य क्रोशन्तमपरायणम् ।
अवाक्शिरः समुत्क्षिप्य क्षेप्स्यन्त्यग्नौ ह्रदेषु च ॥
अनुभूय सुदुःखानि चिरं नरकवेदनाः ।
इह यास्यस्यपापासु गृध्रकाकादियोनिषु ॥
ज्ञात्वैतानमृते दोषांस्तथा सत्येषु सद्गुणान् ।
सत्यं वदोद्धरात्मानं नात्मानं पातयस्वयम् ॥
न बान्धवा न सुहृदो न धनानि महान्त्यपि ।
अलं धारयितुं सर्वे तमस्यन्धे निमज्जतः ॥
पितरस्त्ववलम्बन्ते पुत्रे साक्षित्वमागते ।
तारयिष्यति किं वाऽस्मान् किं वाऽधः पातयिष्यति ॥
सत्यमात्मा मनुष्यस्य सर्वे सत्ये प्रतिष्ठितम् ।
सर्वथैवात्मनात्मानं श्रेयस्येव नियोजयेत् ॥
यां रात्रिमजनिष्ठास्त्वं यां च रात्रिं मरिष्यसि ।
वृथा तदन्तरं ते स्यात्साक्ष्यं चेदन्यथा वदेः ॥ इति ।

अत्र महापातकादिश्रावणं शूद्रविषयं द्रष्टव्यम्। शूद्रं सर्वैस्तु पातकैरिति। शूद्रे सर्वपातकश्रावणस्य विहितत्वात् गोरक्षकादिद्विजातिविषयं वा ।

तथा च मनुः

गोरक्षकान्वाणिजकांस्तथा कारुकुशीलवान् ।
प्रेष्यान्वार्धुषिकांश्चैव विप्रान् शूद्रवदाचरेत् ॥
ये व्यपेताः स्वकर्मभ्यः परपिण्डोपजीविनः ।
द्विजत्वमभिकाङ्क्षन्ति तांश्च शूद्रवदाचरेत् ॥

गोरक्षकान् पशुपालनेन जीवतः । कारून् सूपकारादिवृत्त्या । कुशीलवान् नटवृत्त्या । प्रेष्यान् ब्राह्मणस्य दास्याभावेऽपि स्वतः प्रतिपन्नदास्यान् । शूद्रवदाचरेत् सर्वपातकैः पृच्छेत् । एते ब्राह्मणा अपि शूद्रवच्छपथं कारयितव्या इत्यर्थः ।

—o—

## अथ साक्षिवादादिविधिः

तत्र वसिष्ठः

प्राङ्मुखोऽवस्थितः साक्षी शपथैः शापितः स्वकैः ।
हिरण्यगोशकृद्दर्भान् तान्संस्पृश्य वदेदृतम् ॥

कात्यायनः

अनुद्विग्नेन चित्तेन दृष्टं सम्यग्यदा तु यत् ।
प्रत्यक्षं तच्छ्रुतं कार्यं साक्ष्यं साक्षी तु यद्वदेत् ॥

बृहस्पतिः

विहायोपानदुष्णीषं दक्षिणं पाणिमुद्धरेत् ।
हिरण्यगोशकृद्दर्भान्समादाय ऋतं वदेत् ॥

पाणिमुद्धरेत् । प्रावृतवस्त्रं यज्ञोपवीतवत्कुर्यादित्यर्थः । अत्र दक्षिणपाण्युद्धरणमवधानार्थम् । अदृष्टार्थमित्यन्ये ।

अत्र गौतमः

नासमवेताः पृष्टाः प्रब्रूयुः । इति ।

असमवेताः अमिलिताः । एतच्च समवेतदृष्टकार्यविषयम् । असमवेतदृष्टकार्यत्वं समवेते च वाच्यम् ।

तथा च कात्यायनः

समवेतैस्तु यद्दृष्टं वक्तव्यं तत्तथैव हि ।
विभिन्नैर्नैककार्यं च वक्तव्यं तत्पृथक् पृथक् ॥
भिन्नकाले तु यत्कार्यं विज्ञातं तत्र साक्षिभिः ।
एकैकं वादयेत्तत्र भिन्नकाले तु तद्ब्रुयुः ॥

नैककार्यमिति । अनेककार्यमित्यर्थः ।

तथा

नापृष्टैरनियुक्तैर्वा सर्मं सत्यं प्रयत्नतः ।
वक्तव्यं साक्षिभिः साक्ष्यं विवादस्थानमागतैः ॥

अनियुक्तैः साक्षित्वेनानुपस्थापितैः ।

कात्यायनः

स्वभावोक्तं वचस्तेषां ग्राह्यं यद्दोषवर्जितम् ।
उक्ते तु साक्षिणो राज्ञा प्रष्टव्या न पुनः पुनः ॥ इति ।

मनुरपि

स्वभावेनैव यद्ब्रूयुस्तद्ग्राह्यं व्यावहारिकम् ।
अतो यदन्यद्विब्रूयुर्धर्मार्थं तदपार्थकम् ॥

स्वभावेनेति । अविचार्यैव द्राक् । व्यावहारिकं पादकम् । तदन्यत्पश्चादालोचनादिना । अपार्थकं व्यर्थम् ।

व्यासः

कालाकृतिवयोद्रव्यदेशजातिप्रमाणतः ।
अन्यूनं चेन्निगदितं सिद्धं साध्यं विनिर्दिशेत् ॥

विष्णुयाज्ञवल्क्यौ

यस्योचुः साक्षिणः सत्यां प्रतिज्ञां स जयी भवेत् ।
अन्यथावादिनो यस्य ध्रुवं तस्य पराजयः ॥

सत्यां प्रतिज्ञामिति । द्रव्यजातिसङ्ख्यादिविशिष्टां प्रतिज्ञां सत्यां ये तु प्राहुः ।

बृहस्पतिरपि

यत्राशेषप्रतिज्ञार्थः साक्षिभिः प्रतिवर्णितः ।
स जयी स्यादन्यथा तु साध्यार्थं न समाप्नुयात् ॥

प्रतिवर्णितः सत्यत्वेनेति शेषः । अन्यथा न्यूनाधिकाद्यभिधाने । अत एव कात्यायनः

देशं कालं धनं संख्यां रूपं जात्याकृती तु यः ।
विसंवदेद्यत्र साक्ष्ये तदनुक्तं विदुर्बुधाः ॥

नारदः

निर्दिष्टेष्वर्थजातेषु साक्षी चेत्साक्ष्य आगतैः ।
न ब्रूयादक्षरसमं न तन्निगदितं भवेत् ॥

अक्षरसमं अक्षरानुरूपं, पृष्टार्थमिति यावत् । अनेनापृष्टार्थमपार्थकमित्युक्तं भवति ।
तथा

देशकालवयोद्रव्यप्रमाणाकृतिजातिषु ।
यत्र विप्रतिपत्तिः स्यात्साक्ष्यं तदपि कुत्सितम् ॥
न्यूनमप्यधिकं वार्थं प्रब्रूयुर्यत्र साक्षिणः ।
तदप्यनुक्तं विज्ञेयमेष साक्ष्यविधिः स्मृतः ॥ इति ।

एतच्च ऋणादिस्थावरप्रायविवादविषयम् । तथा च कात्यायनः

ऋणादिषु विवादेषु स्थिरप्रायेषु निश्चितम् ।
न्यूने वाऽप्यधिके वार्थे प्रोक्ते साध्यं न सिद्ध्यति ॥ इति ।

यावत्प्रतिज्ञातार्थसाधनार्थोद्दिष्टसाक्षिवाक्यं न्यूनाधिकं चेत्तदा सन्देहापादकमेव। न पुनः प्रतिज्ञातार्थैकदेशसाधनार्थमुद्दिष्टं साक्षिवाक्यमपि। एतदपि स्वविषयन्यूनाधिकं चेत्तदा न प्रमाणम्, उत्तरार्थस्य सामान्यतः प्रवृत्तत्वात्। यथा येषु देशकालपात्रेषु शताभियोगे पृष्टः साक्षी तेष्वेव देशादिषु यदेवमाह नाहमस्य शतग्रहणं जानामि किंतु पञ्चाशद्ग्रहणं जानामि किन्तु पञ्चाशद्ग्रहणमिति न्यूनम्। सार्धशतग्रहणं जानामीति वाऽधिकमेवाभिधत्ते तदप्यनभिहितमेव, उभयत्राप्यन्यतरप्रतिज्ञासत्यतायां विनिगमनाभावात्। न तावदधिकाभिधानं साक्षिणः प्रमाणावगतसार्धशतग्रहणमूलकमिति वक्तुं शक्यते। आदराभ्यासातिशयो हि स्मृतिमूलसंस्काराधायकः, स चार्थिन एव युज्यते, न साक्षिणः। तेनार्थी न स्मरति साक्षी च स्मरत्यधिकमिति नोपपन्नम्। नाप्यर्थकृतप्रतिज्ञासत्यत्वप्रतिपादनार्थम्। अर्थिनाऽप्यधिकग्रहणं स्यात्, प्रतिज्ञासत्वात्। नापि विषयान्तरत्वं, देशकालादेः प्रत्यभिज्ञानात्। तेनान्यथानुपपत्त्या इदमेवावगम्यते यदर्थग्रहणस्वरूपं जानात्येव। द्रव्यसंख्यादौ तु भ्रान्त इति। नच भ्रान्तिमूलमभिधानमन्यतरप्रतिज्ञा सत्यत्वे प्रमाणम्। ननु भवत्वेवमधिकाभिधाने। न्यूनाभिधानेषु कथमुत्तरवाद्युक्तशतग्रहणस्य साक्ष्यभिहितपञ्चाशद्ग्रहणेऽपि सत्यत्वान्न तस्य विजयः ?। उच्यते—नात्रोत्तरवादिना शतसंख्यास्वरूपे तात्पर्यम्, तथा सति विशेषनिषेधप्रतिज्ञायाः शेषाभ्यनुज्ञाफलकत्वादिति न्यायेनोनशतसंख्यावच्छिन्नग्रहणस्वीकारप्रसङ्गात्। किन्तु शतं मया न गृहीतमित्यस्यायमर्थो यत्तत्किंदेशादौ मयाऽस्य न किमपि गृहीतमिति पञ्चाशद्ग्रहणाभिधानेनान्यतरप्रतिज्ञासत्यत्वमिति साधूक्तम्। तदप्यनुक्तमिति। सर्वत्र चात्र संशयप्रशमनार्थं दिव्यादिना क्रियान्तरेण निर्णयः। स्त्रीसंग्रहणादौ तु साध्यैकांशकथनेऽपि साध्यसिद्धिर्भवत्येव। कात्यायनवचनं च तत्रैकदेशसाधनेनैव साहसस्य निष्पन्नत्वात्।

> साध्यैकांशेऽपि गदिते साक्षिभिः सकलं भवेत्।
> स्त्रीसङ्गे साहसे चौर्ये यत्साध्यं परिकल्पितम्॥ इति।

यत्तु

> उक्ताधिकं तु यत्र स्यात्तत्साध्यं तत्र वर्जयेत्।
> साक्षी तत्र न दण्ड्यः स्यादब्रुवन् दण्डमर्हति॥

इति कात्यायनवचनं तत्तु ऋणादिस्थिरप्रायविषयम्।

---o---

## अथ साक्षिपरीक्षणम्

तत्र कात्यायनः

उपस्थितान्परीक्षेत साक्षिणो नृपतिः स्वयम् ।
साक्षिभिर्भाषितं वाक्यं सह सभ्यैः परीक्षयेत् ॥
यदा शुद्धा क्रिया याऽल्पा तदा तद्वाक्यशोधनम् ।
शुद्धाच वाक्याद्यः शुद्धः स शुद्धोऽर्थोऽन्यथा न च ॥

क्रियापदमत्र साक्षिरूपप्रमाणपरम् । साक्षिपरीक्षणं तु स्वरवर्णादिभिः । तथा च बृहस्पतिः

उपस्थिताः परीक्ष्याः स्युः स्वरवर्णेङ्गितादिभिः ॥

शङ्खलिखितौ

मन्त्रिभिः शास्त्रसामर्थ्याद्दुष्टलक्षणं ग्राह्यम् । तिर्यक् प्रेक्षते, समन्तादवलोकयति, अकस्मान्मूत्रपुरीषं विसृजति, देशाद्देशान्तरं गच्छति, पाणिना पाणिं पीडयति, नखाभिकृन्तति, मुखमस्य विवर्णतामेति, प्रस्विद्यति चास्य ललाटं, न चक्षुर्न वाचं प्रतिपूजयति, अकस्माद्वदति, प्रशंसति, पुनःपुनरन्यमपनुदति, बहिर्निरीक्षते, शास्त्रं परामृशति, लोकमुपवर्णयति, भूमिं विलिखति, शिरः प्रकम्पयति, ओष्ठौ निर्भुजति, सृक्कणी परिलेढि, अविस्मितः कर्मसु महत्त्वापि, भ्रुवौ संहरति, हसति, तूष्णीं ध्यायति, पूर्वोत्तरं विरुद्धं व्याहरति, एवमादिदुष्टलक्षणं क्रुद्धस्य च स्वामिनोऽन्यत्र प्रकृतिशीलात्तत्र राजमूलो व्यवहारः । इति ।

क्रुद्धस्य चेति । क्रोधाक्रान्तस्यापि स्वामिनो राज्ञ एतानि लक्षणानि मन्त्रिभिर्ग्राह्याणीति । अस्यापवादमाह—अन्यत्र प्रकृतिशीलात् । यः स्वभावत एवैवंविधस्तद्व्यतिरेकेणैतानि साक्षिणो दुष्टत्वस्य क्रुद्धत्वस्य स्वामिनो लक्षणानीत्यर्थः । राजक्रोधावधारणे प्रयोजनमाह—राजमूलो व्यवहार इति । यस्मादिति शेषः ।

नारदः

यस्त्वात्मदोषदुष्टत्वादस्वस्थ इव लक्ष्यते ।
स्थानात् स्थानान्तरं गच्छेदेकैकमनुधावति ॥
कासत्यकस्माच्च भृशमभीक्ष्णं निश्वसित्यपि ।
विलिखत्यवनिं पद्भ्यां बाहू वासश्च धूनयेत् ॥
भिद्यते मुखवर्णोऽस्य ललाटं स्विद्यते तथा ।
शोषमागच्छतश्चोष्ठौ ऊर्ध्वं तिर्यक् च वीक्षते ॥
त्वरमाण इवाविद्धमपृष्टो बहु भाषते ।
कूटसाक्षी स विज्ञेयस्तं पापं विनयेद्भृशम् ॥

अविद्धं कुटिलम् ।

श्रावयित्वा तथाऽन्येभ्यः साक्षित्वं यो विनिह्नुते ।
स विनेयो भृशतरं कूटसाक्ष्यधिको हि सः ॥ इति ।

पूर्वमहं साक्षीति विख्याप्य साक्षिणामाह्वानकालेऽहं न साक्षीतीत्थमपलपति असावत्यर्थं दण्ड्य इत्यर्थः ।



## अथ साक्षिदण्डः

तत्र मनुः

लोभान्मोहाद्भयान्मैत्र्यात् कामात्क्रोधात्तथैव च ।
अज्ञानाद्बालभावाच्च साक्ष्यं वितथमुच्यते ॥
एषामन्यतमे स्थाने यः साक्ष्यमनृतं वदेत् ।
तस्य दण्डविशेषांस्तु प्रवक्ष्याम्यनुपूर्वशः ॥
लोभात्सहस्रं दण्ड्यस्तु मोहात्पूर्वं तु साहसम् ।
भयाद् द्वौ मध्यमौ दण्डौ मैत्र्यात्पूर्वं चतुर्गुणम् ॥
कामाद्दशगुणं पूर्वं क्रोधात्तु त्रिगुणं परम् ।
अज्ञानाद् द्वे शते पूर्णे बालिश्याच्छतमेव तु ॥
एतानाहुः कौटसाक्ष्ये प्रोक्तान्दण्डान्मनीषिभिः ।
धर्मस्याव्यभिचारार्थमधर्मनियमाय च ॥ इति ।

लोभोऽर्थलिप्सा । मोहो विपरीतज्ञानं वैचित्त्यं वा । मैत्र्यं स्नेहातिशयः । कामो रतिविषयोऽभिलाषः । अज्ञानं तद्विषयस्फुटज्ञानाभावः । अज्ञानं तात्कालिकभ्रमः । बालभावः साक्ष्ययोग्यवयोऽवस्थाऽभावः । बालभावः यौवनोन्मेषप्राप्तो मदः न बाल्यं बालस्य साक्ष्यनिषेधादित्यपरे । वितथ मिथ्या । उच्यते लोकैः । अन्यतमस्थाने । अन्यतमनिमित्तं प्राप्य । सहस्रं पणानामिति शेषः । पूर्वसाहसं सार्धपणशतद्वयम् । द्वौ मध्यमौ मध्यमसाहसं द्विगुणम् । पणसहस्रमिति यावत् । पूर्वं पूर्वसाहसं तच्चतुर्गुणम् । पणसहस्रमित्यर्थः । दशगुणं पूर्वं प्रथमसाहसं दशगुणम् । परं उत्तमसाहसं तत्त्रिगुणं पणसहस्रत्रयमित्युक्तं भवति । परं पूर्वापेक्षया परो मध्यमसाहसस्तस्मिंस्त्रिगुणे पंचदशशतानि संपद्यन्त इति कृत्यकल्पतरुः ।

याज्ञवल्क्यः

पृथक्पृथग्दण्डनीयाः कूटकृत्साक्षिणस्तथा ।
विवादाद्द्विगुणं दण्डं विवास्यो ब्राह्मणः स्मृतः ॥ इति ।

यो धनप्रदानादिना कूटान् साक्षिणः करोति स कूटकृत्। साक्षिणश्च ये कूटास्ते विवादात् विवादपराजये यो दण्डस्तत्र वक्ष्योक्तस्तस्माद्दण्डाद्द्विगुणं पृथक् पृथक् एकैकशो दण्डनीयाः, न तु विवादपदात्। प्रपञ्चितं चैतत्सभ्यदण्डनिरूपणावसरे। ब्राह्मणस्तु विवास्यः राष्ट्रान्निर्वास्यः, न तु दण्ड्यः।

मनुरपि

कूटसाक्ष्यं तु कुर्वाणांस्त्रीन्वर्णान् धार्मिको नृपः।
प्रवासयेद्दण्डयित्वा ब्राह्मणं तु विवासयेत्॥

एतच्च बहुशः कृतकूटसाक्षिविषयम्, दण्डस्यातिगुरुत्वात्। कुर्वाणानिति वर्तमाननिर्देशाच्च। त्रीन्वर्णान् क्षत्रियादीन् लोभात्सहस्रं दण्ड इत्यादिपूर्वोक्तदण्डेन दण्डयित्वा प्रवासयेत् राष्ट्रान्निष्कासयेत्। ब्राह्मणं तु विवासयेत्। तुशब्दो दण्डव्यवच्छेदार्थः। तेन ब्राह्मणं विवासयेत् प्रवासयेदेव न दण्डयेत्। केचित्तु (प्रवा)सशब्दस्यार्थशास्त्रे मारणे प्रयोगादस्य चाऽर्थशास्त्रस्य सर्वशेषत्वात् क्षत्रियादीन् त्रीन्वर्णान् पूर्वोक्त दण्डं दण्डयित्वा मारयेत्तत्राप्योष्ठच्छेदनं जिह्वाच्छेदनं प्राणवियोजनं च कौटसाक्ष्यविषयानुसारेणद्रष्टव्यमित्याहुः। ब्राह्मणं तु निष्कासयेत्। गोविन्दराजस्त्वन्यथाह—विगतं वासोऽस्येति विवासाः। विवाससं करोति विवासयति तत्करोतीति णिचि कृते णाविष्ठवत्प्रातिपदिकस्येति टिलोपे रूपम्। तेन दण्डयित्वा विवासयेत् नग्नं कुर्यादित्यर्थः। यद्वा वसन्त्यस्मिन्निति वासो गृहं तेन विनासयेत् भग्नगृहं कुर्यादिति। ब्राह्मणस्यापि लोभादिकारणविशेषावबोधे अनभ्यासे च मनूक्तोऽर्थदण्ड एव अभ्यासेऽर्थदण्डो विवासनं च। तत्रापि द्रव्यानुबन्धाद्यपेक्षया विवासनं नग्नीकरणं गृहभङ्गो देशान्निर्वासनं चेति व्यवस्था ज्ञातव्या। लोभादिकारणविशेषापरिज्ञाने अनभ्यासे बाल्यविषये कौटसाक्ष्ये ब्राह्मणस्यापि क्षत्रादिवदर्थदण्ड एव। महाविषये तु देशान्निर्वासनमेवात्राप्यभ्यासे सर्वेषामेव मनूक्तं द्रष्टव्यम्। न च 'राष्ट्रादेनं बहिः कुर्यात्समग्रधनमक्षतम्' इति वचनात् ब्राह्मणस्यार्थदण्डाभाव एवेति वाच्यम्। अस्य वचनस्य प्रथमकृतसाहसविषयत्वेनासर्वविषयत्वात्। अन्यथाऽर्थदण्डाभावे शारीरदण्डे च निषिद्धे स्वल्पेऽप्यपराधे नग्नीकरणं गृहभङ्गकरणं अङ्ककरणं विप्रवासनं दण्डाभावो वा प्रसज्येत। यच्च 'षड्भिः परिहार्यो ब्राह्मणः' इत्यादि गौतमवचनं तत्सभ्यदण्डप्रकरणे व्यवस्थापितम्। किञ्च

चतुर्णामपि वर्णानां प्रायश्चित्तमकुर्वताम्।
शारीरं धनसंयुक्तं दण्डं धर्म्यं प्रकल्पयेत्॥

इति वचने ब्राह्मणस्यापि धनदण्डविधानाच्च। वधादिदण्डस्तु कदाचिदपि न भवत्येव।

न जातु ब्राह्मणं हन्यात्सर्वपापेष्ववस्थितम्।

इति मनुस्मरणात्।

तथा

न ब्राह्मणवधाद्भूयानधर्मो विद्यते भुवि ।
तस्मादस्य वधं राजा मनसापि न चिन्तयेत् ॥

इति **विष्णुः**।

कूटसाक्षिणां सर्वस्वापहारः कार्यः । यस्त्वन्यैः साक्षिभिः सह साक्ष्यमंगीकृत्य निगदावसरे रागादिदूषितो निह्नुते तस्य दण्डविशेषमाह **याज्ञवल्क्यः**

यः साक्ष्यं श्रावितोऽन्येभ्यो निह्नुते तत्तमोवृतः ।
स दाप्योऽष्टगुणं दण्डं ब्राह्मणं तु विवासयेत् ॥

श्रावितः साक्षिभिः सह साक्ष्यम्। अन्येभ्यः साक्षिभ्यो निह्नुते नाहमत्र साक्षीति वक्ति। अष्टगुणं विवादपराजयदण्डाष्टगुणम्। दण्डदानासमर्थं ब्राह्मणं विवासयेत्। विवासनं च नग्नीकरणादिप्रागुदीरितविषयानुसारेण द्रष्टव्यम्। क्षत्रियादीनां तु अष्टगुणद्रव्यदण्डदानासामर्थ्ये स्वस्वजात्युचितकर्मकरणनिगडबन्धनकारागृहप्रवेशनादिकं द्रष्टव्यम्। एतच्च पूर्वश्लोकेऽप्यनुसर्तव्यम्। यदा तु सर्वेऽपि निह्नुवते तदा सर्वेऽपि पृथक् पृथग्दण्ड्याः समानदोषत्वात्।

**कात्यायनः**

उक्त्वाऽन्यथा ब्रुवाणास्तु दण्ड्याः स्युर्वा(वा?)छलान्विताः ।

पूर्वे(र्व ?) साक्ष्यमुक्त्वा पुनरन्यथा ब्रुवाणा दण्ड्याः दण्डश्चानुबन्धाद्यपेक्षया ज्ञेयः। प्रकटीकृतश्चायमर्थो लोभादिविषये दण्डतारतम्यं विदधता **मनुना**।

**मनुनारदौ**

यस्य दृश्येत सप्ताहादुक्तवाक्यस्य साक्षिणः ।
रोगोऽग्निर्ज्ञातिमरणमृणं दाप्यो दमं च सः ॥

रोगाश्च **मनूक्ताः**

ज्वरातीसारविस्फोटा गूढास्थिपरिपीडनम् ।
नेत्ररुग्गलरोगाश्च तथोन्मादश्च जायते ॥
शिरोरुग्भुजभङ्गश्च दैविका व्याधयो नृणाम् ॥ इति ।

एतच्चातिपीडाकररोगोपलक्षणम्। एवमग्न्यादिकमप्यतिपीडाकरं विवक्षितम्।

**मनुः**

त्रिपक्षादब्रुवन्साक्ष्यमृणादिषु नरोऽगदः ।
तदृणं प्राप्नुयात्सर्वं दशबन्धं च सर्वतः ॥

त्रिपक्षपर्यन्तं अगदो नीरोगः साक्ष्यमवदन् तदृणं प्राप्नुयात्। ऋणी स्यात् धनिकाय धनं दद्यात् इत्यर्थः। तथा दशबन्धं वृद्धनदशमभागं राज्ञे दण्डं दद्यात्। सर्वतः सर्वस्मात् विवाद-

विषयधनात्। इदं च स्मरणार्थं त्रिपक्षदानम्। यदि तु व्याध्याद्यभिसम्बन्धात् तावताऽपि न स्मर्तुं योग्यस्तदा न दोष इत्येतदर्थमगद इति विशेषणम्। अत्रागदपदमावश्यकप्रतिबन्धमावोपलक्षणम्।

**याज्ञवल्क्योऽपि**

अब्रुवन्हि नरः साक्ष्यमृणं सदशबन्धकम्।
राज्ञा सर्वं प्रदाप्यः षट्चत्वारिंशत्तमेऽहनि॥

सर्वं सवृद्धिकमृणम्।

**कात्यायनः**

साक्षी साक्ष्यं न चेद्ब्रूयात् स सदण्डं वहेदृणम्।
अतोऽन्येषु विवादेषु त्रिशतं दण्डमर्हति॥

अतोऽन्येषु ऋणादितोऽन्येष्वित्यर्थः। तथा च स एव

अपृष्टाः सत्यवचने प्रश्नस्याकथने तथा।
साक्षिणः सन्निरोद्धव्या गर्ह्या दण्ड्याश्च धर्मतः॥
वाक्पारुष्यापवादे च दाप्याः स्युस्त्रिशतं दमम्।
ऋणादिषु धनं दण्डं ते स्युर्दाप्या ऋणं तथा॥ इति।

अत्र ते स्युः इति सर्वनाम्ना प्रश्नोत्तर अकथयंत एव प्रत्यवमृश्यन्ते, तेषामत्यर्थं प्रकृतत्वात्। अत्र यद्यपि धनदण्डमात्रमुक्तम्, तथापि प्रागुदीरितानुवचनानुसारेण धनदण्डः कार्यः। अनिर्दिष्टसाक्षिणां स्वेच्छया साक्ष्याभिधाने **वसिष्ठः**

यः साक्षी नैव निर्दिष्टो नाहूतो नैव चोदितः।
ब्रूयान्मिथ्येति तथ्यं वा दण्ड्यः सोऽपि नराधमः॥

यस्त्वाहूतः सन् प्रतिबन्धकाभावेऽपि नाऽऽगच्छेत्सोऽपि दण्ड्यः। तथाह **बृहस्पतिः**

आहूतो यस्तु नागच्छेत्साक्षी रोगविवर्जितः।
ऋणं दण्डं च दाप्यः स्यात् त्रिपक्षात्परतस्तु सः॥

अत्र त्रिपक्षात्परमप्यनागच्छता अब्रुवता साक्षिणा दत्तं सदण्डमृणमधमर्णतो न ग्राह्यं, तस्य स्वापराधेन दत्तत्वात्। त्रिपक्षात्परत इति वचनात्ततोऽर्वाङ् दाप्य इति गम्यते।

**विष्णुः**

पारयन्तोऽपि ये साक्ष्यं तूष्णींभावमुपासते।
ते कूटसाक्षिणां पापैस्तुल्या दण्डेन चैव हि॥

अत्र कूटसाक्षिणो नानादण्डाभिधानेऽपि प्रागुदीरितविष्णुवचनाभिहितसर्वस्वापहारलक्षणो दण्डोऽवगन्तव्यः। यत्र साक्षिभिः सम्यग्विवादविषयो न ज्ञायते तत्र तत्परिज्ञानार्थं कालदानमाह **कात्यायनः**

सम्यक्क्रियापरिज्ञाने देयः कालस्तु साक्षिणाम् ।
सन्दिग्धं यत्र साक्ष्यं तु सद्यः स्पष्टं विवादयेत् ॥ इति ।

एवं च यत्प्रागुक्तं 'न कालहरणं कार्यं राज्ञा साक्षिप्रभाषणे' इत्यादि । तत्स्पष्टसाक्ष्यविषयमवसेयम् ।

**मनुः**

यस्मिन् यस्मिन्विवादे तु कौटसाक्ष्यं कृतं भवेत् ।
तत्तत्कार्यं निवर्तेत कृतं चाप्यकृतं भवेत् ॥

**गौतमः**

अवचने दोषिणः स्युः स्वर्गिणश्च सत्यवचने विपर्यये नरकम् ।

विपर्यये विपरीताभिधाने । साक्षिणामवचनं सत्यवचनं च सर्वत्र प्रतिपिद्धम् । यदपवादमाह **मनुः**

क्षत्रविट्शूद्रविप्राणां यत्रर्तोक्तौ भवेद्वधः ।
तत्र वक्तव्यमनृतं तद्धि सत्याद्विशिष्यते ॥
तद्वदन् धर्मतोऽर्थेषु जानन्नप्यन्यथा नरः ।
न स्वर्गाच्च्यवते लोकाद्दैवीं वाचं वदन्ति ताम् ॥ इति ।

ऋतोक्तौ सत्यवचने वधः सभाव्यते तत् साक्ष्यम् । धर्मतो धर्मार्थं जानन्नप्यन्यथा वदन् स्वर्गान्न च्यवते । यतस्तत्रानृतापि वाक् दैवे(?)ति वदन्ति । यत्र इदं चानृतवचनं प्रमादस्खलितादिकृतापराधे शंकाभियोगादौ च सत्यवचनेन प्राणि(?)वधः अनृतवदनेन च तदभावस्तत्राभ्यनुज्ञायते । यद्यपि ब्राह्मणस्य वधाभावस्तथापि परिभवेपूमदण्डाद्राज्ञो वधः संभवत्येव । बुद्धिपूर्वसाहसादौ दृष्टे वधसम्भवेऽपि सत्यमेव वाच्यम् ।

तथा च **गौतमः**

नानृतवचने दोषो जीवनं चेत्तदधीनं न तु पापीयसा जीवनम् ॥ इति ।

पापीयसः स्तेनादेर्यत्रानृतवचनेन जीवनं सपद्यते, न तत्रानृतं वक्तव्यम् । एवं चात्र विषये राज्ञा साक्षिव्यतिरिक्तप्रमाणेनैव तत्त्वमन्वेष्यम् । अत एव **कात्यायनः**

प्राणान्तिकविवादेषु विद्यमानेषु साक्षिषु ।
दिव्यमालम्बते वादी न पृच्छेत्तत्र साक्षिणः ॥ इति ।

**याज्ञवल्क्यः**

वर्णिनां हि वधो यत्र तत्र साक्ष्यनृतं वदेत् ।
तत्पावनाय निर्वाप्यश्चरुः सारस्वतो द्विजैः ॥

तत्पावनाय अनृतवचनावचननिमित्तप्रत्यवायपरिहाराय । चरुः अनवस्रावितान्तरूष्म-

पक्वोदनः । सारस्वतः सरस्वतीदेवताकः । अत्र द्विजैरिति वचनात् शूद्रेण प्रायश्चित्तान्तरं कार्यमिति गम्यते ।

तथा च **विष्णुः**

तत्पावनाय कूष्माण्डीभिर्जुहुयात् ।
शूद्रश्चैकाह्निकं गोदशकस्य ग्रासं दद्यात् ॥ इति ।

कूष्माण्ड्यस्तु

'यद्देवा देवहेडनं पदवी दिव्यं तृणमहं बभूव आयुष्टे विश्वतो दधत्(?)

इत्याद्यास्तैत्तिरीयशाखोक्ता ऋचः । जुहुयात् घृतमिति शेषः ।

**मनुः**

वाग्दैवत्यैश्च चरुभिर्यजेरंस्ते सरस्वतीम् ।
अनृतस्यैनसस्तस्य कुर्वाणा निष्कृतिं पराम् ॥
कूष्माण्डैर्वाऽपि जुहुयाद्घृतमग्नौ यथाविधि ।
उदित्यृचा वा वारुण्या तृचेनाब्दैवतेन वा ॥ इति ।

यागिति सम्भूयानेकैः साक्षिभिर्मिथ्याभिधाने स्वाग्निषु प्रत्येकमेकैकश्चरुः पृथक् निर्वाप्यः । अत्र सरस्वत्येव देवता वाक्पदं तदुपलक्षकम् । ऋचेति वारुण्येति ऋग्विशेषणं तेन उदुत्तमं वरुणपाशमित्यृचा घृतमेव जुहुयात् । त्र्यृचेनेति । आपोहिष्ठेत्याद्युदकदैवतेन ऋक्त्रयेण होमश्च पापोत्कर्षापेक्षया सहस्रादधिको ज्ञेयः । अन्ये तु गुणजात्याद्युत्कर्षापकर्षापेक्षया प्रायश्चित्तं चतुष्टयव्यवस्थामाहुः । अत्र जुहुयादित्यनेनैवाग्नेः प्राप्तत्वात् पुनरग्निवचनं वैतानिकाग्निष्वेव पूर्वोक्तचरुविधानार्थमिति गम्यते । अत्र **मनुना याज्ञवल्क्येन** च साक्षिणां अवचनमनृतवचनं वाऽभ्यनुज्ञायाऽनृताभिधाने प्रायश्चित्तमुक्तं तेनैवमवसीयते—यत्पापमल्पं भवत्येव न सर्वथा पापाभाव इति । एवं च सत्याभिधाने यत्र वर्णिवधस्तत्र सत्याभिधाने महत्पापम्, सत्यानभिधाने त्वल्पम्, अत एवंविधे विषये साक्षिभिः सत्यं न वाच्यम् । यत्र पुनः सत्यवचने अर्थिप्रत्यर्थिनोरन्यतरस्य वधः असत्यवचने चाप्यन्यतरस्य वधो भवति तत्र तूष्णींभावाभ्यनुज्ञा यदि राजाऽनुमन्यते । अथ कथमपि पार्थिवः कथनं विना न मुञ्चति तत्रावश्यं वचने प्राप्ते भेदादसाक्षित्वं कर्तव्यम् । तस्याप्यसम्भवे सत्यमेव वाच्यम् । सत्यवचने वर्णिवधमात्रदोषस्य सद्भावः, असत्यवचने तु वर्णिवधदोषस्यासत्यवचनदोषस्य च सद्भावेन अतिगुरुत्वमिति सत्यमेव वाच्यम् । किन्तु तत्र यथाशास्त्रं प्रायश्चित्तं कर्तव्यमिति । केचित्तु साक्षिणामनृतवचनमवचनं च निषिद्धं तदिदाभ्यनुज्ञातम् । 'यत्तु नानृतं वदेदसुवन्याऽपि नरो भवति किल्विषी' इति सामान्येनानृतवचनमवचनं च निषिद्धं तदतिक्रमनिमित्तमिदं प्रायश्चित्तम् । न च साक्षिणामनृतवचनाभ्यनुज्ञानेऽपि साधारणानृतवचनप्रतिषेधातिक्रमस्य तादवस्थ्यादभ्यनुज्ञावचनमनर्थक-

मिति वाच्यम् । यतः साक्ष्यवचनावचनयोर्भूयानत्यवायः साधारणानृतवचनावचनयोरल्पीया-नित्यर्थवदभ्यनुज्ञावचनमित्याहुः ।

ननु नानृतवचने दोषोऽस्ति इति गौतमवचनेन

न नर्मयुक्तं वचनं हिनस्ति न स्त्रीषु राजन विवाहकाले ।
प्राणात्यये सर्वधनापहारे पञ्चानृतान्याहुरपातकानि ॥

इत्यादिधर्मादिवचनेन च अनृतवचनस्य पातकानिमित्तत्वाभिमानात्कथं प्रायश्चित्तोपदेशः ? इति—सत्यम्; साक्षिधर्मे नानावचनैर्यदधिकं पातकमुक्तं तादृगत्र साक्ष्यनृतवचने नास्तीत्येवंपरत्वादुभयोर्वचनयोः। किंचानिमित्तान्तरेण समयान्तरेऽर्थतत्त्वावगमेऽपि साक्षिणामन्येषां च प्रकृतादिविषये दण्डाभावोऽस्मादेवावगम्यत इति ।

देवलः

विहारे ब्रह्महासार्थे प्राणिनां जीवितेऽथवा ।
आत्मनः प्राणहेतोर्वा न सीदेदनृतं वदेत् ॥

विहारे मैथुने । ब्रह्महासार्थे ब्राह्मणार्थे हासार्थे च ।

गौतमः

विवाहे मैथुननर्मार्त्त संयोगेष्वदोषमेकेऽनृतम् ।

नानृतं ब्रूयादित्यनुवृत्तौ हारीतः

सोमक्रयकन्याविवाहमैथुनबालसंज्ञपनगोब्राह्मणहिते च ब्रुवन्मिथ्या न लिप्यते ।

एवं ब्राह

यत्र प्राणिवधो नास्ति यच्च नित्यमनिन्दितम् ।
स्वभावतश्च यत्सत्यं तत्सत्यं वचनं हितम् ॥

तथा

न नर्मयुक्तं वचनं हिनस्ति न स्वैरवाक्यं न च मैथुनार्थे ।
प्राणात्यये सर्वधनापहारे पञ्चानृतान्याहुरपातकानि ॥

महाभारते तु इदमेव द्वितीयचरणे 'न स्त्रीषु राजन विवाहकाले' इति पठित्वा पठितम् ।

——०——

## अथ साक्षिबलाबलम्

तत्र मनुविष्णू

वहुत्वं परिगृह्णीयात्साक्षिद्वैधे नराधिपः ।
समेषु च गुणोत्कृष्टान्गुणिद्वैधे द्विजोत्तमान् ॥

साक्षिद्वैधे साक्षिविप्रतिपत्तौ बहूनां वचनं ग्राह्यम्। समेषु समसंख्येषु द्वैधे गुणिनां वचो ग्राह्यम्। यत्र तु स्वल्पगुणिनः अगुणिनश्च बहवस्तत्रापि गुणिनामेवादरः।

उभयानुमतः साक्षी भवत्येकोऽपि धर्मवित्।

इति गुणातिशयस्य मुख्यत्वात्।

यत्तु

वचनं यत्र भिद्येत ते स्युर्भेदादसाक्षिणः ।

इति प्रागुदीरितवचनं तत्सर्वाकारेण तुल्यरूपाणां विप्रतिपत्तौ बोद्धव्यम्।

बृहस्पतिः

साक्षिद्वैधे प्रभूतास्तु ग्राह्याः साम्ये गुणान्विताः ।
गुणिद्वैधे क्रियायुक्तास्तत्साम्ये स्मृतिमत्तराः ॥

नारदोऽपि

साक्षिविप्रतिपत्तौ तु प्रमाणं बहवो मताः ।
तत्साम्ये शुचयो ग्राह्यास्तत्साम्ये शुचिमत्तराः ॥

याज्ञवल्क्योऽपि

उक्तेऽपि साक्षिभिः साक्ष्ये यद्यन्ये गुणवत्तमाः ।
द्विगुणा वाऽन्यथा ब्रूयुः कूटाः स्युः पूर्वसाक्षिणः ॥

कात्यायनोऽपि

यत्र वै भावितं कार्यं साक्षिभिर्वादिना भवेत् ।
प्रतिवादी यदा तत्र भावयेत् कार्यमन्यथा ।
बहुभिस्तत्कुलीनैर्वा कूटाः स्युः सर्वसाक्षिणः ॥ इति ।

तत्साध्यम्। ननु साक्षिलक्षणोपपत्तौ साक्ष्य(?)भिहिते पुनः प्रमाणान्तरगवेषणे अनवस्थादोषः प्रसज्येत। उच्यते—यदि वादी स्वप्रतिज्ञातार्थस्य स्वान्तरात्मसाक्षिकत्वेन निश्चितत्वादप्रतीतदोषाणामपि साक्षिणां वचनमर्थविसंवादित्वेनाप्रमाणं मन्यमानो विपर्यये दण्डावष्टंभेन साक्षिष्वपि दोषान्कल्पयति तदा प्रमाणान्तरगवेषणे को दोषः ? नन्वनुचितमिदमुच्यते।

यथा पक्केषु धान्येषु विफलाः प्रावृषो गुणाः ।
निर्णीतव्यवहाराणां प्रमाणमफलं भवेत् ॥

इति **नारदेन** प्रमाणान्तरस्य व्यर्थताभिधानात्। मैवं; अस्य वचनस्य पूर्वानावेदितप्रमाणान्तरविषयत्वात्। तथा च **तेनैवोक्तम्**

निर्णीते व्यवहारे तु प्रमाणमफलं भवेत्। इति।
लिखितं साक्षिणो वापि पूर्वमावेदितं न चेत्॥ इति।

तथा

क्रियां बलवतीमुक्त्वा दुर्बलां योऽवलम्बते।
स जयेऽवधृते सभ्यैः पुनस्तां नाप्नुयात्क्रियाम्॥ इति।

एवं च कृतसाक्ष्येभ्यः साक्षिभ्यो यदि गुणवत्तमा द्विगुणा वा पूर्वावेदिता अनासन्नाः साक्षिणः सन्ति तदा त एव प्रमाणीकर्तव्या इति। अन्ये त्वाहुः—'उक्तेऽपि साक्षिभिः साक्ष्ये' इत्यादि वाक्यं सप्तदिनाभ्यन्तरविषयम्। 'निर्वृत्तव्यवहाराणां प्रमाणमफलं भवेद्' इति तु सप्ताहानन्तरमिति विरोधाभाव इति। अधिकगुणवत्साक्ष्यभिप्रायं पूर्वम्। तदन्यविषयेच्छ(?)निर्वृत्ते व्यवहाराणामित्यादीतरपरे। केचित्पुनरमूलकदूषणे निर्वृत्तव्यवहाराणामित्यादि। समूलकदूषणे तु प्राचीनमित्याचक्षते इति।

इति साक्षिबलाबलप्रकरणम्

---

## अथ युक्तिः

तत्र **बृहस्पतिः**

असाक्षिके चिरकृते पृच्छेदुत्तरसाक्षिणः।
शपथान्वा प्रकुर्वीत उपधां वा प्रयोजयेत्॥

उपधा युक्तिः।

**नारदः**

प्रमादाद्धनिनो यत्र न स्याल्लेख्यं न साक्षिणः।
अर्थं चापह्नुते वादी तत्रोक्तस्त्रिविधो विधिः॥

वादी गृहीतधनः। विधिर्धनसाधनोपायः। सोऽपि **तेनैव** दर्शितः

चोदना प्रतिकालं च युक्तिलेशस्तथैव च।
तृतीयः शपथः प्रोक्तस्तैरेवं साधयेत्क्रमात्॥

प्रतिकालं चोदना प्रत्यर्पणकालो यदा यदा प्राप्तस्तदा तदा मम दीयतामिति त्रिश्चतुः-

पश्चकृत्वो वा मध्यस्थजनसमक्षमन्येनाप्रतिहता प्रतिदानप्रेरणा सा प्रथमोपायः । तदसम्भवे युक्तिलेशः—अमुष्मिन्कालेऽमुष्मिन्देशे अमुनार्थं सम्बन्धेनेयत्परिमाणमेतत्कमोर्थमृणं गृहीतं त्वयेत्यादि द्वितीयोपायः । अस्याप्यसम्भवे तृतीयोपायः शपथ इत्यर्थः । अयं चार्थस्तेनैव दर्शितः

अभीक्ष्णं चोद्यमानोऽपि प्रतिहन्यान्न तद्वचः ।
त्रिचतुःपञ्चकृत्वो वा परतोऽर्थं स दाप्यते ॥
चोदनाप्रतिघाते तु युक्तिलेशैस्तमन्वियात् ।
देशकालार्थसम्बन्धपरिमाणक्रियादिभिः ॥

कात्यायनः

श्राव्यमानोऽर्थिना यत्र यो ह्यर्थो न विघातितः ।
दानकालेऽथवा तूर्णीं स्थितः सोऽर्थो न मोदितः ॥
अर्थिनेवार्थितो यत्र विघातं न प्रयोजयेत् ।
त्रिचतुःपञ्चकृत्वो वा परतस्तदृणी भवेत् ॥
स्वामिना नृपतिर्विप्रं क्रमेणोक्तं प्रदापयेत् ।
अतोऽन्यं दापयेत्पूर्वं सकृदुक्ताविघातिनम् ॥

स्वामिना उत्तमर्णेन । उक्तं धनं मे देहीति याचितं उक्ताविघातिनं विप्रं क्रमेण शनैःशनैर्दापयेत् । विप्रादन्यं तादृशक्रमेणापीत्यर्थः ।

कात्यायनः

दानं प्रज्ञापनाभेदः संप्रलोभक्रिया च या ।
वित्तापनयनं चैव हेतवो हि विभावकाः ॥
एषामन्यतमो यत्र वादिनोद्भावितो भवेत् ।
मूलक्रिया तु तत्र स्याद्भाविते वादिनिह्नवे ॥

दानमुत्कोचदानम् । प्रज्ञापनाभेदः परिचायकस्वहस्ताद्यन्यथाकरणम् । संप्रलोभक्रिया विषयान्तरे तदधिकलोभोत्पादनम् । वित्तापनयनं वित्तशोषणम् । एषामन्यतम इति । एषां हेतूनामेकोऽपि चेद्वादिना भावितः सिद्धैव तदा मूलक्रिया ।

नारदः

असाक्षिप्रत्ययास्त्वन्ये षड्विवादाः प्रकीर्तिताः ।
लक्षणान्येव साक्षित्वे तेषामाहुर्मनीषिणः ॥
उल्काहस्तोऽग्निदो ज्ञेयः शस्त्रपाणिश्च घातकः ।
केशाकेशिगृहीतश्च युगपत्पारदारिकः ॥
कुद्दालपाणिर्विज्ञेयः सेतुभेत्ता समीपगः ।
तथा कुठारहस्तश्च वनच्छेत्ता प्रकीर्तितः ॥

प्रत्यक्षचिह्नैर्विज्ञेयो दण्डपारुष्यकृन्नरः ।
असाक्षिप्रत्यया ह्येते पारुष्ये तु परीक्षणम् ॥

साक्षित्वे साक्षिस्थाने । साक्षिस्थानत्वं चैतेषामविनाभावेन । प्रत्यक्षचिह्नैः रुधिराक्तखड्गादिभिः । असाक्षिप्रत्ययाः विनापि साक्षिभिश्चिह्नैरेव विगतसंशयाः । पारुष्ये तु परीक्षणम् । दण्डपारुष्ये कृत्रिमचिह्नविवेकाय परीक्षा कार्येत्यर्थः ।

तथाह स एव

कश्चित्कृत्वात्मना चिह्नं द्वेषात्परमुपद्रवेत् ।
युक्तिहेत्वर्थसंबन्धैस्तत्र युक्तं परीक्षणम् ॥

तत्र दण्डपारुष्ये । नन्वनर्थकमिदं वचनम् । 'तलवद् दृश्यते व्योम खद्योतो हव्यवाडिव' इत्यादिना उल्काहस्तादौ सर्वत्र परीक्षणस्य तेनैव विहितत्वात् । सत्यं, तत्रैवोपायविधिनाऽर्थपरीक्षणमनूद्यत इत्यदोषः । केचित्तु पारुष्यपदं वाक्पारुष्यपरमाहुः । एवं चौर्यविवादेऽपि कश्चिद् साक्षिप्रत्ययोऽवगन्तव्यः । यथा च शङ्खलिखितौ

केशाकेशिसङ्ग्रहणात् पारजायिकः । उल्काहस्तोऽग्निदः शस्त्रपाणिर्घातकः । लोप्त्रहस्तश्चोरः । इति ।

क्षेपेऽष्टशतं यथारूपं वा ।
रुधिरस्रावे प्रहारे चाभिपत्ते न साक्षिणः ॥

इति श्रीमन्महीमण्डलाखण्डलश्रीनागमल्लात्मजविषमप्रतिज्ञापरिपूरणपरायण-
कलिकालकर्णप्रतापलङ्केश्वरशरणागतवज्रपञ्जरपरमवैष्णवारिसुगनरसिंह-
प्रमादिनिखिलविरुदराजीविराजमानमानोन्नतमहाराजाधिराजश्रीपृथ्वी-
चन्द्रदेवविरचिते धर्मतत्त्वकलानिधौ महानिबन्धे व्यवहार-
प्रकाशे साक्षिसाक्ष्यानर्हसाक्षिप्रत्यु(?)द्धारसाक्षिदूषण
साक्षिप्रमादेनिरूपणं नाम चतुर्थ उल्लासः ।

—o—

## अथ दिव्यानि

तत्र पितामहः

यस्मिन्यस्मिन्विवादे तु साक्षिणो नास्ति स॰....।
साहसे तु विशेषेण तत्र दिव्यानि दापयेत् ॥

साक्षिग्रहणं मानुषप्रमाणोपलक्षणार्थम्। अत एवाह याज्ञवल्क्यः

प्रमाणं लिखितं भुक्तिः साक्षिणश्चेति कीर्तितम्।
एषामन्यतमाभावे दिव्यान्यतममुच्यते ॥

एषामिति युक्तेरप्युपलक्षणम्। अत एवाह नारदः

युक्तिष्वप्यसमर्थासु शपथैरेनमर्दयेत्।
अर्थकालबलापेक्षमग्न्यम्बुसुकृतादिभिः ॥

अर्दयेत् पीडयेत्। अर्थापेक्षत्वं सिसाधयिषितार्थाल्पत्वमहत्त्वानुरूपत्वम्।

घटोऽग्निरुदकं चैव विषं कोशश्च पञ्चमः।
उक्तान्येतानि दिव्यानि विशुद्ध्यर्थं महात्मभिः ॥
सन्दिग्धेऽर्थेऽभियुक्तानां परीक्षार्थं महात्मनाम्।
प्रोक्तानि नारदेनेह सत्यानृतविशुद्धये ॥

नेयं संख्या परिसंख्यार्थम्। इतरेषामपि दिव्यानां विद्यमानत्वात्। तथा च पितामहः

घटोऽग्निरुदकं चैव विषं कोशश्च पञ्चमः।
तण्डुलाश्चैव दिव्यानि सप्तमस्तप्तमाषकः ॥ इति।

बृहस्पतिः

घटोऽग्निरुदकं चैव विषं कोशश्च पञ्चमः।
षष्ठं च तण्डुलाः प्रोक्तं सप्तमं तप्तमाषकः ॥
अष्टमं फाल इत्युक्तं नवमं धर्मजं भवेत्।
दिव्यान्येतानि सर्वाणि निर्दिष्टानि स्वयंभुवा ॥ इति।

एते च घटादयो दिवि देवैः कृतत्वाद्दिव्यदेविक्सञ्ज्ञाद्वयशालिनः। तथा च पितामहः

यस्माद्देवैः प्रयुक्तानि दुष्करार्थे मनीषिभिः।
परस्परविशुद्ध्यर्थं तस्माद्दिव्यानि नामतः ॥

अत्रोपक्रमसामर्थ्याद्दैविकानि नामत इति लभ्यन्ते। देवैः प्रयुक्तानीति निमित्तदर्शनात्। उपसंहारसामर्थ्याद्दिवि सम्भवनिमित्ततेति गम्यते। 'दिव्यानि नामतः' इत्युक्तत्वात्। तेन सूत्रयोभ्यामनेन वचनेन घटादीनामाजिगमनादाज्यमित्यादिपदवद्यौगिकनामद्वयमुक्तम्।

**बृहस्पतिः**

अहमुद्देशतो वच्मि सन्दिग्धार्थविशुद्धये ।
देशकालार्थसंख्याभिः प्रत्युक्तान्यनुपूर्वशः ॥
अपराधानुरूपेण साध्वसाधुविवक्षया ।
शास्त्रोदितेन विधिना प्रदातव्यानि नान्यथा ॥

तत्र प्रसङ्गाद्दिव्यदेशानाह कात्यायनः

इन्द्रस्थानेऽभिशस्तानां महापातकिनां नृणाम् ।
नृपद्रोहप्रवृत्तानां राजद्वारेषु योजयेत् ॥
प्रातिलोम्यप्रसूतानां दिव्यं देयं चतुष्पथे ।
अतोऽन्येषु च कार्येषु सभामध्ये विदुर्बुधाः ॥

इन्द्रस्थानमिन्द्रध्वजपूजास्थानम् ।

---

## अथ दिव्यकालनिर्णयः

**तत्र पितामहः**

यो यस्य विहितः कालो विधिर्यस्य च यो यथा ।
तं प्रवक्ष्यामि तत्त्वेन वादिनश्च बलाबलम् ॥
चैत्रो मार्गशिरश्चैव वैशाखश्च तथैव हि ।
एते साधारणा मासा दिव्यानामविरोधिनः ॥
घटः सर्वर्तुकः प्रोक्तो वाते वाति विवर्जयेत् ।
अग्नेः शिशिरहेमन्तौ वर्षाश्चैव प्रकीर्तिताः ॥
शरद्ग्रीष्मेषु सलिलं हेमन्ते शिशिरे विषम् ॥

**नारदः**

विचार्य धर्मनिपुणैर्धर्मशास्त्रविशारदैः ।
धर्म्यं सर्वर्तुकं प्रोक्तं पण्डितैर्घटधारणम् ॥

घटग्रहणं कोशस्याप्युपलक्षणम् ।

कोशं तु सर्वदा देयं तुला स्यात्सार्वकालिकी ।

इति **नारद**स्मरणात् ।

कोशग्रहणं सर्वशपथानामुपलक्षणम्। तण्डुलानां विशेषान्तरा(?)विधानात्सार्वकालिकत्वम्। तेनाग्न्यम्बुविषाणामेव ऋतुना व्यवस्था। अत एव तेषामेव स्मृत्यन्तरे प्रतिषेधस्तत्रैव दर्शितः

न शीते तोयशुद्धिः स्यान्नोष्णकालेऽग्निशोधनम्।
न प्रावृषि विषं दद्यात्प्रवाते न तुलां नृपः॥ इति।

प्रवाते अतिशयिते वात इत्यर्थः। न शीते तोयशुद्धिरित्यत्र शीतपदेन हेमन्तशिशिरवर्षाणां ग्रहणम्। वसन्तस्य सकलदिव्यसाधारणतया शरद्ग्रीष्मयोश्च विशेषविहिततया तेषामेव परिशिष्टत्वात्। 'नोष्णकालेऽग्निशोधनम्' इत्यत्राप्युष्णशब्देन ग्रीष्मशरदो ग्रहणम्। विषविषये पितामहः

अव्यवस्थितमर्यादं विषं प्रावृषि वर्जयेत्।

पुनः स एव विशेषान्तरमाह

पूर्वाह्णेऽग्निपरीक्षा स्यात् पूर्वाह्णे च घटो भवेत्।
मध्याह्ने तु जलं देयं धर्मतत्त्वमभीप्सता॥
दिवसस्य तु पूर्वाह्णे कोशशुद्धिर्विधीयते।
रात्रौ तु पश्चिमे यामे विषं देयमशीतलम्॥

अत्र यद्यपि तण्डुलतप्तमाषादीनां नोक्तः समयविशेषस्तथापि पूर्वाह्ण एव तेषामपि प्रदानमुचितम्।

पूर्वाह्णे सर्वदिव्यानां प्रदानं परिकीर्तितम्।

इति सामान्येन नारदस्मरणात्। अयं च पूर्वाह्णादिविभागो दिवसस्य त्रेधा विभागमपेक्ष्य। अत्र यद्यपि पूर्वाह्ण इत्यविशेषणोक्तं तथापि भानुवारे दिव्यानि देयानि। तथैव शिष्टसमाचारस्य परिदृश्यमानत्वात्।

—o—

## अथ द्रव्यसंख्यादितो दिव्यविशेषनियमः

तत्र दैविकी क्रियेत्यनुवृत्तौ बृहस्पतिः

ऋणादिकेषु कार्येषु विसंवादे परस्परम्।
द्रव्यसंख्यान्विता देया पुरुषापेक्षया तथा॥

द्रव्यसंख्यान्विता विवादास्पदीभूतधनाल्पत्वमहत्त्वानुरूपा पुरुषापेक्षया हीनमध्योत्तमपुरुषानुरूपेण।

कात्यायनः

दत्तस्यापह्नवो यत्र (प्रमाणं तत्र ?) कल्पयेत् ।
स्तेयसाहसयोर्दिव्यं स्वल्पेऽप्यर्थे प्रदापयेत् ॥

प्रमाणं दिव्यादिकम् । कल्पयेदपहुतद्रव्यानुसारेणेति शेषः । स्वल्पेऽपीति । यादृशि स्वल्पे ऋणादौ दिव्यानवतारस्तादृश्यपि स्तेयादौ दिव्यं प्रदद्यादित्यर्थः ।

बृहस्पतिः

संख्या रश्मिरजोमूला मनुना समुदाहृताः ।
कार्षापणान्ता सा दिव्ये नियोज्या विनये तथा ॥
विषं सहस्रेऽपहृते पादोने च हुताशनः ।
त्रिभागोने च सलिलमर्धे देयो धटः सदा ॥
चतुःशताभियोगे तु दातव्यस्तप्तमाषकः ।
त्रिशते तण्डुला देयाः कोशश्चैव तदर्धके ॥
शते हृतेऽपहृते च दातव्यं धर्मशोधनम् ।
गोचरस्य प्रदातव्यं सभ्यैः फा(?)लं प्रयत्नतः ॥
एषा सङ्ख्या निकृष्टानां मध्यानां द्विगुणा स्मृता ।
चतुर्गुणोत्तमानां च कल्पनीया परीक्षकैः ॥

रश्मिरत्र त्रसरेणुः ।

तथा च मनुः

जालान्तरगते भानौ यत्सूक्ष्मं दृश्यते रजः ।
प्रथमं तत्प्रमाणानां त्रसरेणुं प्रचक्षते ॥ इति ।

कार्षापणस्ताम्रकर्षः । विनये दण्डे । निकृष्टानामित्यादौ निकृष्टत्वं मध्यमत्वं उत्तमं च जातिगुणकर्माद्यपेक्षया बोद्धव्यम् ।

याज्ञवल्क्यः

नासहस्राद्धरेत्फालं न विषं न तुलां तथा ।
नृपार्थेष्वभिशापे च वहेयुः शुचयः सदा ॥

नासहस्रात्सहस्रादूर्ध्वमेव अर्थापह्नवे फालादिक्रियेत्यर्थः । नृपार्थेषु नृपतिविषयेषु द्रोहादिषु । नृपद्रव्येष्विति पारिजातः । अभिशापे पातकाभियोगे । नृपार्थेषु महापातकाभियोगे च सदा द्रव्यसंख्यामनपेक्ष्यैव स्नानादिना शुचयः सन्तः एतानि फालादिदिव्यानि कुर्युः ।

यत्तु

सहस्रे तु घटं दद्यात्सहस्रार्धे तथायसम् ।
अर्धस्यार्धे तु सलिलं तस्यार्धे तु विषं स्मृतम् ॥

इति पितामहवचनम्, तत्तु यद्धनापहारे पातित्यसम्भवः तदितरविषयम् ।

विष्णुः

सर्वेष्वेवार्थजातेषु मूल्यं कनकं कल्पयेत् । तथा सुवर्णार्धोने कोशो दातव्यः शूद्रस्य ।

[illegible]

अन्यत्रागामिकालसमयनिबन्धनक्रियातः । कोशस्य [illegible]
येत् । प्राग्दृष्टदोषं स्वल्पेऽप्यर्थे दिव्यानामन्यतममे [illegible]
महत्यर्थेऽपि । इति ।

सुवर्णार्धोन इति । पञ्चगुञ्जकमापाष्टकं सुवर्णार्धं तस्मिन् किञ्चिन्न्यूने विवादपदद्रव्य-मूल्यानुसारेण कल्पिते शूद्रस्य कोशः । द्विगुणेऽर्थ इति । किञ्चिन्न्यूनसुवर्णार्धस्यैव । अन्यत्रेति । अस्माभिर्मिलित्वैवं कर्तव्यमेवेति यत्समयकरणं तस्मादन्यत्रेत्यर्थः । सीरेति । हलोत्खातमृत्तिका-हस्तम् । दिव्यानां घटादीनाम् । सत्सु शिष्टेषु विदितं प्रसिद्धं सच्चारित्रं सदाचारं पुरुषं महत्यर्थेऽपि घटादीनामन्यतमं न कारयेत् । किन्तु सत्यादिकमेव कारयेदित्यर्थः ।

कात्यायनः

सर्वद्रव्यप्रमाणं तु ज्ञात्वा हेम प्रकल्पयेत् ।
हेमप्रमाणयुक्तं तु तदा दिव्यं प्रयोजयेत् ॥
शते विषं तु पादोने हुतभुक् तत्र दृश्यते ।
आपस्त्रिभागहीने तु शतार्धे तु तुला स्मृता ॥
कोशपानं तदर्धे च दशपञ्चकसप्तसु ।
तदर्धे तण्डुला ज्ञेयास्तदर्धे तप्तमाषकः ॥

शते सुवर्णस्येति शेषः । कोशपानमित्यादि । तदर्धे पञ्चाशत्सुवर्णार्धे । दशपञ्चक-सप्तस्विति । पञ्चाशत्सुवर्णानां दशमेऽर्धे पञ्चमेऽर्धे सप्तमेऽर्धे इति पारिजातः । दशपञ्चकसप्त-दशकानामभागवचनतया दशपञ्चकसप्तसु सुवर्णेष्वित्येव तु विवक्षितम् । एतच्चाधमपुरुष-विषयतया वेदितव्यम् ।

वृद्धमनुः

ज्ञात्वा संख्यां सुवर्णानां शतनाशे विषं स्मृतम् ।
अशीतेस्तु विनाशे वै दद्याच्चैव हुताशनम् ॥

षष्ट्या नाशे जलं ज्ञेयं साचत्वारिंशतो घटः।
विंशद्दशविनाशे च कोशपानं विधीयते॥
पञ्चाधिकस्य वा नाशे तदर्धार्धस्य तण्डुलाः।
ततोऽर्धार्धविनाशे हि स्पृशेत्पुत्रादिमस्तकान्॥
ततोऽर्धार्धविनाशे हि लौकिक्यश्च क्रियाः स्मृताः।
एवं विचारयन् राजा धर्मार्थाभ्यां न हीयते॥ इति।

नाशशब्दोऽत्रापह्नववचनः। विंशद्दशविनाशे त्रिंशद्विनाश इत्यर्थः। अथवा विंशतिविनाशे दशविनाशे चेत्यर्थः। पञ्चाधिकस्य पञ्चभ्योऽधिकस्य षट्प्रभृतेरिति यावत्। तदर्धार्धस्य सार्धसुवर्णप्रभृतेर्विनाशे। ततोऽर्धार्धविनाशे। अष्टमाशन्यूनसुवर्णार्धप्रभृतेर्विनाशे पुत्रादिशिरःस्पर्शनम्। चशब्देन शूद्रादेः शपथप्रकरणवक्ष्यमाणदूर्वाकरत्वादिः स्मार्तशपथसङ्ग्रहः। अत्र। कात्यायनविषय एव अशीत्यादिविनाशे दिव्यान्युत्कृष्टपुरुषविषयाणि। कात्यायनवृद्धमनुवचनानि चैतानि ऋणादिविषयाणि, न स्तेयसाहसविषयाणि। अतो 'नृपार्थेष्वभिशापे च'त्यादिपूर्वोदीरितयाज्ञवल्क्यवचनेनाविरोधः।

## अथावष्टम्भादितो दिव्यव्यवस्था

तत्र **पितामहः**

अवष्टम्भादियुक्तानां घटादीनि तु दापयेत्।
तण्डुलाश्चैव कोशश्च शङ्कास्वेतौ नियोजयेत्॥

अवष्टम्भोऽत्र निश्चयः।

तथा

चौर्यशङ्काभियुक्तानां तप्तमाषो विधीयते।
शङ्काविश्वाससन्धाने विभागे रिक्थिनां सदा॥
क्रियासमूहकर्तृत्वे कोशमेव प्रदापयेत्।

क्रियासमूहकर्तृत्वे सम्भूयैकक्रियाकरणे।

**याज्ञवल्क्यः**

तुलाग्न्यापो विषं कोशो दिव्यानीह विशुद्धये।
महाभियोगेष्वेतानि शीर्षकस्थेऽभियोक्तरि॥

शीर्षकं शिरः। तच्च दिव्यकर्तृजये स्वय दण्ड—

**पितामहः**

शिरस्थायिविहीनानि दिव्यानि परिवर्जयेत् ।
चत्वारि तु घटादीनि कोशस्त्वेवाशिराः स्मृतः ॥
अभियोक्ता शिरःस्थायी दिव्येषु परिकल्पयेत् ।
अभियुक्ताय दातव्यं दिव्यं स्मृतिनिदर्शनात् ॥

**याज्ञवल्क्यः**

रुच्या वाऽन्यतरः कुर्यादितरो वर्तयेच्छिरः ।

रुच्या अभियोक्त्रभियुक्तयोरन्योन्यानुमत्या अन्यतरोऽभियोक्ता वा कुर्यात्, दिव्यमिति शेषः । इतरोऽभियुक्तो वा शिरः शारीरार्थदण्डयोरन्यतररूपं वर्तयेत् स्वीकुर्यात् । अयमाशयः—यथा मानुष्यं प्रमाणं भावैकविषयं न तथा दिव्यं, किन्तु भावाभावसाधारणम् । तेन मिथ्योत्तरप्रत्यवस्कन्दनप्राङ्न्यायेष्वन्यतरेच्छया दिव्यं भवति ।

**पितामहः**

राजभिः शङ्कितानां च निर्दिष्टानां च दस्युभिः ।
आत्मशुद्धिपराणां च दिव्यं देयं शिरो विना ॥

**नारदः**

अशिरांसि च दिव्यानि राजभृत्येषु दापयेत् ।
अभियोक्त्रभियुक्तानामन्येषां तु यथाक्रमम् ॥

**कालिकापुराणे**

महापातकशस्तेषु स्याद्दिव्यं नृपसाहसे ।
विप्रतिपत्तौ विवादे वर्णस्य स्थापने कृते ॥
तत्रैतद्दापयेद्दिव्यं शिरःपूर्वं महीपतिः ।
परदाराभिमर्शे च बहवो यत्र वादिनः ।
शिरोहीनं भवेद्दिव्यमात्मनः शुद्धिकारणात् ॥

विप्रतिपत्तौ परदाराभिमर्शादिविषयायाम् । विवादे ऋणादानादिविषये । परदाराभिमर्शे चेति चौर्यादीनामुपलक्षणम् ।

---

## अथ वर्णादितो दिव्यव्यवस्था

तत्र नारदः

ब्राह्मणस्य घटो देयः क्षत्रियस्य हुताशनः ।
वैश्यस्य सलिलं देयं शूद्रस्य विषमेव तु ॥
साधारणः समस्तानां कोशः प्रोक्तो मनीषिभिः ।
विषवर्जं ब्राह्मणस्य सर्वेषां वा तुला स्मृता ॥

याज्ञवल्क्यः

तुला स्त्रीबालवृद्धान्धपङ्गुब्राह्मणरोगिणाम् ।
अग्निर्जलं वा शूद्रस्य यवाः सप्त विषस्य वा ॥

कात्यायनः

राजन्येऽग्निं घटं विप्रे वैश्ये तोयं नियोजयेत् ।
सर्वेषु सर्वदिव्यं वा विषवर्जं द्विजोत्तमे ॥

तथा

गोरक्षकान्वाणिजकांस्तथा कारुकुशीलवान् ।
प्रेष्यान्वार्धुषिकांश्चैव ग्राहयेच्छूद्रवद्द्विजान् ॥

कालिकापुराणे

वैश्यस्य च जलं देयं विषं शूद्रस्य दापयेत् ।
वर्णान्त्यस्य सदा देयं माषकं तप्तहेमकम् ॥

वर्णान्त्यः म्लेच्छः ।

नारदः

स्त्रीबालातुरान्सत्त्वहीनान् परितप्योऽर्जिताम्बरान् ।
बालवृद्धातुरांस्त्रींश्च परीक्षेत घटे सदा ॥
नार्तानां तोयशुद्धिः स्याच्च विषं पित्तरोगिणाम् ।
श्वित्र्यन्धकुनखादीनां नाग्निकर्म विधीयते ॥
न मज्जनीयं स्त्रीबालं धर्मशास्त्रविशारदैः ।
रोगिणो ये च वृद्धाः स्युः पुमांसो ये च दुर्बलाः ॥
निरुत्साहान् व्याधिदुष्टानार्तांस्तोये निमज्जयेत् ।
सर्वे म्रियन्ते मज्जन्तः स्वल्पप्राणा हि ते स्मृताः ॥
साहसेऽप्यागतानेतान्नैव तोये नियोजयेत् ।
न चापि हारयेदग्निं न विषेण विशोधयेत् ॥

कात्यायनः

न लोहशिल्पिनामग्निं सलिलं नाम्बुसेविनाम् ।
मन्त्रयोगविदां चैव विषं दद्यात्तु न क्वचित् ॥
दिव्यं तु वर्जयेन्नित्यमार्तानां तु गदैर्नृणाम् ।
तण्डुलैर्न नियुञ्जीत व्रतिनं मुखरोगिणम् ॥

व्रतिनं गृहीतान्नपरिवर्जनरूपव्रतम् । मुखरोगिणं मुखपाकादिरोगवन्तम् ।

विष्णुः

न कुष्ठ्यसमर्थलोहकाराणामग्निर्देयः । शरद्ग्रीष्मयोश्च । न कुष्ठिपैत्तिकब्राह्मणानां विषं देयम् । प्रावृषि च । न श्लेष्मव्याध्यर्दितानां भीरूणां श्वासकासिनामम्बुजीविनां चोदकम् । हेमन्तशिशिरयोश्च । न नास्तिकेभ्यः कोशो देयः । देशे व्याधिमरकोपसृष्टे च ।

नारदः

महापराधे निर्धर्मे कृतघ्ने क्लीबकुत्सिते ।
नास्तिके दृष्टदोषे च कोशदानं विवर्जयेत् ॥

महापराधो महापातकः । निर्धर्मो वर्णाश्रमधर्मरहितः पाषण्डी । कुत्सितः प्रतिलोमजः । नास्तिकव्रात्यदासेष्विति पाठे दासाः कैवर्तादयः ।

पितामहः

मद्यपस्त्रीव्यसनिनां कितवानां तथैव च ।
कोशः प्राज्ञैर्न दातव्यो ये च नास्तिकवृत्तय

कात्यायनः

कालदेशविरोधेऽपि यथायुक्तं प्रकल्पयेत् ।
अन्येन हारयेद्दिव्यं विधिरेष विपर्यये ॥

अन्येन प्रतिनिधिना हारयेत्कारयेत् । विपर्यये अभियुक्तस्यासामर्थ्ये ।

नारदः

सव्रतानां कृशार्तानां व्याधितानां तपस्विनाम् ।
स्त्रीणां तु न भवेद्दिव्यं यदि धर्मस्त्ववेक्षते ॥

कात्यायनः

मातृपितृद्विजगुरुबालस्त्रीराजघातिनाम् ।
महापातकयुक्तानां नास्तिकानां विशेषतः ॥
लिङ्गिनां प्रशठानां तु मन्त्रयोगक्रियाविदाम् ।
वर्णसंकरजातानां पापाभ्यासप्रवर्तिनाम् ॥

एतेष्वेवाभियोगेषु निन्द्येष्वेव प्रयत्नतः ।
दिव्यं प्रकल्पयेन्नैव राजा धर्मपरायणः ॥
एतैरेव नियुक्तानां साधूनां दिव्यमर्हति ।
नेच्छन्ति साधवो यत्र तत्र शोध्यः स्वकैर्नरैः

तथा

महापातकयुक्तेषु नास्तिकेषु विशेषतः ।
न देयं तेषु दिव्यं तु पापाभ्यासरते भृगुः ॥
येषु पापेषु दिव्यानि प्रतिषिद्धानि यत्नतः ।
तारयेत्सज्जनैस्तानि नाभिशस्तं त्यजेन्नरः ॥

इति वर्णादितो दिव्यव्यवस्था

---

## अथ दिव्यसाधारणविधिः

तत्र बृहस्पतिः

स्नेहात्क्रोधाल्लोभतो वा भेदमायान्ति साक्षिणः ।
विधिदत्तस्य दिव्यस्य न भेदो जायते क्वचित् ॥

अतो दिव्यं विधिवद्देयमित्यभिप्रायः । विधिश्च पितामहादिभिर्दर्शितः ।

तत्र पितामहः

त्रिरात्रोपोषितायैव एकरात्रोषिताय वा ।
नित्यं दिव्यानि देयानि शुचये चार्द्रवाससे ॥
दिव्येषु सर्वकार्याणि प्राड्विवाकः समाचरेत् ।
अध्वरेषु यथाऽध्वर्युः सोपवासो नृपाज्ञया ॥

अयं चोपवासविकल्पः शक्ताशक्तविषयतया गुरुलघुकार्यविषयतया वा व्यवस्थापनीयः ।
सर्वकार्यसाधारणानि धर्मावाहनादीनि असाधारणानि तत्र दिव्यनियतानि चेत्यर्थः ।

विष्णुकात्यायनौ

सचैलस्नातमाहूय सूर्योदय उपोषितम् ।
कारयेत्सर्वदिव्यानि नृपब्राह्मणसन्निधौ ॥

नारदः

अहोरात्रोषिते स्नाते आर्द्रवाससि मानवे ।
पूर्वाह्णे सर्वदिव्यानां प्रदानमनुकीर्तितम् ॥

**पितामहः**

प्रत्यक्षं दापयेद्दिव्यं राजा वाऽधिकृतोऽपि वा ।
ब्राह्मणानां श्रुतवतां प्रकृतीनां तथैव च ॥

अत्रापरो विशेषः कात्यायनेन दर्शितः

साधयेत्तत्पुनः साध्यं व्याघाते साधनस्य हि ।
दत्तान्यपि यथोक्तानि राजा दिव्यानि वर्जयेत् ।
मूर्खैर्लुब्धैश्च दुष्टैश्च पुनर्देयानि तानि वै ॥

दत्तानीत्यस्य मूर्खैरित्यादिभिरन्वयः । वर्जयेत् न प्रमाणीकुर्यात् ।

## इति दिव्यसाधारणविधिः

—०—

## अथ धटविधिः

तत्र तन्निर्माणम् । तत्र नारदः

खादिरीं कारयेत्तत्र निर्व्रणीं शुक्लवर्जिताम् ।
शांशपीं तदभावे तु शालां वा कोटरं विना ॥
अञ्जनास्तिन्दुकी सारं तिनिशो रक्तचन्दनम् ।
एवंविधानि कार्याणि धटार्थेषु प्रकल्पयेत् ॥
ऋज्वी धटतुला कार्या खादिरी तैन्दुकी तथा ॥ इति ।

अत्र एवंविधानीति वदन् पूर्वोक्तानामलाभे यज्ञियं वृक्षान्तरमपि भवतीति दर्शयति । दर्शितं च पितामहेन

छित्त्वा तु यज्ञियं वृक्षं यूपवन्मन्त्रपूर्वकम् ।
प्रणम्य लोकपालेभ्यस्तुला कार्या मनीषिभिः ।
मन्त्रः सौम्यो वानस्पत्यछेदने जप्य एव च ॥ इति ।

अत्र सौम्यवानस्पत्यमन्त्रयोर्विकल्पस्तुल्यकार्यत्वादिति केचिदुक्तम् । तुलाग्रहणं परिकरस्यापि प्रदर्शनार्थम् । तेन पादस्तम्भाद्यर्थमपि वृक्षच्छेदनं कार्यम् । अत एव सपरिकरायास्तुलायाः प्रमाणमुक्तं तेनैव

चतुर्हस्ता तुला कार्या पादौ कार्यौ तथाविधौ ।
अन्तरं तु तयोर्हस्तौ भवेदध्यर्धमेव च ॥ इति ।

पादौ तुलाधारक(?का)क्षाख्यकाष्ठधारणार्थौ स्तम्भौ तथाविधौ चतुर्हस्तप्रमाणाविस्तर्थः। एतच्च तयोः प्रमाणं निखननीयहस्तद्वयादुपरितनभागस्य वेदितव्यम्। अतो निखननीयभागेन सह षड्हस्तौ भवतः।

तथा स एव

हस्तद्वयं निखेयं तु प्रोक्तं मुण्डकयोर्द्वयोः।
षड्ढस्तं तु तयोः प्रोक्तं प्रमाणं परिमाणतः॥ इति।

मुण्डकयो स्तम्भयोः। अक्षस्य तु प्रमाणं पादयोरन्तरालाभिधानेनैवार्थसिद्धमिति न पृथगुक्तम्। तेन पादस्तम्भमस्तकदेशाद्बहिरपि निःसृतो यथा भवति तथा हस्तद्वयात्सार्धहस्तद्वयाद्वाऽभ्यधिकोऽक्षः कार्य इत्यवगन्तव्यम्। हस्तः पुनश्चतुर्विंशत्यङ्गुलः स्मृत्यन्तरे दर्शितः

तिर्यग्यवोदराण्यष्टावूर्ध्वा वा व्रीहयस्त्रयः।
प्रमाणमङ्गुलस्योक्तं वितस्तिर्द्वादशाङ्गुलः॥

हस्ते वितस्तिद्वितयमिति यावति तु स्थौल्ये कृते दार्ढ्यं भवति, तावत्स्थौल्यं तुलादीनां कार्यं विशेषास्मृते।

आचाराद्वा विशेषः स्थौल्येऽवगन्तव्यः। तुलायां त्वपरे विशेषाः पितामहेन दर्शिताः

चतुर्हस्ता तुला कार्या दृढा ऋज्वी तथैव च।
कटकानि च देयानि त्रिषु स्थानेषु यत्नतः॥

कटकान्ययोमयवलयानि। त्रिषु स्थानेषु उपान्तयोर्मध्ये च। कटकानीत्ययोमयानामन्येषामप्युपलक्षणार्थम्। तेनोपान्तयोरायसकीलकौ शिक्यपाशधारणार्थावाशान्तौ कटकद्वन्द्वसन्निभौ देयौ। मध्ये चायसपाशोऽक्षकाष्ठे तुलायोजनार्थो देयः।

तथा च नारदः

चतुरस्रा त्रिभिः स्थानैर्व(?घ)टकर्कटकादिभिः। इति।

व(?घ)टशब्दश्चात्र तुलामध्यसंबन्धिपाशलक्षकः। कर्कटकशब्दश्चोपान्त्यकीलकौ सादृश्यात् प्रतिपादयति। तेनायमर्थः—अयोमयैः पाशप्रभृतिभिस्त्रिभिः स्थितिहेतुभिस्तुलायां भवितव्यमिति। आदिशब्देनाक्षमध्ये एकेन कर्कटकेन भवितव्यमिति।

अन्यदपि किञ्चिद्घटाङ्गभूतं तोरणादिकं कार्यमित्याह पितामहः

तोरणे तु तथा कार्ये पार्श्वयोरुभयोरपि।
ते घटादुच्छ्रिते स्यातां नित्यं दशभिरङ्गुलैः॥
अवलम्बौ च कर्तव्यौ तोरणाभ्यामधोमुखौ।
मृण्मयौ सूत्रसम्बद्धौ घटमस्तकचुम्बिनौ॥

प्राङ्मुखो निश्चलः कार्यः शुचौ देशे घटस्तथा ।
इन्द्रद्वारे सभायां वा राजद्वारे चतुष्पथे ॥

**नारदः**

सभा राजकुलद्वारे सुरायतनचत्वरे ।

सभा प्रामाणिकजनाधिष्ठितो देशः । सुरायतनं देवालयादि । चत्वरं यक्षादिबलिदानस्थानम् ।

निखेयो निश्चलः पूज्यो गन्धमाल्यानुलेपनैः ।
दध्यक्षतहविर्गन्धैः कृताध्ययनमङ्गलैः ।
धर्मरक्षार्थमाहूतैर्लोकपालैरधिष्ठितः ॥

निखेयो घट इति शेषः ।

**पितामहः**

तत्रैव लोकपालांश्च सर्वदिक्षु निवेशयेत् ।
त्रिसन्ध्यं पूजयेन्नित्यं धूपमाल्यानुलेपनैः ॥
लोकपालांस्तथादित्यान् रुद्रांश्च वसवस्तथा ।
पूजाप्रभावयुक्ताश्च सान्निध्यं कल्पयन्ति ते ॥

पूजाप्रभावेति । पूजा हवनादिका, तथैवाचारात् । क्वचित्तु पूजाहवनेनेव पाठः । एवं च स्वगृह्योक्तविधिना अग्निं प्रतिष्ठाप्य यावत्पूजनेन्द्रादिदेवताकः प्राङ्गियाकेन होमः कार्य इत्युक्तं भवति ।

विशालामुच्छ्रितां शुभ्रां घटशालां तु कारयेत् ।
यत्रस्था नोपहन्येत श्वभिश्चाण्डालवायसैः ॥
कपाटबीजसंयुक्तां परिचारकरक्षिताम् ।
मृत्पानीयाग्निसंयुक्तामशून्यां कारयेन्नृपः ॥
घटं तु कारयेन्नित्यं पताकाध्वजशोभितम् ।
वादित्रतूर्यनिर्घोषैर्धूपमाल्यानुलेपनैः ॥

अत्र विशालामित्यादिना कपाटादिसहितशालानिर्माणादिकं अग्रे पुनरपि कार्यान्तरोपयोगितया घटाधारणपक्षेनोत्पत्तिप्रयुक्तमिति धारणानियमविषयमेवेति केचित् । बीजानि यवादीनि ।

---

## अथ धटारोहणविधिः

तत्र **नारदः**

शिक्यद्वयं समासज्य घटे कर्कटयोर्दृढम् ।
एकत्र शिक्ये पुरुषमन्यत्र तुलयेच्छिलाम् ॥
धारयेदुत्तरे पार्श्वे पुरुषं दक्षिणे शिलाम् ।

कर्कटकद्वये शिक्यद्वयपाशौ समासज्येत्यर्थः । उत्तरे पार्श्वे इत्येतद्दक्षिणोत्तरायततया निर्मितत्तुलाविषयम् । एवं चास्मादेव वचनात्पूर्वापरसंस्थानौ पादस्तम्भौ कृत्वा दक्षिणोत्तरायता तुला कर्तव्येत्यवगम्यते । शिलाग्रहणं मृदादेरुपलक्षणार्थम् । तथा च **पितामहः**

शिक्यद्वयं समासज्य पार्श्वयोरुभयोरपि ।
प्राग्ग्रान् कल्पयेद्दर्भान् शिक्ययोरुभयोरपि ॥
पश्चिमे तोलयेत्कर्तृनन्यास्मिन्मृत्तिकां शुभाम् ।
इष्टकाभस्मपाषाणकपालास्थिविवर्जिताम् ॥ इति ।

अत्रापि पश्चिम इति वचनादेव पादस्तम्भयोर्दक्षिणोत्तरसंस्थानत्वमवगम्यते । अत्र इष्टकापाषाणयोर्मृदा सह समुच्चयो निवार्यते, न तु विकल्पः, तयोरपि विहितत्वात् ।

अत एव **नारदः**

पिटकं पूरयेत्तस्मिन्निष्टकाग्रावपांसुभिः । इति ।

माषराशिभिर्वा पिटकं पूरयेत् । 'माषराशिमथापि वे'ति **स्मरणात्** ।

एवं च शिलामृत्तिकेष्टकाग्रावपांसुमाषाणां प्रतिमानत्वे विकल्पो वेदितव्यः ।

अत एव **नारदेनोक्तम्**

मृत्पिण्डमभिशस्तं च तुलया तोलयेत्समम् ॥ इति ।

वणिगादीनामन्यतम इति शेषः ।

अत एव **विष्णुः**

तां च वणिक्सुवर्णकारकांस्यकाराणामन्यतमो बिभृयात् । इति ।

तां तुलामित्यर्थः । समतानिरीक्षणाय राज्ञा वणिगादयो नियोक्तव्याः । तथा च **पितामहः**

परीक्षका नियोक्तव्यास्तुलामाननिशारदाः ।
वणिजो हेमकाराश्च कांस्यकारास्तथैव च ॥ इति ।

ते च नियुक्ताः सन्तः समन्तात् परीक्षेरन् । अत एव **नारदः**

सुवर्णकारा वणिजः कुशलाः कांस्यकारकाः ।
तां तुलामन्ववेक्षेरंस्तुलाधारणकोविदाः ॥ इति ।

परीक्षकान् प्रत्याह पितामहः

कार्यः परीक्षकैर्नित्यमवलम्बसमो घटः ।
उदकं च प्रदातव्यं घटस्योपरि पण्डितैः ॥
यस्मिन्न प्लवते तोयं स विज्ञेयः समो घटः । इति ।

अवलम्बौ तोरणावलम्बितौ मृण्मयौ पिण्डौ तौ यत्प्रान्तनिखातकीलकद्वयामभागाभ्यां समौ सोऽवलम्बसमो घटः । अत एव नारदः

प्रथमारोहणे ग्राह्यं प्रमाणं निपुणैः सह ।
तुलाशिरोभ्यां तुल्यं तु तोरणं न्यस्तलक्षणम् ॥

समतावधारणानन्तरं विष्णुः

प्रतिमानपुरुषौ समीकृतौ सुचिह्नितौ कृत्वा पुरुषमवतारयेत् ॥ इति ।

पितामहः

तुलयित्वा नरं पूर्वं कक्षं कृत्वा घटस्य च ।
कक्षस्थाने यदा तुल्यमवतार्य ततो घटात् ॥ इति ।

कक्षं चुम्बकम् ।

याज्ञवल्क्यः

तुलाधारणविद्वद्भिरभियुक्तस्तुलाश्रितः ।
प्रतिमानसमीभूतो रेखां कृत्वाऽवतारितः ॥

तुलेति । तुलाया धारणं तोलनं ये विदन्ति हेमकारादयः । तैः प्रतिमानेन शिलादिना समीभूतः साम्येन निश्चितः । तुलामाश्रितोऽधिरूढोऽभियुक्तोऽभियोक्ता वा दिव्यकारी । रेखां कृत्वेति । समतादशायां येन सन्निवेशेन शिक्यतले अवस्थितस्तस्मिन्पाण्डुलेखां कृत्वेत्यर्थः । अवतारणानन्तरकृत्यमाह पितामहः

तत्र आवाहयेद्देवान् विधिनानेन धर्मवित् । इति ।

अनेन वक्ष्यमाणेनेत्यर्थः । तमेव विधिं दर्शयति

प्राङ्मुखः प्राञ्जलिर्भूत्वा प्राड्विवाकस्ततो वदेत् ।
एह्येहि भगवन् धर्म अस्मिन् दिव्ये समाविश ॥
सहितो लोकपालैश्च वस्वादित्यमरुद्गणैः ।
आवाह्य तु घटे धर्मं पश्चादङ्गानि विन्यसेत् ॥ इति ।

अङ्गविन्यासमेवाह

इन्द्रं पूर्वे तु संस्थाप्य प्रेतेशं दक्षिणे तथा ।
वरुणं पश्चिमे भागे कुबेरं चोत्तरं तथा ॥
अग्न्यादिलोकपालांश्च कोणभागेषु विन्यसेत् ।
इन्द्रः पीतो यमः श्यामो वरुणः स्फटिकप्रभः ॥
कुबेरस्तु सुवर्णाभो ह्यग्निश्चापि सुवर्णभः ।
तथैव निर्ऋतिः श्यामो वायुर्धूमः प्रशस्यते ॥
ईशानस्तु भवेद्रक्तं एवं ध्यायेत्क्रमादिमान् ।
इन्द्रस्य दक्षिणे पार्श्वे वसूनाराधयेद्बुधः ॥
धरो ध्रुवस्तथा सोम आपश्चैवानिलोऽनलः ।
प्रत्यूषश्च प्रभासश्च वसवोऽष्टौ प्रकीर्तिताः ॥
देवेशेशानयोर्मध्यमादित्यानां तथायनम् ।
धाताऽर्यमा च मित्रश्च वरुणश्च भगस्तथा ॥
इन्द्रो विवस्वान् पूषा च पर्जन्यो दशमस्तथा ।
ततस्त्वष्टा ततो विष्णुरजघन्यो जघन्यजः ।
इत्येते द्वादशादित्या नामभिः परिकीर्तिताः ॥
अग्नेः पश्चिमभागे तु रुद्राणामयनं विदुः ।
वीरभद्रश्च शम्भुश्च गिरीशश्च महायशाः ॥
अजैकपादहिर्बुध्न्यः पिनाकी चापराजितः ।
भुवनाधीश्वरश्चैव कपाली च विशांपतिः ॥
स्थाणुर्भगश्च भगवान् रुद्रा एकादश स्मृताः ।
प्रेतेशरक्षोमध्ये च मातृस्थानं प्रकल्पयेत् ॥
ब्राह्मी माहेश्वरी चैव कौमारी वैष्णवी तथा ।
वाराही चैव माहेन्द्री चामुण्डा गणसंयुता ॥
निर्ऋतेरुत्तरे भागे गणेशायतनं विदुः ।
वरुणस्योत्तरे भागे मरुतां स्थानमुच्यते ॥
गगनं स्पर्शनो वायुरनिलो मारुतस्तथा ।
प्राणः प्राणेशजीवौ च मरुतोऽष्टौ प्रकीर्तिताः ॥
ध्वजस्योत्तरभागे तु दुर्गामावाहयेद्बुधः ।
एतासां देवतानां च स्वनाम्ना पूजनं विदुः ॥
भूपावसानं धर्माय दत्त्वा चर्वादिकं क्रमात् ।
अर्घ्यादि पश्चादङ्गानां भूपान्तमुपकल्पयेत् ॥

अङ्गानां इन्द्रादिदुर्गान्तानां च गन्धादिपरिचर्यां पूर्ववत्कुर्यात् ।

तथा च **स** एव

गन्धादिकां निवेद्यान्तां परिचर्यां प्रकल्पयेत् ॥ इति ।

तत्र धर्माराधनसाधने सविशेषमाह **नारदः**

रक्तैर्गन्धैश्च माल्यैश्च दध्यपूपाक्षतादिभिः ।
अर्चयेत्तु घटं पूर्वं ततः शिष्टांस्तु पूजयेत् ॥ इति ।

घटं घटाधिष्ठितं धर्मम् । शिष्टानिन्द्रादीन् । इन्द्रादीनां तु विशेषानभिधानाद्यथालाभं रक्तैरन्यैर्वा पूजनमिति पूजाक्रमः । इदं च धर्मादिपूजनं प्राड्विवाकेनैव कर्तव्यम् । यथोक्तम्

प्राड्विवाकस्ततो विप्रो वेदवेदाङ्गपारगः ।
श्रुतवृत्तोपसंपन्नः शान्तचित्तो विमत्सरः ॥
सत्यसंधः शुचिर्दक्षः सर्वप्राणिहिते रतः ।
उपोषितः शुद्धवासाः कृतदन्तानुधावनः ।
सर्वासां देवतानां च पूजां कुर्याद्यथाविधि ॥ इति ।

तथा ऋत्विग्भिश्चतुर्भिश्चतसृषु दिक्षु लौकिकेऽग्नौ होमः कार्यः ।

यथा

चतुर्दिक्षु तथा होमः कर्तव्यो वेदपारगैः ।
आज्येन हविषा चैव समिद्भिर्होमसाधनैः ॥
सावित्र्या प्रणवेनाथ स्वाहांतेनैव होमयेत् । इति ।

एकैकस्यां दिश्येकैकशः समिदाज्यचरूनष्टोत्तरशतं प्रणवादिकया गायत्र्या स्वाहाकारानन्तरं पुनः प्रणवयुक्तया जुहुयादित्यर्थः । न च वाच्यं वचने संख्याया अनुपादानात्कथमष्टोत्तरं शतं शतमिति ।

अनुक्तसंख्या यत्र स्याच्छतमष्टोत्तरं स्मृतम् ।

इति **स्मृत्यन्तरो**क्तसंख्याया अनुसवत्वात् । होमानन्तरकर्तव्यमाह **पितामहः**

यं चार्थमभियुक्तः स्याल्लिखित्वा तं तु पत्रके ।
मन्त्रेणानेन स(?)हितं तत्कार्यं तु शिरोगतम् ॥

प्रतिज्ञापत्रलेखनप्रकारश्चायम्—ममामुकजातीयस्यामुकपापाभिशस्तस्य प्रतिज्ञैषा—इदं मया न कृतमिति । यत्तु—यदि मयेदं पापं कृतं तदाऽस्यां घटपरीक्षायां ममाधोगतिलक्षणो भङ्गः, नो चेदूर्ध्वगतिलक्षणो जय इति प्रतिज्ञेति-तन्न युक्तम् । यत्तस्य लोके प्रतिपाद्यं तन्निर्देशो हि प्रतिज्ञा । न चाधोगतिलक्षणभङ्गोद्देशेन प्रवृत्तः नापि तथाभूतो भङ्गस्तस्य प्रतिपाद्यः । अतः प्रतिज्ञापत्रे भङ्गलेखनं न युक्तम् । मन्त्रमपि **स** एव दर्शयति स्म

आदित्यचन्द्रावनिलोऽनलश्च द्यौर्भूमिरापो हृदयं यमश्च ।
अहश्च रात्रिश्च उभे च सन्ध्ये धर्मश्च जानाति नरस्य वृत्तम् ॥ इति ।

मन्त्रश्च तस्मिन्नेव पत्रे प्रतिज्ञालेखनानन्तरं पङ्क्तिद्वयं समाक्षरेण तद्दिनपतितकजलमश्या विच्छेदादिशून्यं लेखनीयः । एतच्च धर्मावाहनादि शिरसि पत्रारोपणान्तं कर्तव्यजातं सर्वदिव्यसाधारणमित्याह स एव

इमं मन्त्रविधिं कृत्स्नं सर्वदिव्येषु योजयेत् ।
आवाहनं च देवानां तथैव परिकीर्तितम् ॥ इति ।

तथा सर्वदिव्येषु प्रयोगावसाने ऋत्विगादिभ्यस्तुष्टिकरीं दक्षिणामपि दद्यादित्याह स एव

ऋत्विक्पुरोहिताचार्यान् दक्षिणाभिश्च तोषयेत् । इति ।

शोध्यशिरसि पत्रारोपणानन्तरं प्राड्विवाको घटमभिमन्त्रयेत् । तथा च **पितामहः**

घटमामन्त्रयेच्चैव विधिनानेन शास्त्रवित् । इति ।

अभिमन्त्रणमन्त्राश्च तेनैव दर्शिताः

त्वं घट ब्रह्मणा सृष्टः परीक्षार्थं दुरात्मनाम् ।
धकाराद्धर्ममूर्तिस्त्वं टकारात्कुटिलं नरम् ॥
धृतो भावयसे यस्माद् धटस्तेनाभिधीयसे । इति ।

एवं प्राड्विवाकेन घटाभिमन्त्रणे कृते शोध्योऽपि 'त्वं तुले' इत्यादिना वक्ष्यमाणमन्त्रेण घटमभिमन्त्रयेत् । अत एव 'रेखां कृत्वाऽवतारितः' इत्युक्त्वा **याज्ञवल्क्यः**

त्वं तुले सत्यधामासि पुरा देवैर्विनिर्मिता ।
तत्सत्यं वद कल्याणि संशयान्मा विमोचय ॥
यद्यस्मि पापकृन्मातस्ततो मां त्वमधो नय ।
शुद्धश्चेद्गमयोर्ध्वं मां तुलामित्यभिमन्त्रयेत् ॥

एवं शोध्येनाभिमन्त्रिते घटे समनन्तरं तं शोध्यं प्राड्विवाकः शिरोगतपत्रं यथास्थानं यथासन्निवेशं घटमारोपयेत् । तथा च **नारदः**

समयैः परिगृह्याथ पुनरारोपयेन्नरम् ।
निवाते वृष्टिरहिते शिरस्यारोप्य पत्रकम् ॥ इति ।
समयैः परिगृह्येति । तुलाधारकं शपथैर्नियम्येत्यर्थः ।

शपथानाह **विष्णुः**

ब्रह्मघ्नो ये स्मृता लोका ये लोकाः कूटसाक्षिणः ।
तुलाधारस्य ते लोकास्तुलां धारयतो मृषा ॥ इति ।

पुनरारोपणान्तर नारदः

> तस्मिन्नेव कृते कक्षे कक्षं कृत्वा द्विजो वदेत् ।
> धर्मपर्यायशब्देन घट इत्यभिधीयसे ॥
> त्वं वेत्सि सर्वभूतानां पापानि सुकृतानि च ।
> त्वमेव देव जानीषे न विदुर्यानि मानवाः ॥
> व्यवहाराभिशस्तोऽयं मानवस्तोल्यते त्वया ।
> तदेनं संशयारूढं धर्मतस्त्रातुमर्हसि ॥
> देवासुरमनुष्याणां सत्ये त्वमतिरिच्यसे ।
> सत्यसन्धोऽसि भगवन् शुभाशुभविभावनैः ॥
> आदित्यचन्द्रावनिलोऽनलश्च द्यौर्भूमिरापो हृदयं यमश्च ।
> अहश्च रात्रिश्च उभे च सन्ध्ये धर्मश्च जानाति नरस्य वृत्तम् ॥ इति ।

तस्मिन्नेव कृते कक्ष इति । कक्ष तुलनामर्यादा । समीकरणसमये या मर्यादा कृता तामेव शुद्ध्यशुद्धिपरीक्षार्थमारोहणसमयेऽपि कृत्वा धर्मपर्यायशब्देनेत्यादि वृत्तमित्यन्त प्राड्विपाक' पठेदित्यर्थ. । आरोपितश्च पुरुषोऽपि नाडीपञ्चकपर्यन्तं तथैव स्थापनीयः । तत्कालपरीक्षा च ज्योतिर्विदा कार्या ।

तथा च पितामहः

> ज्योतिर्विद्ब्राह्मणश्रेष्ठः कुर्यात्कालपरीक्षणम् ।
> विनाड्यः पञ्च विज्ञेयाः परीक्षाकालकोविदैः ॥ इति ।

दशगुरुवर्णोच्चारणकालः प्राण षट्प्राणा विनाडी । यथोक्तम्

> दशगुरुवर्णः प्राणः, षट्प्राणः स्याद्विनाडिका । तासां
> षष्ट्या घटी, घटीनां षष्ट्याऽहोरात्रमीरितं गणकैः ।
> त्रिंशद्भिर्दिवसैर्मासः इति ।

तस्मिंश्च काले शुचयः पुरुषा. शुद्ध्यशुद्धिपरीक्षार्थं राज्ञा नियोक्तव्याः । ते च परीक्षां कुर्युः । तथा च पितामहः

> साक्षिणो ब्राह्मणश्रेष्ठा यथादृष्टार्थवादिनः ।
> ज्ञानिनः शुचयोऽलुब्धा नियोक्तव्या नृपेण तु ।
> तेषां वचनतो गम्यः शुद्ध्यशुद्धिविनिर्णयः ॥ इति ।

शुद्ध्यशुद्धिनिश्चयलक्षणान्याह नारदः

> तुलितो यदि वर्धेत स शुद्धः स्यान्न संशयः ।
> समो वा हीयमानो वा न विशुद्धो भवेन्नरः ॥ इति ।

वर्धेत ऊर्ध्वं गच्छेत् । यत्तु पितामहवचनम्

हीयमानो न शुद्धः स्यादेकेषां तु समो शुचिः ।
अल्पपापः समो ज्ञेयो बहुपापस्तु हीयते ॥

इति तत्रैकेषामतिपूजनार्थं नतु स्वमते समस्य शुचित्वद्योतनार्थम्, अल्पपापस्याप्यशुचित्वात्। अत्र यद्यप्यभियुक्तार्थस्याल्पत्वं बहुत्वं च न दिव्येनावधारयितुं शक्यते तथापि सकृदज्ञानकृतत्वेनाल्पत्वम्, ज्ञानतोऽभ्यासेन बहुत्वम्। तेन हीयमानसमयोः पराजये न कोऽपि विशेषो, दण्डप्रायश्चित्तयोः परं विशेषः, तयोर्दोषानुसारित्वात्। अयं च समस्य पराजयनिश्चयो न प्रथमतोलनपर्याये, तत्र सन्देहतादवस्थ्यात्। किन्तु पुनस्तोल्यमानस्य समतैव यदि भवति तदा बोद्धव्यः।

घटेऽभियुक्तस्तुलितो हीनश्चेद्धानिमाप्नुयात्।
तत्समस्तु पुनस्तोल्यो वर्धितो विजयी भवेत् ॥

इति बृहस्पतिवचनात्।

अत्र साम्येऽपि पुनस्तोलनं तस्मिन्नेव प्रयोगे न प्रयोगान्तरे, तत्र प्रमाणाभावादिति हलायुधः—तन्न;

वैगुण्याद्धि साम्यं तस्मिंश्च प्रयोगे वैगुण्यानपायात्।

इति चण्डेश्वरः। शिक्यच्छेदादावपि पुनस्तोल्यमानस्य शुद्धिरशुद्धिर्वाऽवधारणीया। अत एव कात्यायनः

शिक्यच्छेदे तुलाभङ्गे तथा चापगुणस्य वा।
शुद्धेस्तु संशये चैव परीक्षेत पुनर्नरम् ॥ इति।

यथोक्तं व्यासेन

कक्षच्छेदे तुलाभङ्गे घटकर्क(?)टयोस्तथा।
रज्जुच्छेदेऽक्षभङ्गे च तथैवाशुद्धिमादिशेत् ॥ इति।

कक्षं शिक्यतलं दृश्यमानकारणकभङ्गच्छेदादिविषयम्। कात्यायनवचनं तु दृश्यमानकारणकभङ्गादिविषयमित्यविरोधः।

पितामहः

शंसंति साक्षिणः सर्वे शुद्ध्यशुद्धी नृपे तदा।
सद्भिः परिवृतो राजा शुद्धमूर्ढं प्रपूजयेत् ॥
ऋत्विक्पुरोहिताचार्यान् दक्षिणाभिश्च तोषयेत्।
एवं कारयिता राजा भुक्त्वा भोगान्मनोरमान् ॥
महतीं कीर्तिमाप्नोति ब्रह्मभूयाय कल्पते ॥ इति।

इति घटविधिः

———

## अथाग्निविधिः

तत्र **पितामहः**

अग्नेर्विधिं प्रवक्ष्यामि यथावच्छास्त्रचोदितम् ।
कारयेन्मण्डलान्यष्टौ पुरस्तान्नवमं तथा ॥
आग्नेयं मण्डलं त्वाद्यं द्वितीयं वारुणं स्मृतम् ।
तृतीयं वायुदैवत्यं चतुर्थं यमदैवतम् ॥
पञ्चमं त्विन्द्रदैवत्यं षष्ठं कौबेरमुच्यते ।
सप्तमं सोमदैवत्यमष्टमं सर्वदैवतम् ॥
पुरस्तान्नवमं यच्च तन्महत्पार्थिवं विदुः ॥

आग्नेयमित्यादि । अग्निरत्र पूज्य इत्याग्नेयम्, हविष्येन सूक्तत्वेन वा मण्डलस्याग्नेयत्वा-सम्भवात् । एवं वारुणत्वादिकमपि मण्डलानां तत्तत्पूजाधिकरणतया द्रष्टव्यम् । तेन 'प्रैतु होतुश्चमस' इत्यादिप्रैष्यमन्त्रस्थया होतुश्चमस इत्यादिसमाख्यहोत्रादीनां तत्र तत्र चमसे भक्षणप्राप्तिवदाग्नेयादिसमाख्ययेयाग्न्यादीनां तत्र तत्र मण्डले पूजनं कार्यत्वमित्सादेव वचनात्सिद्धम् । महत्पूर्वमण्डलेभ्योऽधिकपरिमाणम् । पार्थिवं पृथिवीदेवताकम् । नवमस्य पृथगुपादानं तत्रायःपिण्डपरित्यागसूचनार्थम् । तानि च मण्डलानि गोमयेन कार्याणि ।

गोमयेन कृतानि स्फुरद्भिः पर्युक्षितानि च ।

इति **तेनैव** स्मृतत्वात् । मण्डलतदन्तरालप्रमाणमाह **स एव**

द्वात्रिंशदङ्गुलानि स्युर्मण्डलान्मण्डलान्तरम् ।
कर्तुः पदसमं कार्यं मण्डलं तु प्रमाणतः ॥ इति ।

अयमर्थः—प्रथमान्मण्डलादपरं मण्डलमन्तरं चेत्येतद्द्वयं द्वात्रिंशदङ्गुलपरिमितं कार्यम् । तत्रापि दिव्यकर्तृपदपरिमितं मण्डलं कार्यम् । अवशिष्टाङ्गुलपरिमितमन्तरं एवं तृतीयादिमण्डलेऽपि बोद्धव्यम् ।

**नारदोऽपि**

अतःपरं प्रवक्ष्यामि विधिमग्नेस्तथोत्तमम् ।
द्वात्रिंशदङ्गुलान्याहुर्मण्डलान्मण्डलान्तरम् ॥
अष्टभिर्मण्डलैरेवमङ्गुलानां शतद्वयम् ।
चत्वारिंशत्समाधिकं भूमेस्तु परिकल्पना ॥
मण्डलस्य प्रमाणं तु कुर्यात् तत्पदसंमितम् ॥ इति ।

अष्टभिरित्यादि । सान्तरालं नवमं मण्डलं विहाय अष्टभिर्मण्डलैः सप्तभिरन्तरैश्च भूमिश्चत्वारिंशदधिकशतद्वयाङ्गुलपरिमिता संपद्यते । 'चतुर्विंशत्समाख्याता भूमेस्तु परिकल्पना' इति

पाठे तु स्थितिमण्डलं सान्तरालं नवमण्डलं च विहाय सप्तभिर्मण्डलैः सप्तभिरन्तरालैश्च भूमेरङ्गुलानां शतद्वयम् । चतुर्विंशत्यधिकं परिमाणं संपद्यते ।

**याज्ञवल्क्यः**

षोडशाङ्गुलकं ज्ञेयं मण्डलं तावदन्तरम् । इति ।

षोडश अङ्गुलानि यस्य तत्षोडशाङ्गुलं मण्डलं षोडशाङ्गुलप्रमाणमवगन्तव्यमित्यर्थः । तावदन्तरमिति । मण्डलयोरन्तरं मध्यं तावदेव षोडशाङ्गुलकमेव । अत्रायं **पितामहादि**वचनस्वरसः—द्वितीयादिसप्तगन्तव्यमण्डलेषु शोध्यपदसंमितत्वं षोडशाङ्गुलप्रमाणत्वं वेति विकल्पः । आद्यमण्डले तु षोडशाङ्गुलप्रमाणत्वमेव । मण्डलान्तरालेषु तु मण्डलानां षोडशाङ्गुलत्वपक्षे षोडशाङ्गुलप्रमाणत्वमेव । शोध्यपदसंमितत्वपक्षे त्वनियम इति ।

**विष्णुः**

षोडशाङ्गुलं तावदन्तरं मण्डलसप्तकं कुर्यात् । इति ।

एतच्च सप्तमण्डलकरणमाद्यन्तमण्डलव्यतिरिक्तमध्यगतगन्तव्यमण्डलाभिप्रायेण । ततः प्राड्विवाको मण्डलानि संप्रोक्ष्य मण्डलाधिदेवतानामावाहनपूर्वकं पूजनं च विधाय तेषु मण्डलेषु प्रतिमण्डलं प्रागग्रान् कुशान् क्षिपेत् । तथा च **पितामहः**

मण्डले मण्डले देयाः कुशाः शास्त्रप्रणोदिताः । इति ।

ततः प्रथममण्डलाद्दक्षिणतोऽनतिदूरे लौकिकमग्निं प्रतिष्ठाप्य शान्तिहोमं कुर्यात् ।

शान्त्यर्थं जुहुयादग्नौ घृतमष्टोत्तरं शतम् ।

इति **स्मरणात्** । होममन्त्रश्च 'अग्नये पावकाय स्वाहा' इत्यनुसन्धेयः, शिष्टसमाचारात् । तत्रैव चाग्नौ लोहपिण्डं प्रतापयेत् । तथा च **पितामहः**

अश्रिहीनं समं कृत्वा अष्टाङ्गुलमयोमयम् ।
पिण्डं तु तापयेदग्नौ पञ्चाशत्पलिकं समम् ॥ इति ।

अश्रिहीनं कोणरहितम् । सममनिम्नोन्नतम् । द्वितीयं समग्रहणं तापयेदित्यनेनान्वीयते । तेनावैषम्येणाग्नावयःपिण्डं तापयेदित्यर्थः । पलस्वरूपं तु

पञ्चकृष्णलको माषस्ते सुवर्णस्तु षोडश ।
पलं सुवर्णाश्चत्वारः पलानि धरणं दश ॥

इति **मनू**क्तमवगन्तव्यम् ।

यत्तु

अथवा सप्ताश्वत्थपर्णान्तरितं षोडशपलमग्निवर्णं लोहपिण्डं अञ्जलिनाऽऽदाय सप्तपदमर्यादं गच्छेत् ।

इति शङ्खलिखिताभ्यामयःपिण्डपरिमाणान्तरमुक्तं, तदसमर्थविषयम्। इदं चायःपिण्डतापनं लोहकारेणैव कार्यम्। तथा च **नारदः**

जात्यैव लोहकारो यः कुशलश्चाग्निकर्मणि।
दृष्टप्रयोगश्चान्यत्र तेनायोऽग्नौ प्रतापयेत्॥ इति।

तापनं च लोहशुद्ध्यर्थं सुतप्तं लोहपिण्डमुदके निक्षिप्य पुनः संताप्य पुनरुदके निक्षिप्य पुनः कार्यम्। तथा च **स एव**

अग्निवर्णमयःपिण्डं सस्फुलिङ्गं सुरक्षितम्।
पञ्चाशत्पलिकं भूयः कारयित्वा शुचिर्द्विजः॥

तृतीयतापे वर्तमाने धर्मावाहनादिशोध्यशिरःपत्रारोपणान्तं सर्वदिव्यसाधारणविधिं कुर्यात्। अत एव **पितामहः**

इमं पत्रविधिं कृत्स्नं सर्वदिव्येषु योजयेत्।
आवाहनं च दिव्यानां तथैव परिकल्पयेत्॥ इति।

तत्रायःपिण्डे धर्माराधनसाधनेषु विशेषमाह **स एव**

तत्र पूजां हुताशस्य कारयेन्मनुजाधिपः।
रक्तचन्दनधूपाभ्यां रक्तपुष्पैस्तथैव च॥ इति।

तत्र संतप्तायःपिण्डे हुताशनस्य आवाहितधर्मस्येति यावत्। शिरसि पत्रारोपणानन्तरं शोध्यकर्तव्यमाह **हारीतः**

प्राङ्मुखस्तु ततस्तिष्ठेत् प्रसारिततलाङ्गुलिः।
आर्द्रवासाः शुचिश्चैव शिरस्यारोप्य पत्रकम्॥ इति।

अवस्थानं चाद्यमण्डले।

पश्चिमे मण्डले तिष्ठेत्प्राङ्मुखः प्राञ्जलिः शुचिः।

इति **पितामह**स्मरणात्।

प्राड्विवाकस्य समनन्तरकर्तव्यमाह **विष्णुः**

करौ विमृदितव्रीहेी तस्यादावेव लक्षयेत्। इति।

विमृदिता व्रीहयो याभ्यां तौ विमृदितव्रीही लक्षयेदित्यस्यार्थो **नारदे**नोपवर्णितः

लक्षणे तस्य चिह्नानि हस्तयोरुभयोरपि।
प्राक्तनानि च गूढानि सव्रणान्यव्रणानि च॥

अयःपिण्डधारणात्प्राक्तनान्येतानीत्यवगमार्थं तस्य शोध्यस्य हस्तद्वयस्थितव्रणादिस्थानेषु अलक्तकादिरसेन हंसपदानि कुर्यादित्यर्थः। यतः **स एवाह**

हस्तक्षतेषु सर्वेषु कुर्याद्धंसपदानि तु ।
तान्येव पुनरालक्षेद्धस्तौ बिन्दुविचित्रितौ ॥ इति ।

अङ्कनानन्तरकर्तव्यमाह याज्ञवल्क्यः

करौ विमृदितव्रीहेर्लक्षयित्वा ततो न्यसेत् ।
सप्ताश्वत्थस्य पत्राणि तावत्सूत्रेण वेष्टयेत् ॥ इति ।

तावदिति । सूत्रेण तावद्वेष्टयेत् यावत्सप्ताश्वत्थपत्राणि सप्तकृत्वो वेष्टयेदित्यर्थः ।

सप्ताश्वत्थस्य पत्राणि त्वभियुक्तस्य हस्तयोः ।
कृत्वा(ऽधि)वेष्ट्यानि यत्नेन सप्तभिः सूत्रतन्तुभिः ॥

**पितामहः**

सप्त पिप्पलपत्राणि शमीपत्राण्यथाक्षतान् ।
हस्तयोर्निक्षिपेत्तस्य तन्तून् सूत्रस्य सप्त च ॥
पिप्पलाज्जायते ह्यग्निः पिप्पलो वृक्षराट् स्मृतः ।
अतस्तस्य पलाशानि नियोज्यानि मनीषिभिः ॥

यत्तु

अयस्तप्तं तु पाणिभ्यामर्कपत्रैस्तु सप्तभिः ।
अन्तर्हितं हरन् शुद्धस्त्वदग्धः सप्तमे पदे ॥

इति वचनं तदश्वत्थपत्राभावविषयम् । पिप्पलपत्राणां **पितामह**स्तुतिविषयम्, प्राधान्यावगमात् ।

**पारिजात**कारस्तु अश्वत्थार्कपत्राणां तुल्यवदेव विकल्पं मन्यते । तानि च सूत्राणि शुक्लान्येव ।

तथा च **नारदः**

वेष्टयीत सितैर्हस्तौ सप्तभिः सूत्रतन्तुभिः । इति ।

तथा सप्त शमीपत्राणि सप्तैव दूर्वापत्राणि चाक्षतांश्च दध्यक्तानश्वत्थपत्राणामुपरि विन्यसेत् ।

सप्त पिप्पलपत्राणि शमीपत्राण्यनुक्रमात् ।
दूर्वायाः सप्त पत्राणि दध्यक्तांश्चाक्षतान्न्यसेत् ॥

इति **स्मरणात्** । तथा कुसुमानि च विन्यसेत्

सप्त पिप्पलपत्राणि अक्षतान् सुमनो दधि ।
हस्तयोर्निक्षिपेत्तत्र सूत्रेणावेष्टनं तथा ॥

इति **पितामह**स्मरणात् । सुमनसः पुष्पाणि पत्राणि च हस्तद्वयसहितानि वेष्टनीयानि ।

अत एव विष्णुः

ततः प्राङ्मुखस्य प्रसारितभुजद्वयस्य सप्ताश्वत्थपत्राणि करयोर्दद्यात्, तानि च करद्वयसहितानि सूत्रेण वेष्टयेत्। इति।

तृतीयतापे वर्तमान एव प्राड्विवाकेनाग्न्यभिमन्त्रणं कार्यम्।

तथा च नारदः

तृतीयतापे तप्यन्तं ब्रूयात्सत्यपुरस्कृतः।
शृण्विमं मानवं धर्मं लोकपालैरधिष्ठितम्॥
त्वमग्ने सर्वदेवानां पवित्रं परमं मुखम्।
त्वमेव सर्वभूतानां हृदिस्थो वेत्सि चेष्टितम्॥
सत्यानृते च जिज्ञासा त्वत्तः समुपलभ्यते।
वेदादिभिरिदं प्रोक्तं नान्यथा कर्तुमर्हसि॥
अनेनासाविदं प्रोक्तं मिथ्या चेदमसौ वदेत्।
सर्वथा च यथा मिथ्या तथाग्निं धारयाम्यहम्॥
स एष त्वां धारयति सत्येनानेन मानवः।
सत्यवाक्यस्य चास्य त्वं शीतो भव हुताशन।
मृषावाक्यस्य पापस्य दह हस्तौ च मायिनः॥

पितामहः

तापयित्वा ततः पश्चादग्निमावाहयेच्छुचिः।
त्वमग्ने वेदाश्चत्वारस्त्वं च यज्ञेषु हूयसे॥
त्वं मुखं सर्वदेवानां त्वं मुखं ब्रह्मवादिनाम्।
उदरस्थोऽसि भूतानां ततो वेत्सि शुभाशुभम्।
पापं पुनासि वै यस्मात्तस्मात्पावक उच्यते।
पापेषु दर्शयात्मानमर्चिष्मान् भव पावक॥
अथवा शुद्धभावेषु शीतो भव महानल॥ इति।

विष्णुः

अभिमन्त्र्यास्य करयोर्न्यसेत्तं लोहपिण्डकम्।
त्वमग्ने सर्वभूतानामन्तश्चरसि साक्षिवत्॥
त्वमेवाग्ने विजानीषे न विदुर्यानि मानवाः।
व्यवहाराभिशस्तोऽयं मानुषः शुद्धिमिच्छति।
तदेनं संशयादस्माद्धर्मतस्त्रातुमर्हसि॥

अस्य मन्त्रस्य **पितामह**पठितमन्त्रसमुचितस्याग्न्यभिमन्त्रणसाधनत्वम्, न पुनर्विकल्पितस्य प्रार्थनीयार्थस्य शोध्यव्यक्तिविशेषनिष्ठतया प्रकाशकत्वेन भिन्नकार्यत्वात्। यस्तु 'तृतीयतापे सतप्त'मित्यादिना नारदोक्ताग्न्यभिमन्त्रणमन्त्रः स **विष्णुपितामहो**क्ताग्न्यभिमन्त्रणमन्त्रेण विकल्प्यते, एकार्थत्वात्। अनन्तरकर्तव्यमाह **पितामहः**

> ततस्तं समुपादाय राजा धर्मपरायणः।
> संदंशेन नियुक्तो वा हस्तयोस्तस्य निक्षिपेत्॥ इति।

समयःपिण्डं संदंशेन समुपादायेत्यन्वयः। नियुक्तः प्राड्विवाकः। अयःपिण्डनिक्षेपात् प्राक्शोध्यस्य कर्तव्यमाह **याज्ञवल्क्यः**

> त्वमग्ने सर्वभूतानामन्तश्चरसि पावक।
> साक्षिवत्पुण्यपापेभ्यो ब्रूहि सत्यं कवे मम॥ इति।

कवे क्रान्तदर्शिन्। तदनन्तरं प्राड्विवाकः शोध्यहस्तयोरयःपिण्डं निक्षिपेत्। तथा च स एव

> तस्येत्युक्तवतो लोहं पञ्चाशत्पलिकं समम्।
> अग्निवर्णं न्यसेत्पिण्डं हस्तयोरुभयोरपि॥ इति।

इत्युक्तवतः पूर्वोक्तमन्त्रेणाग्न्यभिमन्त्रणं कृतवतः। तस्य शोध्यस्य। शोध्यश्च लोहपिण्डमादाय शनैर्मण्डलेषु व्रजेत्।

तथा च **विष्णुः**

**समादाय नातिद्रुतं न च विलम्बितं मण्डलेषु पदन्यासं कुर्वन् व्रजेत्।** इति। मण्डलेषु द्वितीयादिषु सप्तसु।

अत एव **याज्ञवल्क्यः**

> स तमादाय सप्तैव मण्डलानि शनैर्व्रजेत्॥ इति।

**नारदोऽपि**

> हस्ताभ्यां तं समादाय प्राड्विवाकसमीरितः।
> स्थित्वैकस्मिन् ततोऽन्यानि व्रजेत्सप्त त्वजिह्मगः॥
> असम्भ्रान्तः शनैर्गच्छेदक्रुद्धः सोऽनलं प्रति।
> न पातयेत्तमप्राप्य या भूमिः परिकल्पिता॥
> न मण्डलमतिक्रामेन्न चार्वाक् स्थापयेत्पदम्।
> मण्डलं चाष्टमं गत्वा ततोऽग्निं विसृजेन्नरः॥ इति।

**पितामहः**

> त्वरमाणो न गच्छेत्तु स्वस्थो गच्छेच्छनैः शनैः।
> न मण्डलमतिक्रामेन्नान्तरा स्थापयेत्पदम्॥ इति।

लोहपिण्डप्रक्षेपश्च नवमे मण्डले कार्यः ।

तथा स एव

अष्टमं मण्डलं गत्वा नवमे निक्षिपेद्बुधः । इति ।

अत्र विशेषः कालिकापुराणे

मण्डलानि तथा सप्त षोडशाङ्गुलमानतः ।
तावदन्तरतो गच्छेद्गत्वा नवतृणे क्षिपेत् ॥

अन्तरापाते दग्धत्वादग्धत्वसन्देहे करद्वयादन्यत्र दाहे च पुनरयःपिण्डस्य ग्रहणं कार्यम् । तत्र याज्ञवल्क्यः

अन्तरापतिते पिण्डे सन्देहे च पुनर्हरेत् ॥

**पितामहः**

भयाद्वं पातयेद्यस्तु व्रणस्तु न विभाव्यते ।
पुनरारोपयेल्लोहं स्थितिरेषा दृढीकृता ॥

**कात्यायनः**

प्रस्खलत्यभियुक्तश्चेत्स्थानादन्यत्र दह्यते ।
न तं दग्धं विदुर्देवास्तस्य भूयोऽपि दापयेत् ॥ इति ।

अयःपिण्डस्य नवममण्डले प्रक्षेपानन्तरं परीक्षणं कर्तव्यमित्याह नारदः

तस्यैवं मुक्तपिण्डस्य कुर्यात्करनिरीक्षणम् । इति ।

शुद्ध्यशुद्धिपरिज्ञानार्थमिति शेषः । तत्राशुद्धिप्रत्यायकान्याह स एव

पूर्वदृष्टेषु चिह्नेषु ततोऽन्यत्रापि लक्षयेत् ।
मण्डलं रक्तसंकाशं यथान्यत्राग्निसम्भवम् ।
सोऽविशुद्धस्तु विज्ञेयोऽसत्यधर्मव्यवस्थितः ॥ इति ।

यदा तु शोध्य(ह)स्तयोः स्फोटाद्यनुत्पत्तिस्तदा शुद्ध इति निर्णेतव्यम् इत्याह विष्णुः

यो हस्तयोः क्वचिद्दग्धस्तमशुद्धं विनिर्दिशेत् ।
न दग्धः सर्वथा यस्तु स विशुद्धो भवेन्नरः ॥ इति ।

यदा तु दाहादाहसन्देहस्तदा तद्धस्तयोर्व्रीहयो यवा वा दातव्याः ।
तेन शोध्येन हस्ताभ्यां मर्दने कृते

निर्विकारे दिनस्यान्ते शुद्धिं तस्य विनिर्दिशेत् ।

निर्विकारे करद्वये स्थिते सति तं शुद्धं निर्दिशेदित्यर्थः । क्वचि'न्निर्विकारो यदा हस्त' इति पाठः । तत्र हरणानन्तरमेव शुद्धिनिश्चयः । ननु दिनस्यान्ते शुद्धमिति निर्दिशेदिति पाठे

मुक्त्वाऽग्निं मृदितव्रीहिरदग्धः शुद्धिमाप्नुयात् ।

इति **याज्ञवल्क्य**वचनविरोध इति चेत्–मैवम्, 'प्रहृत्य परिधीन् जुहोती'ति-वदानन्तर्याभावेऽपि क्त्वानिर्देशसम्भवात्।

**नारदः**

यदा तु न विभावेत दग्धाविति करौ तथा।
व्रीहीनतिप्रयत्नेन सप्तवारांस्तु मर्दयेत्॥
मर्दितो यदि नो दग्धः सम्यैरेवं विनिश्चितम्।
शोध्यः शुद्धः स सत्कृत्यो दग्धो दण्ड्यो यथाक्रमम्॥ इति।

अत्रायमनुष्ठानक्रमः—पूर्वदिने भूशुद्धिं विधायापरदिने मण्डलानि यथाशास्त्रं निर्माय मण्डलाधिदेवताश्च तत्र तत्र संपूज्याग्निमुपसमाधाय शान्तिहोमं निर्वर्त्यायसःपिण्डं निधाय धर्मावाहनादिसर्वदेवतापूजां च हवनान्तनिर्वर्त्योपोषितस्य स्नातस्यार्द्रवाससः पश्चिमे मण्डले तिष्ठतो व्रीहिमर्दनादिना कृतकरसंस्कारस्य प्रतिज्ञापत्रं समन्त्रकं कर्तुः शिरसि बध्वा प्राड्विवाकस्तृतीये तापेऽग्निमभिमंत्र्य तमयःपिण्डं संदंशेन गृहीत्वा कर्त्राभिमन्त्रितं तस्याञ्जलौ निदध्यात्। सोऽपि मण्डलानि सप्त गत्वा नवमे मण्डले निक्षिप्यादग्धः शुद्धो भवतीति।

इत्यग्निविधिः

---

## अथ तोयविधिः

तत्र **पितामहः**

तोयस्नातः प्रवक्ष्यामि विधिं धर्म्यं सनातनम्।
मण्डलं पुष्पधूपाभ्यां कारयेत्तु विचक्षणः॥
शरान्संपूजयेद्वत्तया वैणवं च धनुस्तथा।
मङ्गलैः पुष्पधूपैश्च ततः कर्म समाचरेत्॥

मङ्गलैरिति पाठे मङ्गलद्रव्यैः श्वेतपुष्पादिभिः प्रथमं पूजयेदित्यर्थः। 'मण्डयेत्पुष्पधूपैश्चे'ति क्वचित्पाठः। मण्डलं च तोरणसमीपे कार्यं, तोरणं च निमज्जनसमीपे समे स्थाने शोध्यकर्णप्रमाणोच्छ्रितं कार्यम्।

तथा च **नारदः**

गत्वा तु तज्जलस्थानं तटे तोरणमुच्छ्रितम्।
कुर्वीत कर्णमात्रं तु भूमिभागे समे शुचौ॥ इति।

शराश्चानायसाग्रा वैणवा एव कार्याः।

तथा च कात्यायनः

शरास्त्वनायसैरग्रैः प्रकुर्वीत विशुद्धये ।
वेणुकाण्डमयांश्चैव क्षेप्ता च सुदृढं क्षिपेत् ॥

वेणुकाण्डमयान् वेणुदण्डमयान् । क्षेप्तृविषये पितामहः

क्षेप्ता तु क्षत्रियः कार्यस्तद्वृत्तिर्ब्राह्मणोऽपि वा ।
अक्रूरहृदयः शान्तः सोपवासस्तथा शुचिः ॥

धनुःप्रमाणमाह नारदः

क्रूरं धनुः सप्तशतं मध्यमं षट्शतं स्मृतम् ।
मन्दं पञ्चशतं ज्ञेयमेष ज्ञेयो धनुर्विधिः ।
मध्यमेन तु चापेन प्रक्षिपेत्तु शरत्रयम् ॥

धनुः सप्तशतमिति । स्थूणादियद्धं यद्धनुर्ज्यानिबद्धसप्तशतपलपरिमितद्रव्येण शरापूरणपर्यन्तं नमति तत्तथा एवं षट्शतं पञ्चशतमिति । अन्ये तु सप्ताधिकमङ्गुलशतपरिमितक्रूरं धनुः। एवमुत्तरत्रापि । तेनैवैकादशाङ्गुलाधिकचतुर्हस्तपरिमितं धनुः क्रूरं इत्यादि ज्ञेयमित्याहुः।

अत्र पितामहः

मध्यमेन तु चापेन प्रक्षिपेत्तु शरत्रयम् ।
हस्तानां तु शते सार्धे लक्ष्यं कृत्वा विचक्षणः ॥
न्यूनाधिके तु दोषः स्यात् क्षिपतः सायकांस्तथा ।

प्रक्षिप्तशरत्रयमध्ये मध्यम एव शरो ग्राह्यः ।

तथा च स एव

तेषां च प्रेषितानां तु शराणां शास्त्रदर्शनात् ।
मध्यमस्तु शरो ग्राह्यः पुरुषेण बलीयसा ॥ इति ।

बलीयानत्र जवी विवक्षितः । तस्यैव तत्राधिकृतत्वेन वक्ष्यमाणत्वात् । शरानयनं च पतनोपलक्षितदेशादेव ।

तथा च स एव

शरस्य पतनं ग्राह्यं सर्पणं तु विवर्जयेत् ।
सर्पन्सर्पञ्शरो याति दूराद्दूरतरं तु सः ॥

शरप्रक्षेपश्चातिवातविषमदेशादौ न कार्यः ।

तथा च स एव

इषुं न प्रक्षिपेद्विद्वान् मारुते वाति वै भृशम् ।

विषमे भूप्रदेशे च वृक्षस्थाणुसमाकुले ।
तृणगुल्मलतावल्लीपङ्कपाषाणसंयुते ॥

एतच्च शरप्रतिबन्धकमात्रोपलक्षणम् ।

**बृहस्पतिः**

अप्सु प्रवेश्य पुरुषं प्रेषयेत्सायकत्रयम् ।

पुरुषं अभिशस्तपुरुषम् । निमज्जनयोग्यजलान्याह **नारदः**

नदीषु नातिवेगासु तडागेषु सरस्सु च ।
ह्रदेषु स्थिरतोयेषु कुर्यात्पुंसां निमज्जनम् ॥

**पितामहोऽपि**

स्थिरतोये निमज्जेत्तु न ग्राहिणि न चाल्पके ।
तृणशैवालरहिते जलौकोमत्स्यवर्जिते ॥
देवखातेषु यत्तोयं तस्मिन्कुर्याद्विशोधनम् ।
आहार्यं वर्जयेन्नित्यं शीघ्रवेगनदीषु च ॥ इति ।

ग्राहिणि ग्राहाख्यप्राणिसहिते । आहार्यमित्यादि । तडागादिभ्य आहृतं ताम्रकटाहादिप्रक्षिप्तम् । एवंविधं नाभिमात्रमपि जलं वर्जयेदित्यर्थः ।

**विष्णुः**

पङ्कशैवालदुष्टग्राहमत्स्यजलौकादिवर्जिते अस्तानाभिमात्रे जले मग्नस्यारागाद्वेषिणः पुरुषस्यान्यस्य जानु गृहीत्वाऽभिमन्त्रिताम्भः प्रविशेत् । पुरुषश्च यज्ञियवृक्षजां स्थूणामवष्टभ्य प्राङ्मुखोऽवतिष्ठेत् ।

तथा च **स्मृत्यन्तरम्**

उदके प्राङ्मुखस्तिष्ठेद्धर्मस्थूणां प्रगृह्य च । इति ।
पुरुषश्च त्रैवर्णिकः कार्यः ।

तथा च **नारदः**

ब्राह्मणः क्षत्रियो वैश्यो रागद्वेषविवर्जितः ।
नाभिमात्रे जले स्थाप्यः पुरुषः स्थाणुवद्बली ॥
तस्योरुं प्रति संगृह्य निमज्जेदभिशापवान् ।

एतच्च जलाशये वरुणपूजानन्तरं कार्यम् ।

तथा च **नारदः**

गन्धमाल्यैः सुरभिभिर्मधुक्षीरघृतादिभिः ।
वरुणाय प्रकुर्वीत पूजामादौ समाहितः ॥ इति ।

ततो धर्मावाहनादिसकलदेवपूजाहोमसमन्त्रकप्रतिज्ञापत्रशिरोनिवेशनान्तं साधारणधर्मजातं प्राड्विवाको निर्वर्त्य जलमभिमन्त्रयेत्।

तत्र मन्त्रमाह **विष्णुः**

त्वमम्भः सर्वभूतानामन्तश्चरसि साक्षिवत्।
त्वमेवाम्भो विजानीषे न विदुर्यानि मानवाः॥
व्यवहाराभिशस्तोऽयं मानुषस्त्वयि मज्जति।
तदेनं संशयादस्माद्धर्मतस्त्रातुमर्हसि॥

**पितामहः**

तोय त्वं प्राणिनां प्राणाः सृष्टेराद्यन्तु निर्मितम्।
शुद्धेस्त्वं कारणं प्रोक्तं द्रव्याणां देहिनां तथा॥
अतस्त्वं दर्शयात्मानं शुभाशुभपरीक्षणे॥ इति।

ततः शोध्यकृत्यमाह **याज्ञवल्क्यः**

सत्येन माऽभिरक्ष त्वं वरुणेत्यभिशाप्य कम्।
नाभिदघ्नोदकस्थस्य गृहीत्वोरू जलं विशेत्॥

अभिशाप्य अभिमन्त्र्य कं उदकं विशेत्। निमज्जनं च तोरणनिकटस्थपुरुषगमनसमसमयमेव कार्यम्।

तदाह **कात्यायनः**

क्षिप्तेस्तु मज्जनं कार्यं गमनं समकालिकम्।
गमने चागमे चान्यः पुमानन्यो जले विशेत्॥

क्षिप्तेः शरैस्तदनन्तरं कृत्यमाह **पितामहः**

गन्तुश्चापि च कर्तुश्च समं गमनमज्जनम्।
*गच्छेत्तोरणमूलात्तु लक्ष्यस्थानं जवी नरः॥*
तस्मिन्गते द्वितीयोऽपि वेगेनादाय सायकम्।
गच्छेत्तोरणमूलं तु यतः स पुरुषो गतः॥
आगतस्तु शरग्राही न पश्यति यदा जले।
अन्तर्जलगतं सम्यक्तदा शुद्धिं विनिर्दिशेत्॥

गमनं तु जविना पुरुषेण परमशक्त्या कार्यम्।

तथा च **नारदपितामहौ**

शरप्रक्षेपणस्थानाद्युवा जवसमन्वितः।
गच्छेत्परमया शक्त्या यत्रासौ मध्यमः शरः॥

मध्यमं शरमादाय पुरुषोऽन्यस्तथाविधः ।
प्रत्यागच्छेत्तु वेगेन यतः स पुरुषो गतः ॥ इति ।

जविपुरुषनिर्धारणमाह नारदः

पञ्चाशतो धावकानां यौ स्यातामधिकौ जवे ।
तौ च तत्र नियोक्तव्यौ शरानयनकारणे ॥ इति ।

बृहस्पतिः

आनीते मध्यमे बाणे मग्नाङ्गः शुचितामियात् ।

अत्र मग्नाङ्ग इत्युक्तत्वादुन्मज्जितागस्याशुद्धिरुक्ता भवति । पूर्वस्थानात्स्थानान्तरगमनेऽप्यशुद्धिर्ज्ञेया ।

तथा च नारदपितामहौ

अन्यथा न विशुद्धिः स्यादेकाङ्गस्यापि दर्शनात् ।
स्थानाद्वाऽन्यत्र गमनाद्यस्मिन्पूर्वं निवेशितः ॥

अत्रैकाङ्गपदं कर्णनासिकाद्यभिप्रायेण ।

शिरोमात्रं तु दृश्येत न कर्णौ नापि नासिका ।
अप्सु प्रवेशने यस्य शुद्धं तमपि निर्दिशेत् ॥

प्रवेशने निमज्जने। अन्ये तु 'एकाङ्गस्यापि दर्शना'दिति वचनं मूर्धातिरिक्ताङ्गपरमित्याहुः। यदा तु जलौकादिदुष्टप्राणिना दष्टः समुन्मज्जति तदा न पराजीयते । किन्तु पुनरपि निमज्जनीय इत्याह स एव

निमज्ज्योत्प्लवते यस्तु दष्टः स्यात्प्राणिना नरः ।
पुनस्तत्र निमज्जेत्स दंशचिह्नविभावितः ॥

तत्र तस्मिन्नेव स्थाने । अत्रायं रचनाप्रकारः । उक्तलक्षणस्य जलाशयस्य सन्निधावुक्तलक्षणं तोरणमाख्य (? आरोप्य) उक्तप्रमाणप्रदेशे लक्ष्यं विधाय तोरणसन्निधौ शरसहितमुक्तलक्षणं चापं गन्धादिना पूजयित्वा तस्मिञ्जलाशये वरुणमावाह्य गन्धपुष्पादिभिरुपचारैः समभ्यर्च्य जलाशयतीरे धर्मादींश्च देवानावाहनादिहवनान्तमिष्ट्वा शोध्यस्य शिरसि प्रतिज्ञापत्रमाबध्य 'तोय त्वं प्राणिनां प्राण' इत्यादिना मन्त्रेण प्राड्विवाको जलमभिमन्त्रयेत् । अनन्तरं शोध्यः 'सत्येन माऽभिरक्ष त्व'मित्यादिना मन्त्रेण जलमभिमन्त्र्य गृहीतस्थूणस्य नाभिमात्रोदकावस्थितस्य बलीयसः पुरुषस्य समीपमुपसर्पति । अथ शरेषु त्रिषु क्षिप्तेषु मध्यमशरपातस्थाने मध्यमं शरं गृहीत्वा शरप्रसर्पणपक्षे तत्स्थानकशरग्रहणं यावता भवति तावद्विलम्बं कृत्वा जविन्येकस्मिन्पुरुषे स्थिते अन्यस्मिंश्च जविनि पुरुषे तोरणमूले स्थिते प्राड्विवाकेन करतालत्रये दत्ते शोध्यस्य मज्जनं । तोरणमूलावस्थितस्य च शरपातस्थानं प्रति गमनं च युगपद्भवति अनन्तरं शरानयनादिकमिति।

इत्युदकविधिः

---

## अथ विषविधिः

तत्र **नारदः**

अतःपरं प्रवक्ष्यामि विषस्य विधिमुत्तमम् ।
यस्मिन् काले यदा देयं यादृशं परिकीर्तितम् ।
यावन्मात्रा समुद्दिष्टा धर्मतत्त्वार्थवेदिभिः ॥

अत्र यस्मिन्काल इति विहितहेमन्तादिकालपरम् । यदेति विहितरात्रिशेषादिकालविशेषपरम् ।

विषदानकालमाह **स एव**

तोलयित्वेच्छतः काले देयमेतद्धिमागमे ।

हिमागमे हेमन्तशिशिरागमे । 'हेमन्ते शिशिरे विष'मिति **पितामह**वचनात् । तथा **स एव**

रात्रौ तु पश्चिमे यामे विषं देयं सुशीतले ।

सुशीतले देश इति शेषः । अत्र पश्चिमयाम इति पूर्वाह्णोपलक्षणम् ।

तथा च **कात्यायनः**

पूर्वाह्णे शीतले देशे विषं देयं तु देहिनाम् ।

निषिद्धकालानाह **नारदः**

नापराह्णे न मध्याह्ने न सन्ध्यायां च धर्मवित् ।
शरद्ग्रीष्मवसन्तेषु वर्षासु च विवर्जयेत् ॥

यत्तु

वर्षासु षड् जवा मात्रा ग्रीष्मे पञ्च यवाः स्मृताः ।
हेमन्ते सा सप्तयवा शरद्यल्पास्ततोऽपि हि ।

इति वर्षादौ पञ्चयवादिमात्राविधायकं **नारद**वचनं, तदितरदिव्योपादानाशक्तौ बोद्धव्यम् । अल्पेति पञ्चयवेत्यर्थः । हेमन्तग्रहणेन शिशिरस्यापि ग्रहणं 'हेमन्तशिशिरयोः समासेने'ति श्रुतेः । अत्र वसन्ते सख्योपदेशस्याप्यभावात् वसन्तः सर्वथाऽनादेय इत्याहुः । अपरे तु वसन्तस्य सर्वदिव्यसाधारणतया तत्रापि सप्तयवा मात्रेत्याचक्षते ।

ग्राह्यविषस्वरूपमाह **नारदः**

शाङ्गं हैमवतं शस्तं गन्धवर्णरसान्वितम् ।
अकृत्रिममसंमूढममन्त्रोपहतं च यत् ॥

**पितामहः**

शृङ्गिणो वत्सनाभस्य हैमजस्य विषस्य च । इति ।

शृङ्गादिविषयस्वरूपमाह कात्यायनः

अजाशृङ्गनिभं श्यामं सुपीतं शृङ्गसम्भवम् ।
भग्ने च शृङ्गवेराभं ख्यातं तच्छृंगिणं विषम् ॥
रक्तस्थमसितं कुर्यात् कठिनं चैव तत्क्षणात् ।
अनेन विधिना ज्ञेयं विषं दिव्यविशारदैः ॥

शृङ्गवेरमार्द्रकं तदाभं तच्छायम् । रक्तस्थमित्यादि । यद्विषं रक्ते स्थापितं तद्रक्तं कृष्णं कठिनं च कुर्यादित्यर्थः ।

तथा

वत्सनाभनिभं पीतं वर्णज्ञानेन निश्चितम् ।
शुक्तिशृङ्गाकृतिं भङ्गे विद्याद्वत्सनाभकम् ॥
मधुक्षीरसमायुक्तं स्वच्छं कुर्वीत तत्क्षणात् ।
ग्राह्यमेवं समाख्यातं लक्षणं धर्मसाधकैः ॥ इति ।

वर्ज्यविषाण्याह पितामहः

चारितानि च जीर्णानि कृत्रिमाणि तथैव च ।
भूमिजानि च सर्वाणि विषाणि परिवर्जयेत् ॥

नारदोऽपि

भग्नं च चारितं चैव धूपितं मिश्रितं तथा ।
कालकूटमलाबूजं विषं यत्नेन वर्जयेत् ॥

भग्नमीषद्दलितम्, श्लक्ष्णचूर्णस्य विधानात् । सृष्टं च चारितमिति पाठान्तरम् ।

दातव्यविषमात्रामाह पितामहः

यवाः सप्त प्रदातव्याः शुद्धिहेतोरसंशयम् ।

यवस्तु गौरसर्षपषट्कपरिमितो मध्यमो ग्राह्यः । स्मृत्यन्तरेऽपि

विषस्य पलषड्भागाद्भागो विंशतमस्तु यः ।
तमष्टमं भागहीनं शोध्ये दद्याद्घृतप्लुतम् ॥

अस्यार्थः—पलस्य यः षष्ठोऽशस्तस्य च यो विंशतितमोंऽशः सोऽपि चाष्टमांशहीनस्तत्तुलितं विषं दद्यात् । तेनायमर्थः संपद्यते—पलं चतुःसुवर्णं, सुवर्णः षोडशमाषात्मकः । माषश्च पञ्च-कृष्णलकः । कृष्णलश्च मध्ययवत्रयमितः । तेनैकस्मिन्पले षष्ट्यधिका नवशती यवानां संपद्यते । तस्याः षष्ठोंऽशः षष्ट्यधिकं यवशतम् । तस्य विंशतितमो भाग अष्टौ यवास्ते चाष्टमांशहीनाः सप्त यवाः संपद्यन्ते । घृतप्लुतं घृतेन मिश्रितं विषं देयमित्यनुवृत्तौ ।

घृतपरिमाणमाह कात्यायनः

घृतेन योजितं श्लक्ष्णपिष्टं त्रिंशद्गुणेन तु ।

अत्र **पितामहः**

औषधीर्मन्त्रयोगांश्च मणीनथ विषापहान् ।
कर्तुः शरीरसंस्थांस्तु गूढानन्यान्निरीक्षयेत् ॥

विषदानप्रकारमाहतुः **शम्भुनारदौ**

दद्याद्विषं सोपवासो देवब्राह्मणसन्निधौ ।
धूपोपहारमन्त्रैश्च पूजयित्वा महेश्वरम् ॥

प्राड्विवाकः सोपवासो महादेवं प्रपूज्य तत्पुरतो विषं स्थापयित्वा धर्मादि पूजनं होमान्तं कृत्वा प्रतिज्ञापत्रं शोध्यस्य शिरसि बध्वा विषं करेणादायाभिमन्त्रयेत् ।

तन्मन्त्रमाह **पितामहः**

दीयमानं करे कृत्वा विषं तु परिशापयेत् ।
विष त्वं ब्रह्मणा सृष्टं परीक्षार्थं दुरात्मनाम् ॥
त्वमेव विष जानीषे न विदुर्यानि मानवाः ।
व्यवहाराभिशस्तोऽयं मानुषः शुद्धिमिच्छति ।
तदेनं संशयादस्माद्धर्मतस्त्रातुमर्हसि ॥

**नारदो**ऽपि

त्वं विष ब्रह्मणा सृष्टं परीक्षार्थं दुरात्मनाम् ।
पापानां दर्शयात्मानं शुद्धानाममृतं भव ॥
मृत्युमूर्ते विष त्वं हि ब्रह्मणा परिनिर्मितम् ।
त्रायस्वैनं नरं पापात्सत्येनास्यामृतं भव ॥ इति ।

एवमभिमन्त्र्य प्राड्विवाको विप्रसन्निधौ स्वयमुदङ्मुखः प्राङ्मुखो वा दक्षिणाभिमुखस्थिताय शोध्याय दद्यात् ।

द्विजानां सन्निधावेव दक्षिणाभिमुखे स्थिते ।
उदङ्मुखः प्राङ्मुखो वा विषं दद्यात्समाहितः ॥

इति **नारद**स्मरणात् । तच्च प्राड्विवाकदत्तविषं शोध्यः स्वयं वक्ष्यमाणमंत्रेणाभिमन्त्र्य भक्षयेत् । तथा चाह **याज्ञवल्क्यः**

त्वं विष ब्रह्मणः पुत्रः सत्यधर्मे व्यवस्थितः ।
त्रायस्वास्मादभीशापात्सत्येन भव मेऽमृतम् ॥
एवमुक्त्वा विषं शार्ङ्गं भक्षयेद्धिमशैलजम् । इति ।

विषभक्षणानन्तरं शुद्धिज्ञानोपायमाह **स एव**

यस्य वेगैर्विना जीर्येच्छुद्धिं तस्य विनिर्दिशेत् ॥

**नारदः**

छायानिवेशितो रक्ष्यो दिनशेषमभोजनः ।
विषवेगक्रमातीतः शुद्धोऽसौ मनुरब्रवीत् ॥

**पितामहः**

भक्षिते यदि सुस्वच्छो मूर्च्छाच्छर्दिविवर्जितः ।
निर्विकारो दिनस्यान्ते शुद्धं तमिति निर्दिशेत् ॥

**विष्णुः**

विषं वेगक्रमातीतं सुखेन यदि जीर्यते ।
विशुद्धं तमिति ज्ञात्वा दिवसान्ते विवर्जयेत् ॥

विषवेगो नाम धातोर्धात्वन्तरप्राप्तिः । तथा च **स्मृत्यन्तरम्**

धातोर्धात्वन्तरं प्राप्तिर्विषवेग इति स्मृतः ।

धातवस्तु 'त्वगसृङ्मांसमेदोऽस्थिमज्जशुक्राणि धातवः' इत्युक्ताः । ततश्च धातुभेदाद्विषवेगाः षोढा भवन्ति । तल्लक्षणानि **विषतन्त्रे**

वेगो रोमाञ्चमाद्यो नयति विषजः स्वेदवक्त्रोपशोषौ
तस्योर्ध्वं तत्परौ द्वौ वपुषि जनयतो वर्णभेदप्रवेपौ ॥
यो वेगः पञ्चमोऽसौ नयनविवशतां कण्ठभङ्गं च हिक्कां
षष्ठो निश्वासमोहौ वितरति च मृतिं सप्तमो भक्षकस्य ॥ इति ।

**बृहस्पतिः**

विधिदत्तं विषं येन जीर्णं मन्त्रौषधैर्विना ।
स शुद्धः स्यादन्यथा तु दण्ड्यो दाप्यश्च तद्धनम् ॥

यदा तु शुद्ध्यनन्तरमपि कुहकाद्याशङ्का भवति तदा त्रिरात्रादिकालं पुरुषै रक्षयेत् ।
तथा च *पितामहः*

त्रिरात्रं पञ्चरात्रं वा पुरुषैः स्वैरधिष्ठितम् ।
कुहकाशङ्कया राजा धारयेद्दिव्यकारिणम् ॥ इति ।

एवं च 'दिनान्ते शुद्धं निर्दिशेदि'त्यादिवचनानि कुहकादिशङ्कावैधुर्ये ज्ञेयानि । शुद्ध्यनन्तरं राजकृत्यमाह **नारदः**

तं विशुद्धमिति ज्ञात्वा राजा सत्कृत्य मोचयेत् ।
उच्चैः प्रकाशयेच्चैनमेष धर्मो व्यवस्थितः ॥ इति ।

इति विषविधिः

—०—

## अथ कोशविधिः

तत्र **नारदः**

अतःपरं प्रवक्ष्यामि कोशस्य विधिमुत्तमम् ।
शास्त्रविद्भिर्यथा प्रोक्तं सर्वकालाविरोधिनम् ॥
पूर्वाह्णे सोपवासस्य स्नातस्यार्द्रपटस्य च ।
सशूकस्याव्यसनिनः कोशपानं विधीयते ।
इच्छतः श्रद्दधानस्य देवब्राह्मणसन्निधौ ॥

सशूको भृशा दिव्यकरणे अनिष्टाशङ्की आस्तिक इति यावत् । संशूक इति पाठेऽप्ययमेवार्थः ।

**याज्ञवल्क्यः**

देवानुग्रान्समभ्यर्च्य तत्स्नानोदकमाहरेत् ।

उग्रा देवा रुद्रदुर्गादित्याद्याः । तेषां मध्ये अन्यतमं देवं प्राड्विवाकः सोपवासो गन्धादिभिरुपचारैः संपूज्य स्नापयित्वा तत्स्नानोदकं दिव्यदानार्थं नयेत् ।

**विष्णुः**

उग्रान्देवान्समभ्यर्च्य तत्स्नानोदकात् प्रसृतित्रयं पिबेत् । इदं मया न कृतमिति व्याहरन् देवाभिमुखः । इति ।

एवं यस्य कस्याप्युग्रदेवस्य स्नाने प्राप्ते नियमार्थमाह **पितामहः**

भक्तो यो यस्य देवस्य पाययेत्तस्य तज्जलम् ।
समभावे तु देवानामादित्यस्य तु पाययेत् ॥
दुर्गायाः पाययेच्चौरान् ये च शस्त्रोपजीविनः ।
*भास्करस्य ततोऽन्यांश्च ब्राह्मणांस्तु न पाययेत् ॥*
दुर्गायाः स्नापयेच्छूलमादित्यस्य तु मण्डलम् ।
इतरेषां तु देवानां स्नापयेदायुधानि तु ॥

समभावे विशिष्टैकतमदेवताभक्त्यभावे । अत्र 'ब्राह्मणांस्तु न पाययेदि'ति आगामिकालसमयनिबन्धनक्रियातिरिक्तविषयम् ।

न ब्राह्मणस्य कोशं दद्यादन्यत्रागामिसमयनिबन्धनक्रियातः ।

इति प्रागुदाहृतविष्णुवचनेनागामिसमयनिबन्धनक्रियायां ब्राह्मणस्यापि कोशविधानात् ।

साधारणः समस्तानां कोशः प्रोक्तो मनीषिभिः ।
विपवर्जं ब्राह्मणस्य························ ॥

इति **नारद**वाक्येन ब्राह्मणस्यापि कोशविधानं तद्विषयकमेव 'ब्राह्मणांस्तु न पाययेदि'ति भास्करमण्डलविषयम् । 'विषवर्जं ब्राह्मणस्ये'त्यनेन कोशस्याप्यनुज्ञानादिति **पारिजातः ।** अत्र **पितामह**वाक्ये देवतास्नानोदकोपादानं तदायुधस्नानोदकोपादानं च महदल्पार्थविषयं व्यवस्थितं विज्ञेयम् ।

स्वल्पेऽपराधे देवानां स्नापयित्वाऽऽयुधोदकम् ।
पाय्यो विकारे चाशुद्धो नियम्यः शुचिरन्यथा ॥

इति **कात्यायन**वचनात् । देवतानामायुधोदकमित्यन्वयः । पाय्यः पाययितव्यः । नियम्यो दण्ड्यः ।

**बृहस्पतिः**

यद्भक्तः सोऽभियुक्तः स्यात्तद्देवायुधमण्डलम् ।
प्रक्षाल्य पाययेत्तस्माज्जलात्तु प्रसृतित्रयम् ॥

**विष्णुः**

एतच्च जलाभिमन्त्रणपूर्वकं कार्यम् ।

तथा च **याज्ञवल्क्यः**

संश्राव्य पाययेत्तस्माज्जलात्तु प्रसृतित्रयम् ।

संश्राव्य श्रावयित्वा । अत्र कर्मकां(?)छायामाह **नारदः**

एनश्च श्रावयित्वा तु पाययेत्प्रसृतित्रयम् ।

एनः पापम् । तच्च तत्फलाभिधानमुखेन तेनैव दर्शितम्

स्वेच्छया यः पिबेत्कोशं किल्बिषैर्दूषितो नरः ।
विसंवदेच्च यो लोभात् श्वित्री भवति दुर्मतिः ।
आत्मना कामकारेण कोशं पीत्वा विसंवदेत् ।
दरिद्रो व्याधितो मूर्खः सप्त जन्मानि जायते ।
बलात्कोशं हि यो दत्त्वा हितमिच्छेत चात्मनः ।
स विनाशी भवेत्तस्य तत्तु कार्यं न सिध्यति ।

तत्रादिमौ श्लोकावभियोज्यः श्रावयितव्यः अन्तिममभियोक्तेति । शोध्यस्तु श्रावितो न्यायं 'न कृतवानस्मी'ति वदन् पिबेत् । 'इदं मया न कृत'मिति प्रागुदाहृत**विष्णु**वचनात् । अन्ये तु तत्स्नानोदकमानीतं 'तोयस्त्वं प्राणिनां प्राणा' इत्यादिना तत्तोयं प्राड्विवाकः संश्राव्य अभिमन्त्र्य शोध्येन च 'सत्येन माभिरक्ष त्व'मित्यादिनाभिमन्त्रितं पाययेदिति **याज्ञवल्क्य**वचनार्थमाहुः । इदं च धर्मावाहनादिशोध्यशिरःपत्रारोपणान्तं सर्वदिव्यसाधारणं विधिं विधाय कार्यम् ।

तथा च **पितामहः**

प्राङ्मुखं कारिणं कृत्वा पाययेत्प्रसृतित्रयम् ।
पूर्वोक्तेन विधानेन स्नातमार्द्राम्बरं शुचिम् ॥

कारिणं दिव्यकारिणं, शोध्यमिति यावत् । पूर्वोक्तेन सर्वदिव्यसाधारणतयोक्तेन । तस्य मण्डलाभ्यन्तरस्थितत्वमाह

**नारदः**

तमाहूयाभिशस्तं तु मण्डलाभ्यन्तरे स्थितम् ।
आदित्याभिमुखं कृत्वा पाययेत्प्रसृतित्रयम् ॥

मण्डलं तु तस्मिन्नेव काले गोमयेन कार्यमिति **सम्प्रदायविदः** । पानादनन्तरं शुद्धिज्ञानोपायमाह **याज्ञवल्क्यः**

अर्वाक्चतुर्दशादह्नो यस्य नो राजदैविकम् ।
व्यसनं जायते घोरं स शुद्धः स्यान्न संशयः ॥

व्यसनं दुःखं घोरं महत्, अतिपीडाकरमिति यावत् । अल्पस्य देहिनामवर्जनीयत्वात् ।

**कात्यायनः**

अथ दैवविसंवादस्त्रिसप्ताहाद्यदापतेत् ।
अभियुक्तं प्रयत्नेन तमर्थं दण्डमेव च ॥

दैवविसंवादो दैविकव्याधिज्ञातिमरणादिभ्यामभिभवः । ते च दैविका व्याधयस्तेनैव दर्शिताः

क्षयातीसारविस्फोटाः शूलास्थिपरिपीडनम् ।
नेत्ररुग्गलरोगश्च तथोन्मादः प्रजायते ॥

क्वचित्तु ज्वरातीसारेति पाठः ।

तथा

शिरोरुग्भुजभङ्गश्च व्याधयो दैविका नृणाम् ॥ इति ।

**विष्णुः**

यस्य पश्येद्द्विसप्ताहात्त्रिसप्ताहादथापि वा ।
रोगोऽग्निर्ज्ञातिमरणं राजाऽऽतङ्कमथापि वा ।
तमशुद्धं विजानीयात्तथा शुद्धं विपर्यये ॥

अवध्यन्तरमप्याह

**पितामहः**

त्रिरात्रात्सप्तरात्राद्वा द्विसप्ताहादथापि वा ।
वैकृतं यस्य दृश्येत पापकृत्स उदाहृतः ॥

तस्यैकस्य न सर्वस्य जनस्य यदि तद्भवेत् ।
रोगोऽग्निर्ज्ञातिमरणं सैव तस्य विभावना । इति ।

तस्येत्यादेरयमर्थः—तस्य शोध्यस्यैकस्यैव वैकृतोत्पत्तौ न केवलं पापत्वम्, किन्तु अन्यस्यापि स्वकीयस्य वैकृतोत्पत्तावपि पापकृत्त्वमित्यर्थः ।

अत एव **बृहस्पतिः**

सप्ताहाद्वा द्विसप्ताहाद्यस्यार्तिर्न प्रजायते ।
पुत्रदारधनानां च स शुद्धः स्यान्न संशयः ॥ इति ।

**मनु**नाप्यवध्यन्तरमुक्तम्

न यार्तिमृच्छति क्षिप्रं स ज्ञेयः शपथे शुचिः । इति ।

आर्तिः पूर्वोक्तो रोगादिः । क्षिप्रं शीघ्रं एकरात्रादर्वागिति यावत् ।

अत्र **याज्ञवल्क्येन** 'तुलाग्न्यापो विषं कोशः' इत्याद्युक्त्वा महाभियोगेष्वेतानीत्यभिधाय 'अर्वाक्चतुर्दशादह्नः' इत्युक्तं, तेनैवमवगम्यते चतुर्दशाहकालपरीक्षणं महाभियोगविषयमिति। त्रिसप्ताहपक्षस्तु तदधिकतरविषयः । सप्तरात्रत्रिरात्रैकरात्राणि तु महाभियोगोक्तद्रव्यादर्वाचीनं द्रव्यं त्रिधा विभज्य यथायोगं व्यवस्थाप्यानि। **कृत्यकल्पतरु**स्तु त्रिरात्रादौ देशकालविषयविशेषापेक्षया व्यवस्थितो विकल्प इत्याह । **अन्ये** त्वाहुः मानवीयावधिः स्वल्पकार्यनिर्णायकसत्यादिशपथविषयः । स्वल्पकालीनायाः शुद्धिविभावनायास्तत्रैवोचितत्वात् सत्यादिशपथान्प्रकृत्याभिहितत्वाच्च। त्रिरात्राद्यवधयस्तु कोशविषयः, कोशमधिकृत्याभिधानात्। तत्रापि त्रिरात्रावधिस्तण्डुलविषयद्रव्यादर्वाचीनद्रव्यविषयः । सप्ताहावधिस्तु तण्डुलविषयद्रव्यसमानद्रव्यविषयः ।

द्विसप्ताहावधिस्तु

त्रिंशद्दशविनाशे तु कोशपानं विधीयते ।

इति प्रतिपादितकोशविषयः । त्रिसप्ताहावधिस्तु तदधिकविषय इति । एवं च

ऊर्ध्वं यस्य द्विसप्ताहाद्वैकृतं तु महद्भवेत् ।
नाभियोज्यः स विदुषा कृतकालव्यतिक्रमात् ॥

इति **नारद**वचने द्विसप्ताहपदं पूर्वोक्तावधीनामुपलक्षणार्थम्। कृतकालव्यतिक्रमादिति हेतोरव्यधन्तरेऽपि समानत्वात्। मिथ्याभियोगेऽभियोजकस्य दण्डमाह **कात्यायनः**

अवष्टम्भाभियुक्तस्य विशुद्धस्यातिकोपतः ।
सदण्डमभियोगं च दापयेदभियोजकम् ॥

दण्डपरिमाणं तु दिव्यप्रकरणसमाप्तौ वक्ष्यते ।

विशुद्धविषये **विष्णुः**

दिव्येन शुद्धं पुरुषं सत्कुर्याद्धार्मिको नृपः । इति ।

तदनन्तरकृत्यमाह बृहस्पतिः

सोपवासः सूर्यग्रहे तण्डुलान् भक्षयेच्छुचिः ॥ इति ।

**पितामहः**

प्राङ्मुखोपोषितं स्नातं शिरोरोपितपत्रकम् ।
तण्डुलान् भक्षयित्वा तु पत्रे निष्ठीवयेत् त्रिधा ॥
भूर्जस्यैव तु नान्यस्य अभावे पिप्पलस्य तु ।

शिरोरोपितपत्रकं तण्डुलान् भक्षयित्वा निष्ठीवयेत् । प्राड्विवाकः भक्षयेदिति ण्यन्ताणिचि रूपम् ।

तदनन्तरं शुद्धशुद्धिनिश्चयोपायमाह कात्यायनः

देवतास्नानपानीयदिग्धतण्डुलभक्षणात् ।
शुद्धनिष्ठीवनाच्छुद्धो नियम्योऽशुचिरन्यथा ॥

**बृहस्पतिरपि**

शुद्धः स्याच्छुद्धनिष्ठीवे रक्तमिश्रे च दोषभाक् ।

न केवलं लोहितदर्शनेनैवाशुद्धिः, किन्तु निमित्तांतरेणापीत्याहतुर्बृहस्पतिकात्यायनौ

लोहितं दृश्यते यस्य हनु तालु च शीर्यति ।
गात्रं च कम्पते यस्य तमशुद्धं विनिर्दिशेत् ॥ इति ।

'हनुजातं च सीदती'त्युदीच्यपाठः । तत्र हनुजातं नामोत्तराधरयामदक्षिणरूपहनुसमूहः ।

**इति तण्डुलविधिः**

---

**अथ तप्तमाषविधिः**

तत्र **पितामहः**

तप्तमाषस्य वक्ष्यामि विधिमुद्धरणे शुभम् ।
कारयेदायसं पात्रं ताम्रं वा षोडशाङ्गुलम् ।
चतुरङ्गुलखातं तु मृण्मयं वापि मण्डलम् ॥ इति ।

अत्राङ्गुलं तिर्यक्मध्यमयवोदराष्टपरिमितं ग्राह्यम् । मण्डलं परिमण्डलं वर्तुलमिति यावत् ।

क्वचित्तु 'सौवर्णं राजतं वापि तप्तं वा षोडशाङ्गुल'मिति पाठः ।

तथा

पूरयेत घृततैलाभ्यां विंशत्या वै पलैस्तु तत् ।
सुतप्ते निक्षिपेत्तत्र सुवर्णस्य तु माषकम् ॥ इति ।

यथोक्तदिव्यदाने राज्ञः फलमाह **नारदः**

यथोक्तेन विधानेन पञ्च दिव्यानि धर्मवित्।
ददद्राजाऽभियुक्तानां प्रेत्य चेह च नन्दति ॥ इति।

अत्र पञ्चसंख्या न विवक्षिता।

## इति कोशविधिः

---

## अथ तण्डुलविधिः

तत्र **पितामहः**

तण्डुलानां प्रवक्ष्यामि विधिं भक्षणचोदितम्।
चौर्ये तु तण्डुला देया नान्यत्रेति विनिश्चयः ॥

अत्र चौर्यग्रहणमर्थविवादोपलक्षणार्थम्। हेमप्रकल्पनामविधाय 'तदर्धे तण्डुला ज्ञेया' इति प्रागुक्त**कात्यायन**वचनात्। न चैतद्वचनं चौर्यादिविषये वाऽस्त्विति वाच्यम्। 'विषं सहस्रेऽपहृते चे'त्युपक्रम्य

चतुःशतेऽभियोगे तु दातव्यस्तत्समापकः।
त्रिशते तण्डुला ज्ञेयाः............. ॥

इत्यादि**बृहस्पति**वचनोपक्रमविरोधापत्तेः।

तस्माद्धनविवादे चौर्यादन्यत्रापि तण्डुला देयाः। अन्यत्रेति स्त्रीसंग्रहणाद्यन्यतमविवादे। **कल्पतरुकार**प्रभृतयस्तु 'शूद्रे तु तण्डुला देयाः' इति पठन्ति।

तथा

तण्डुलान्कारयेच्छुक्लान् शालेर्नान्यस्य कस्यचित्।
मृन्मये भाजने कृत्वा आदित्यस्याग्रतः शुचिः ॥
स्नानोदकेन संमिश्रान् रात्रौ तत्रैव वासयेत्।
प्रभाते कारिणो देया आदित्याभिमुखस्य तु ॥

'निः कृत्वा प्राङ्मुखाय तु' इति पाठान्तरम्।

आवाहनादि पूर्वं तु कृत्वा रात्रौ विधानतः इति।

शुचिर्भूत्वा प्राड्विवाको रात्रावादित्यस्य पुरतो नातिदूरे तण्डुलानुपकल्प्य धर्मावाहनादि-हवनान्तं सकलदिव्यसाधारणं विधिं विधाय आदित्यस्नानोदकेन मिश्रितान् तत्रैव वासये-दित्यर्थः।

तदनन्तरकृत्यमाह **बृहस्पतिः**

सोपवासः सूर्यग्रहे तण्डुलान् भक्षयेच्छुचिः ॥ इति ।

**पितामहः**

प्राङ्मुखोपोषितं स्नातं शिरोरोपितपत्रकम् ।
तण्डुलान् भक्षयित्वा तु पत्रे निष्ठीवयेत् त्रिधा ॥
भूर्जस्यैव तु नान्यस्य अभावे पिप्पलस्य तु ।

शिरोरोपितपत्रकं तण्डुलान् भक्षयित्वा निष्ठीवयेत् । प्राड्विवाकः भक्षयेदिति ण्यन्तापेचि रूपम् ।

तदनन्तरं शुद्ध्यशुद्धिनिश्चयोपायमाह **कात्यायनः**

देवतास्नानपानीयदिग्धतण्डुलभक्षणात् ।
शुद्धनिष्ठीवनाच्छुद्धो नियम्योऽशुचिरन्यथा ॥

**बृहस्पतिरपि**

शुद्धः स्याच्छुद्धनिष्ठीवे रक्तमिश्रे च दोषभाक् ।

न केवलं लोहितदर्शनेनैवाशुद्धिः, किन्तु निमित्तांतरेणापीत्याहतुर्बृहस्पतिकात्यायनौ

लोहितं दृश्यते यस्य हनु तालु च शीर्यति ।
गात्रं च कम्पते यस्य तमशुद्धं विनिर्दिशेत् ॥ इति ।

'हनुजातं च सीदती'त्युदीच्यपाठः । तत्र हनुजातं नामोत्तराधरवामदक्षिणरूपहनुसमूहः ।

इति तण्डुलविधिः

---

## अथ तप्तमाषविधिः

तत्र **पितामहः**

तप्तमाषस्य वक्ष्यामि विधिमुद्धरणे शुभम् ।
कारयेदायसं पात्रं ताम्रं वा षोडशाङ्गुलम् ।
चतुरङ्गुलखातं तु मृण्मयं वापि मण्डलम् ॥ इति ।

अत्राङ्गुलं तिर्यङ्मध्यमयवोदराष्टपरिमितं ग्राह्यम् । मण्डलं परिमण्डलं वर्तुलमिति यावत् । क्वचित्तु 'सौवर्णं राजतं वापि ताम्रं वा षोडशाङ्गुल'मिति पाठः ।

तथा

पूरयेत् घृततैलाभ्यां विंशत्या वै पलैस्तु तत् ।
सुतप्ते निक्षिपेत्तत्र सुवर्णस्य तु माषकम् ॥ इति ।

बृहस्पतिः

समुद्धरेत्तैलघृतात्सुतप्तात्तप्तमापकम् ।
अङ्गुष्ठाङ्गुलियोगेन सत्यमामन्त्र्य वीतभीः ॥

सत्यमामंत्र्य 'एह्येहि भगवन्धर्मे'त्यादिना मन्त्रेण सम्बोध्य । अत्र 'समुद्धरे'दिति वचनात्पात्रादुत्क्षेपणमात्रमपेक्षितं, न बहिःप्रक्षेपादरः ।

पितामहबृहस्पती

कराग्रं न धुनेद्यस्तु विस्फोटो वा न जायते ।
शुद्धो भवति धर्मेण पितामहवचो यथा ॥

कालिकापुराणे

न धुनेद्यः कराग्रं तु यस्य रक्तं न जायते ।
विस्फोटाद्यैस्तथा दोषैः स शुद्धो यस्य चोज्झितम् ॥

विस्फोटाद्यैर्यस्य करामुज्झितमित्यन्वयः । आदिपदेनोदीरितेतरकरविकारपरिग्रहः ।

तप्तमापप्रकारान्तरमाह पितामहः

सौवर्णे राजते ताम्रे आयसे मृण्मयेऽपि वा ।
गव्यं घृतमुपादाय तदग्नौ तापयेच्छुचिः ॥
सौवर्णीं राजतीं ताम्रीमायसीं वा सुशोधिताम् ।
सलिलेन सकृद्धौतां प्रक्षिपेत्तत्र मुद्रिकाम् ॥
भ्रमद्वीचीतरंगाढ्ये अनखस्पर्शगोचरे ।
परीक्षेतार्द्रपर्णेन चुरुकारं सघोषकम् ॥
ततश्चानेन मन्त्रेण सकृत्तदभिमन्त्रयेत् ।
परं पवित्रममृतं घृत त्वं यज्ञकर्मसु ॥
दह पावक पापं त्वं हिमशीतं शुचौ भव ।
उपोषितं ततः स्नातमार्द्रवाससमागतम् ॥
ग्राहयेन्मुद्रिकां तां तु घृतमध्यगतां तथा ।
प्रदेशिनीं च तस्याथ परीक्षेयुः परीक्षकाः ॥
यस्य विस्फोटका न स्युः शुद्धोऽसावन्यथाऽशुचिः ॥ इति ।

अत्र प्रदेशिन्यैव मुद्रिकोद्धरणं कार्यम्, तस्या एव परीक्षाविधानात् । घृतानुमन्त्रणं प्राड्विपाककर्तृकम् । शोध्यकर्तृकं तु 'त्वमग्ने सर्वभूताना'मिति मन्त्रकरणकमभ्यनुमन्त्रणम् । अत्र दिक्पालादिपूजनमप्याचरन्ति वृद्धाः । धर्मावाहनादिप्रतिज्ञापत्रशिरोनिवेशनान्तं कर्म साधारणमेव ।

इति तप्तमापविधिः

## अथ फालविधिः

तत्र बृहस्पतिः

आयसं द्वादशपलं घटितं फालमुच्यते ।
अष्टाङ्गुलं भवेद्दीर्घं चतुरङ्गुलविस्तृतम् ॥
अग्निवर्णं तु तच्चोरो जिह्वया लेहयेत्सकृत् ।
न दग्धश्चेच्छुद्धिमियादन्यथा तु स हीयते ॥

चोरपदमत्र गोचोरपरम् ।

गोचोरस्य प्रदातव्यं सम्यैः फालावलेहनम् ।

इति वचनात् । अन्ये तु चोरग्रहणं शोध्योपलक्षणमित्याहुः । सकृत्पदेन बलेनावृत्तिनिषेधः । इदं चावलेहनं दिव्यदेशे प्रतिष्ठिताग्नौ फालं निक्षिप्य धर्मावाहनादिके शोध्यशिरःपत्रारोपणान्ते कर्मणि प्राड्विवाकेन कृते अनन्तर सुतप्ते कृते 'त्वमग्ने' इत्यादिनाऽभिमन्त्र्य शोध्येन कार्यम् ।

## इति फालविधिः



## अथ धर्मजदिव्यविधिः

तत्र पितामहः

अधुना संप्रवक्ष्यामि धर्माधर्मपरीक्षणम् ।
हन्तॄणां याचमानानां प्रायश्चित्तार्थिनां नृणाम् ।

हन्तॄणामिति । साहसाभियोगेषु याचमानानामित्यर्थाभियोगेषु । प्रायश्चित्तार्थिनामिति पातकाभियोगेषु ।

राजतं कारयेद्धर्ममधर्मं सीसकायसम् ।

सीसकायसमिति । सीसकं वा आयसं वेति ।

लिखेद्भूर्जे पटे वापि धर्माधर्मौ सितासितौ ।
अभ्युक्ष्य पञ्चगव्येन गन्धमाल्यैः समर्चयेत् ॥
सितपुष्पस्तु धर्मः स्यादधर्मोऽसितपुष्पधृक् ।
एवं विधायोपलिप्य पिण्डयोस्तौ निधापयेत् ॥

पिण्डयोरिति । अभ्यन्तर इति शेषः । तौ च समानौ । 'समौ कृत्वा नवे कुम्भे' इति वक्ष्यमाणबार्हस्पत्यवचनात् ।

गोमयेन मृदा वापि पिण्डौ कार्यौ समन्ततः ।
मृद्भाण्डकेऽनुपहते स्थाप्यौ चानुपलक्षितौ ॥
उपलिप्ते शुचौ देशे देवब्राह्मणसन्निधौ ।
आवाहयेत्ततो देवान् लोकपालांश्च पूर्ववत् ॥
धर्मावाहनपूर्वं तु प्रतिज्ञापत्रकं लिखेत् ।
यदि पापविमुक्तोऽहं धर्मस्त्वायातु मे करे ॥
अभियुक्तस्तयोश्चैकं प्रगृह्णीतावलम्बितः ।
धर्मे गृहीते शुद्धिः स्यादधर्मे तु स हीयते ॥
एवं समासतः प्रोक्तं धर्माधर्मपरीक्षणम् । इति ।

बृहस्पतिः

पत्रद्वये लेखनीयौ धर्माधर्मौ सितासितौ ।
जीवदानादिकैर्मन्त्रैर्गायत्र्याद्यैश्च सामभिः ॥
आमन्त्र्य पूजयेद्गन्धैः कुसुमैश्च सितासितैः ।
अभ्युक्ष्य पञ्चगव्येन मृत्पिण्डान्तरितौ ततः ॥
समौ कृत्वा नवे कुम्भे स्थाप्यौ चानुपलक्षितौ ।
ततः कुम्भात्पिण्डमेकं प्रगृह्णीतावलम्बितः ।
धर्मे गृहीते शुद्धिः स्यात्संपूज्यश्च परीक्षकैः ॥

जीवदानादिकैर्मन्त्रैः प्राणप्रतिष्ठादिमन्त्रैः ।

इति धर्मजदिव्यविधिः

---

## अथ शपथविधिः

तत्र नारदः

शपथा अपि देवानामृषीणां च महात्मनाम् ।
वसिष्ठः शपथं शेपे यातुधानेषु शब्दितः ॥
महर्षयस्त्वथेन्द्रश्च पुष्करार्थे नियोधिताः ।
शेपुः शपथमव्यग्राः परस्परविशुद्धये ॥

अत्र विष्णुः

सर्वेष्वर्थजातेषु मूल्यं कनकं कल्पयेत् । तत्र कृष्णलोने शूद्रं दूर्वाकरं शापयेत् ।

द्विकृष्णलोने तिलकरम्। त्रिकृष्णलोने जलकरम्। चतुःकृष्णलोने सुवर्णकरम्। पञ्चकृष्णलोने सीरोद्धृतमहीकरम्। सुवर्णार्धोने कोशो देयः। शूद्रस्य तथा द्विगुणेऽर्थे यथाऽभिहिता समयक्रिया वैश्यस्य त्रिगुणेऽर्थे राजन्यस्य चतुर्गुणेऽर्थे ब्राह्मणस्य। इति।

कृष्णलोने मध्यमयवत्रयपरिमितकृष्णलात् न्यूनेऽर्थे। एवं द्विकृष्णलोनादावपि।

**बृहस्पतिः**

सत्यं वाहनशस्त्राणि गोबीजकनकानि च।
देवब्राह्मणपादांश्च पुत्रदारशिरांसि च॥
एते तु शपथाः प्रोक्ताः स्वल्पेऽर्थे सुकरास्तथा।
साहसेष्वभिशापेषु दिव्यान्याहुर्विशोधनम्॥ इति।

**स्मृत्यन्तरे**

निष्के तु सत्यवचनं द्विनिष्के पादलम्भनम्।
त्रिकादर्वाक्तु पुष्पं स्यात्कोशपानमतः परम्॥

निष्कशब्देनात्र काञ्चनकर्षचतुर्थांशो मुद्रामुद्रितः प्रतिपाद्यते। तत्रापि क्वचिद्देशे निष्कव्यवहारात्। न

चतुःसौवर्णिको निष्को विज्ञेयस्तु प्रमाणतः।

इति **मनूक्तः**। तस्य ग्रहणे तन्मूल्यकाञ्चनं कर्षार्धादधिकं भवति। तत्र सत्यवचनविधौ 'चतुर्गुणेऽर्थे ब्राह्मणस्ये'त्युदाहृतविष्णुवचनविरोधः स्यात्। तस्माद्व्यावहारिकनिष्काश्रयेण सत्यवचनादिव्यवस्था बोद्धव्येति।

सत्येन शापयेद्विप्रं क्षत्रियं वाहनायुधैः।
गोबीजकाञ्चनैर्वैश्यं शूद्रं सर्वैस्तु पातकैः॥

एतदर्थः साक्षिप्रकरणतोऽनुसन्धेयः।

अत्र शुद्धिविभावनामाह **मनुः**

यमिद्धो न दहत्यग्निरापो नोन्मज्जयन्ति यम्।
न चार्तिमृच्छति क्षिप्रं स ज्ञेयः शपथे शुचिः॥

**कात्यायनः**

अर्वाक् चतुर्दशादह्नो यस्य नो राजदैविकम्।
व्यसनं जायते घोरं स ज्ञेयः शपथे शुचिः॥ इति।

अत्राप्यवधिकालनियमः प्रागुदीरितो द्रष्टव्यः। वृथा शपथकरणे दोषमाह **मनुः**

न वृथा शपथं कुर्यात्स्वल्पेऽप्यर्थे नरो बुधः।
वृथा हि शपथं कुर्वन्प्रेत्य चेह च नश्यति॥ इति।

**यमः**

कृत्वा मृषा तु शपथं कीटस्य वधसंयुतम् ।
अनृतेन च युज्येत वधेन च तथा नरः ।
तस्मान्न मिथ्या शपथं नरः कुर्याद्यथेप्सितम् ॥

अत्र कीटपदं चेतनमात्रोपलक्षणम् ।

**मनुः**

कामिनीषु विवाहेषु गवां भक्ष्ये तथेन्धने ।
ब्राह्मणाभ्युपपत्तौ च शपथे नास्ति पातकम् ॥

दिव्यविशेषेण पराजितस्य दण्डविशेषमाह **कात्यायनः**

विषे तोये हुताशे च तुलाकोशे च तण्डुले ।
तप्तमाषकदिव्ये च क्रमाद्दण्डं प्रकल्पयेत् ॥
सहस्रं षट् शतं चैव तथा पञ्च शतानि च ।
चतुस्त्रिद्व्येकमेकं च हीनं हीनेषु कल्पयेत् ॥ इति ।

अत्र न केवलं पराजयनिमित्तोऽयमेव दण्डः । किन्तु

निह्नवे भावितो दद्याद्धनं राज्ञे च तत्समम् ।

इत्याद्युक्तदण्डेन समुच्चितो ग्राह्यः ।

इति दिव्यप्रकरणम्

---

## *इति क्रियापादः*

इति श्रीमन्महीमण्डलाखण्डलश्रीनागमल्लात्मजनिषमप्रतिज्ञापरिपूरणपरायण-
कलिकालकर्णप्रतापलङ्केश्वरशरणागतराजवज्रपञ्जरपरमवैष्णवरिपुगजसिंहे-
त्यादिनिखिलविरुदराजीविराजमानमानोन्नतमहाराजाधिराजश्रीपृथ्वी-
चन्द्रदेवविरचिते धर्मतत्त्वकलानिधौ महानिबन्धे व्यवहार-
प्रकाशे दिव्यादिनिर्णयो नाम पञ्चम उल्लासः ।

---

# अथ निर्णयप्रकारः

तत्र व्यासः

प्रमाणैर्हेतुचरितैः शपथेन नृपाज्ञया ।
वादिसम्प्रतिपत्त्या वा निर्णयोऽष्टविधः स्मृतः ॥

प्रमाणपदेनात्र साक्षिभुक्तिलिखितान्यभिधीयन्ते । तेन प्रकारत्रयमुक्तं भवति–हेतुरनुमानं तर्कश्चेति एकः प्रकारः । चरितं देशाद्याचारः । शपथेति । शपथपदं सत्यधटादिसकलदैविकक्रियाभिप्रायम् ।

अमुमेवार्थं विविच्याह स एव

लिखितं साक्षिणो भुक्तिः प्रमाणं त्रिविधं स्मृतम् ।
अनुमानं विदुर्हेतुस्तर्कश्चेति मनीषिणः ॥
देशस्थितिः पूर्वकृता चरितं समुदाहृतम् ।
अर्थानुरूपाः शपथाः स्मृताः सत्यधटादयः ॥
तेषामभावे राजाज्ञां निर्णयं तु विदुर्बुधाः ।

अनुमानमित्यादि । तर्कोनुमाने हेतुः इति मन्यन्त इत्यर्थः ।

बृहस्पतिः

धर्मेण व्यवहारेण चरित्रेण नृपाज्ञया ।
चतुःप्रकारोऽभिहितः सन्दिग्धेऽर्थे विनिर्णयः ॥

एतेषां च लक्षणान्याह

दोषकारी तु कर्तृत्वं धनस्वामी स्वयं धनम् ।
विवादे प्राप्नुयात्र धर्मेणैव विनिर्णयः ॥

दोषो हिंसा वाक्पारुष्यादिस्तत्कारी दोषकारी, स यस्मिन्विवादे व्यवहारे चरित्रराजशासननैरपेक्ष्येण धर्माभिमुखो धर्मार्भीतः सन् स्वकीयं दोषकर्तृत्वं स्वयमेवाङ्गीकरोति, यत्र च धनस्वामी व्यवहारादिप्रयासमन्तरेण धर्माभिमुखाद्व्यापहारिणः स्वकीयं धनं लभते, स धर्मो नाम निर्णय इत्यर्थः ।

स्मृतिशास्त्रं तु यत्किञ्चित्प्रथितं धर्मसाधकैः ।
कार्याणां निर्णयार्थं तु व्यवहारः स्मृतो हि सः ॥

धर्मशास्त्रोदीरितभाष्यान्तरानुसारेण निर्णयो व्यवहारो नाम निर्णय इत्यर्थः ।

यद्यदाचर्यते येन धर्म्यं वाऽधर्म्यमेव वा ।
देशस्याचरणान्नित्यं चरित्रं तत्प्रकीर्तितम् ॥

तदनुसारी चरितनिर्णयोऽपि तथैव प्रकीर्तित इत्यभिप्रायः ।

न्यायशास्त्रविरोधेन देशदृष्टेस्तथैव च ।
यं धर्मं स्थापयेद्राजा न्यायं तद्राजशासनम् ॥

न्यायशास्त्रविरोधेन देशदृष्टेः प्रमाणविरुद्धदेशाचारेणेत्यर्थः ।

धर्मं च व्यवहारं च चरित्रं चापि लोपयेत् ।
स्थित्यै यत्स्थापयेद्राजा धर्म्यं तद्राजशासनम् ॥

चरित्रं चापि लोपयन् चरित्रमपि त्यजन्नित्यर्थः । अत्रैकैकप्रकारस्य पुनर्द्वैविध्यमाह बृहस्पतिः

एकैको द्विविधः प्रोक्तः क्रियाभेदान्मनीषिभिः ।
अपराधानुसारेण दण्डोऽत्र परिकल्पितः । इति ।

द्वैविध्यं चात्रैव दर्शितम्

सम्यग्विचार्य कार्यं तु युक्त्या संपरिकल्पितम् ।
परीक्षितं च शपथैः स ज्ञेयो धर्मनिर्णयः ॥
प्रतिवादी प्रपद्येत यत्र धर्म्यः स निर्णयः ।
दिव्यैर्वा शोधितः सम्यक् द्वितीयः स उदाहृतः ॥

सह तत्त्वानुसारेण कृतः प्रथमो धर्माख्यनिर्णयः । विना तत्त्वानुसारेण सत्योत्तरेण वा दिव्यप्रमाणेन कृतो द्वितीय इत्यर्थः ।

प्रमाणैर्निश्चितो यस्तु व्यवहारः स उच्यते ।
वाक्छलानुत्तरत्वेन द्वितीयः प्रकीर्तितः ॥

प्रमाणमत्र मानुषं विवक्षितम् । दिव्यनिश्चयस्य धर्मनिर्णयकोटित्वात् । वाक्छलेति । वाक्छलानुत्तरत्वेन वाक्छलेनानुत्तरत्वेन वा द्विः निश्चितो द्वितीयो व्यवहार इत्यर्थः ।

अनुमानेन निर्णीतं चरित्रमिति कथ्यते ।
देशस्थित्या द्वितीयस्तु शास्त्रविद्भिरुदाहृतः ॥

अनुमानं लिङ्गमुल्काहस्तत्वादि ।

प्रमाणसहिताद्यस्तु राजाज्ञा निर्णयः स्मृतः ।
शास्त्रसभ्यविरोधेन तथाऽन्यः परिकीर्तितः ॥

प्रमाणसहिता राजाज्ञा आद्यो निर्णय इत्यन्वयः । शास्त्रसभ्यविरोधेन शास्त्राणां सभ्यानां च परस्परं विपत्तौ । केचित्तु 'प्रमाणरहितो यस्तु राजाज्ञो निर्णयः स्मृतः' इति पठन्ति । तत्र प्रमाणपदं प्रागुदाहृतलेख्यासवचनोक्तहेतुचरितशपथानामुपलक्षणम् । तैर्नैर्रहितो राजाज्ञानिर्णयः । एतेनेतदुक्तं भवति–यत्र लिखितादिशपथान्तक्रियाभावस्तत्र शास्त्राविरुद्धो राजाख्यो निर्णयो भवति । लिखितादीनभिधाय 'तेषामभावे राजाज्ञे'ति प्रागुदाहृतवचनात् ।

नारदः

तत्र सत्ये स्थितो धर्मो व्यवहारस्तु साक्षिषु ।
चारित्रं पुस्तकरणे राजाज्ञायां तु शासनम् ॥

बृहस्पतिः

य एवं वेत्ति नृपतिर्निर्णयं तु चतुर्विधम् ।
सोऽस्मिँल्लोके यशः प्राप्य याति शक्रसलोकताम् ॥ इति ।

---

## अथ निर्णयबलाबलम्

तत्र नारदः

धर्मश्च व्यवहारश्च चरित्रं राजशासनम् ।
चतुष्पाद्व्यवहारोऽयमुत्तरः पूर्वबाधकः ॥

उत्तरः पूर्वबाधक इति । धर्मबाधको व्यवहारः, तद्बाधकं चरित्रं, एतद्बाधकं राजशासनमित्यर्थः ।

व्यवहारस्य स्वरूपनिरूपणपूर्वकं धर्मबाधकत्वमाह बृहस्पतिः

शास्त्रं केवलमाश्रित्य क्रियते यत्र निर्णयः ।
व्यवहारः स विज्ञेयो धर्मस्तेनावहीयते ॥

धर्मोऽत्र धर्मशब्दवाच्यो निर्णयः । तेन व्यवहारेण । अवहीयते बाध्यते । अत्र यद्यपि युक्त्यादिभिः सम्यग्विचारितकार्यनिर्णयस्य दिव्यनिर्णीतस्यापि धर्मशब्दवाच्यत्वं तथापि पूर्वस्यैव बाध्यत्वम्, न दिव्यनिर्णीतस्य ।

तथा च कात्यायनः

युक्तियुक्तं तु कार्यं यद्दिव्यं यत्र तु वर्जितम् ।
धर्मस्तु व्यवहारेण बाध्यते तत्र नान्यथा ॥ इति ।

बृहस्पतिः

देशस्थित्यनुमानेन नैगमानुमतेन च ।
क्रियते निर्णयस्तत्र व्यवहारस्तु बाध्यते ॥

नैगमाः पौरवणिजः । अत्र न सर्वत्र व्यवहारश्चरित्रेण बाध्यते, किन्तु क्वचिदित्याह

कात्यायनः

प्रतिलोमप्रसूतेषु तथा दुर्गनिवासिषु ।
विरुद्धं नियतं प्राहुस्तं धर्मेण विचालयेत् ॥

निर्णयं तु यदा कुर्यात्तेन धर्मेण पार्थिवः ।
व्यवहारश्चरित्रेण तदा तेनैव बाध्यते ॥

प्रतिलोमप्रसूतेषु संकरोत्पन्नेषु । विरुद्धं शास्त्रविरुद्धम् । नियतं पारम्परितम् । तेन धर्मेण देशाचारस्वरूपेण । स विरोधी व्यवहारो बाध्यते ।

**बृहस्पतिः**

विहाय चरिताचारं यत्र कुर्यात्पुनर्नृपः ।
निर्णयं सा तु राजाज्ञा चारित्र्यं बाध्यते तया ॥

चरिताचारं पारम्पर्यागताचारम् । अत्र चरित्रस्य बाध्यत्वं न्यायविरुद्धस्यैव, नान्यस्य । तथोक्तं **कात्यायनेन**

विरुद्धं न्यायतो यत्तु चरित्रं बाध्यते नृपैः ।
एवं तत्र निरस्तं तु चरित्रं तु नृपाज्ञया ॥ इति ।

यत्र तु न्याययोः शास्त्रयोर्वा परस्परं विरोधस्तत्रापि राजाज्ञयैवेति प्रागुक्तमेव । अन्ये तु 'धर्मश्च व्यवहारश्चे'त्यादौ उत्तरोत्तरस्य पूर्वपूर्वबाधकत्वं न सार्वत्रिकम्, किन्तु काचित्कमित्याहुः । यथा केनचिदुत्कृष्टेनान्तःपुरचारिणा मोहात्कथंचिन्नृपकलत्रादेः केलिभूषणवासःस्पर्शादि कृत्वाऽभियुक्तो भुजादिभङ्गभयादपलपति । तत्र तद्वृत्तान्तविदोऽपि राज्ञा साक्षित्वेन पृष्टाः सन्तो

वर्णिनां हि वधो यत्र तत्र साक्ष्यनृतं वदेत् ।

इति वचनमाकलय्यास्य वधो मा भूदिति नायमपराधस्य कर्तेति मिथ्या साक्ष्यं यदा ब्रूयुस्तत्र धर्मो व्यवहारेण बाध्यते । व्यवहारोऽपि कचिच्चरित्रेण बाध्यते । यथा । यदा परदाराभिगमनं कृतमनेनात्र साक्षिणोऽपि सन्तीति केनचिदाभीरादिनाऽभियुक्तो ब्रूते सत्यमेतत्साक्षिभाषितं च । तथापि नाहं दण्डनीयश्चरित्रबलादिदं कृतं निवेशितं च पुस्तके राज्ञेति तत्र चरित्रेण व्यवहारो बाध्यते । युक्तं चात्र चरित्रेण बाधनं व्यवहारस्य ।

ग्रामगोष्ठपुरश्रेणिसार्थसेनानिवासिनाम् ।
व्यवहारश्चरित्रेण निर्णेतव्यो बृहस्पतिः ॥

इति वचनात् । कचिच्चरित्रमपि राजाज्ञया बाध्यते । यथा—कुलगृहाभ्यन्तरे केनचिद्राजपुरुषेण प्रवेष्टव्यमितीदृशं चरित्रं कृतम् । ततो राजा कश्चिदपराधिनं कुलगृहं प्रविष्टं ज्ञात्वा स्वपुरुषमादिशति, एतद्गृहं प्रविश्यापराधिनमानयेति—तत्र चरित्रमपि राजशासनेन बाध्यते, दुष्टनिग्रहस्यावश्यकर्तव्यत्वेन चरित्रतो राजशासनस्याधिकत्वात् । योजयन्ति चास्मिन्नर्थे 'शास्त्रं केवलमाश्रित्ये'त्यादीनि प्रागुदाहृतबृहस्पतिवचनानीति ।

—०—

## अथ निर्णीतकृत्यम्

तत्र नारदः

स्वयमभ्युपपन्नोऽपि स्वचर्यावसितोऽपि सन् ।
क्रियावसन्नोऽप्यर्हेत परं सभ्यावधारणम् ।
सभ्यैरवहितः पश्चाद्राज्ञा शास्यश्च शास्त्रतः ॥ इति ।

स्वयमभ्युपपन्नः आत्मनैवाङ्गीकृतपराजयः । स्वचर्यावसितः स्वचेष्टया वैवर्ण्यस्वेदकम्पादिकाया भङ्गितयाऽवधारितः । क्रियावसन्नः क्रियया साक्ष्यादिकया प्राप्तावसादः, प्राप्तपराजय इति यावत् । परं सभ्यावधारणम् । अनन्तरं सभ्यानां समवेतानामेकमत्येन पराजितोऽयमिति कीर्तनम् ।

याज्ञवल्क्यः

निह्नवे भावितो दद्याद्धनं राज्ञे च तत्समम् ।
मिथ्याभियोगी द्विगुणमभियोगाद्धनं हरेत् ॥

वादिनाऽभियोगे कृते प्रतिवादी यद्यपह्नुते तदा वादिना साक्ष्यादिभिरङ्गीकारितः प्रकृतं धनमर्थिने तत्समं राज्ञे दण्डं दद्यात् । अथ कथमपि वाद्यभियुज्य साधयितुं न शक्नोति तदा स एव मिथ्यावादीति प्रकृतधनद्विगुणं धनं राज्ञे च दण्डं दद्यात् । कारणप्राङ्न्यायोत्तरयोरपीदमेव योज्यम् । तत्र वाद्येवापह्नववादीति प्रतिवादिना भावितो राज्ञे प्रकृतधनसमं दण्डं दद्यात् । अथ प्रतिवादी कारणं प्राङ्न्यायं भवितुं न शक्नोति तदा स एव मिथ्याभियोगीति राज्ञे द्विगुणं दण्डं दद्यात् । अर्थिने च प्रकृतमर्थम् । सम्प्रतिपत्त्युत्तरे तु दण्डाभाव एव । इदं तु ऋणादानविषयमेव । पदान्तरे तु तत्र तत्र दण्डप्रतिपादनात् साहसादिषु चास्यासंभवाच्च ।

मनुः

अर्थेऽपव्ययमानं तु करणेन विभावितम् ।
दापयेद्धनिकस्यार्थं दण्डलेशं च शक्तितः ॥

अर्थे अर्थविषये । अपव्ययमानं निह्नुवानम् । करणेन लिखितादिक्रियायाम् । दण्डलेशं च । यावता पुनरपह्नवं न कुर्यात् । शक्तितो वित्तानुसारेण स एव

यो यावन्निह्नुवीतार्थं मिथ्या यावति वा वदेत् ।
तौ नृपेण ह्यधर्मज्ञौ दाप्यौ तद्द्विगुणं दमम् ॥

इदं चाशयदोषमूलकविवादप्रवृत्तविषयम् । आशयदोषव्यतिरेकेण तु दारिद्र्यविस्मरणादिना अपह्नवविषये दण्डलेशं च शक्तित इत्यवगन्तव्यम् ।

याज्ञवल्क्यः

ज्ञात्वाऽपराधं देशं च कालं बलमथापि च ।
वयः कर्म च वित्तं च दण्डं दण्ड्येषु पातयेत् ॥

**व्यासः**

निह्नुते तु यदा वादी स्वयं तत्प्रतिपद्यते ।
ज्ञेया सा प्रतिपत्तिस्तु तत्रार्धो विनयः स्मृतः ॥

यत्र पूर्वंनिह्नुते पश्चात्प्रतिपद्यते तत्रार्धो दण्ड इत्यर्थः । एवं च पूर्वमेव सम्प्रतिपत्तौ दण्डाभाव एवेत्युक्तं भवति । दण्डस्यापराधाधीनत्वात्तत्र चापराधाभावादिति । शूद्रादीनामुत्कृष्टमिथ्याभियोगे दण्डमाह **नारदः**

मिथ्याभियोगिनो ये स्युर्द्विजानां शूद्रयोनयः ।
तेषां जिह्वां समुत्कृत्य राजा शूले निवेशयेत् ॥

**याज्ञवल्क्यः**

निह्नुते लिखितं नैकमेकदेशविभावितः ।
दाप्यः सर्वं नृपेणार्थं न ग्राह्यस्त्वनिवेदितः ॥

अस्यार्थः—नैकं अनेकं सुवर्णरजतताम्रादिप्रतिज्ञाकाले यदर्थिना लेखितं प्रत्यर्थी निह्नुते सर्वस्मिन्प्रतिज्ञाते मिथ्यैतदिति प्रतिवक्ति। अर्थिना सुवर्णाद्यन्यतमवस्तु साक्ष्यादिभिरङ्गीकारितः । प्रत्यर्थी सर्वमेव प्रतिज्ञातार्थं नृपेणार्थिने दाप्यः । तत्रापि न ग्राह्यस्त्वनिवेदितः । पूर्वप्रतिज्ञाकाले अनिवेदितः अनुपन्यस्तो मया तदा विस्मृत इति पश्चान्निवेद्यमानोऽपि नृपेण न दाप्यः ।

**नारदः**

अनेकार्थाभियुक्तेन सर्वार्थव्यपलापिना ।
विभावितैकदेशेन देयं यदभियुज्यते ॥

**कात्यायनो**ऽपि

सर्वापलापं यः कृत्वा मिथ्याऽल्पमपि संवदेत् ।
सर्वमेव तु दाप्यः स्यादभियुक्तो बृहस्पतिः ॥

अत्र बृहस्पतिग्रहणमादरार्थम्, **नारदयाज्ञवल्क्या**दिभिरप्यभिहितत्वात् । न केवलं वाचनिकीयं व्यवस्था, किन्तु एकदेशे प्रतिवादिनो मृषावादित्वे निश्चयेनापरभागेऽपि सत्यवादित्वा(?)सम्भवादेवं तर्कापरनामसंभावनाप्रत्ययानुगृहीत**याज्ञवल्क्या**दिवचनान्नृपेण सर्वमप्यर्थं दापनीय इति निर्णयः। एवं च तर्कानुगृहीतवचनानुसारेण निर्णये क्रियमाणे क्वचिद्वस्तुतोऽन्यथात्वेऽपि न निर्णेतॄणां दोषभाक्त्वम् । 'न्यायाधिगमे तर्कोऽभ्युपाय' इत्याद्यभिधाय 'तस्माद्राजाचार्यावनिन्द्यादि'ति **गौतमेनो**पसंहृतत्वात् । न त्वेतेषां वचनानां प्रागुक्तार्थाभिधाने धर्मनिर्णायकता न स्यात् । 'छलं निरस्य भूतेने'ति वचनादेतेषां तु छलानुसारेणैव निर्णयकत्वात् । सत्यम्,

केवलं शास्त्रमाश्रित्य क्रियते यत्र निर्णयः ।
व्यवहारः स विज्ञेयो धर्मस्तेनावहीयते ॥

इति प्रागुदाहृत**बृहस्पति**वचनेन धर्मनिर्णयस्य बाधितत्वात् । यत्तु

अनेकार्थाभियोगेऽपि यावत्संसाधयेद्धनी ।
साक्षिभिस्तावदेवासौ लभते साधितं धनम् ॥

इति **कात्यायन**वचनं, तत्पुत्रादिदेयपित्राद्यृणविषयम्; तत्र वक्त्रर्थाभियोगे न जानामीत्याद्युत्तरं दद्त्पुत्रादिर्न निह्नववादी त्वेकदेशविभावितोऽपि न कश्चिदसत्यवादीति निह्नुते लिखितं नैकमित्यादि शास्त्रं न प्रवर्तते । तत्र तत्र त्वनिह्नवाभावादिति । अन्ये त्वाहुः—पात्रैकदेशग्रहणविभाधनं सदनैक्यदेशग्रहणाविनाभूतं तत्र 'निह्नुते लिखितं'मित्यादि द्रष्टव्यम् । यथा सुवर्णाद्यनेकवस्तुसहितं पात्रं चौरेणापहृतं तत्रैकदेशस्यापि सुवर्णाद्यन्यतमस्य विभावने सर्वमेव देयम् । तदितरविषये **कात्यायन**वचनादर इति । अपरे पुनः सपणविवादे एकदेशविभावनेऽपि सकलं मया देयमिति यत्र वाग्यङ्गीकरोति तद्विषयं **याज्ञवल्क्या**दिवचनमित्याहुः । केचित्तु यत्र दुष्टाशयत्वस्य बाढ्यं तद्विषयं **याज्ञवल्क्य**वचनं, **कात्यायन**वचनं तु तद्विपरीतविषयं व्याचक्षते ।

**याज्ञवल्क्यः**

सपणश्चेद्विवादः स्यात्तत्र हीनं तु दापयेत् ।
दण्डं च स्वपणं चैव धनिने धनमेव च ॥

सपण इति । पणनं पणः, पणेन सह वर्तत इति सपणः । हीनं पराजितं दण्डं तत्तत्प्रकरणोक्तम् । स्वपणं स्वकृतपणं राज्ञे दापयेत् । धनिने धनं दापयेद्राजा यत्र तु कोपावेशाद्विना यद्यहमत्र पराजितो भवामि तत्ते यद्धनं ददामीत्यादि प्रतिजानीते, इतरस्तु न किञ्चित्तत्रापि पणप्रतिज्ञावाद्येव हीनत्वे सपणं दण्डं दाप्यः । इतरस्तु हीनो दण्डमेव दाप्यः । यत्र त्वेकोऽधिकं इतरस्तु न्यूनं पणं प्रतिजानीते, इतरस्तु न किञ्चित्तत्रापि पणप्रतिज्ञावाद्येव हीनत्वे सपणं दण्डं दाप्यः । इतरस्तु हीनो दण्डमेव दाप्यः । यत्र त्वेकोऽधिकं इतरस्तु न्यूनं पणं प्रतिजानीते तत्रापि स्वकृतमेव पणं च दण्डं दाप्यः । अत्र सपणश्चेदिति वदता पणरहितोऽपि विवादो दर्शितः ।

**बृहस्पतिः**

अपराधानुरूपश्च दण्डोऽत्र परिकल्पितः ॥ इति ।

इति निर्णीतकृत्यम्

## अथ जयिप्रतिपत्तिः

तत्र जयिशब्दार्थमाह बृहस्पतिः

प्रतिज्ञाभावनाद्वादी प्राड्विवाकादिपूजनात् ।
जयपत्रस्य चादानाज्जयी लोके निगद्यते ॥

भावनं स्थापनम् । प्राड्विवाकादिपूजनं प्राड्विवाकादिकृतः सत्कारः । आदानं ग्रहणम् । जयपत्रदानं च राज्ञा कार्यम् ।

तथाह व्यासः

व्यवहारान् स्वयं दृष्ट्वा श्रुत्वा वा प्राड्विवाकतः ।
जयपत्रं ततो दद्यात्परिज्ञानाय पार्थिवः ॥

जयपत्रं च वादिसाधितार्थप्रदापनादिपुरःसरं देयम् ।

तथा च कात्यायनः

सिद्धेनार्थेन संयोज्यो वादी सत्कारपूर्वकम् ।
लेख्यं तदर्थसंयुक्तं तस्मै दद्याच्च पार्थिवः ॥

बृहस्पतिः

पूर्वोत्तरक्रियायुक्तं निर्णयान्तं यदा नृपः ।
प्रदद्याद्वादिने लेख्यं जयपत्रं तदुच्यते ॥

पूर्वोत्तरक्रियायुक्तमिति वृत्तार्थोपलक्षणार्थम्, यतः स एव

यद्वृत्तं व्यवहारेषु पूर्वपक्षोत्तरादिकम् ।
क्रियावधारणोपेतं जयपत्रेऽखिलं लिखेत् ॥

जयपत्रलेखनविस्तरस्तु लिखितप्रकरणेऽवगन्तव्यः ।

कात्यायनः

निरस्तं लिखितं यत्तु तत्तु सद्यो विनाशयेत् ।
पश्चात्कारक्रिया वाथ निरस्येत्तं न संशयः ॥
निरस्ता तु क्रिया यत्र प्रमाणेनैव वादिना ।
पश्चात्कारो भवेत्तत्र न सर्वासु विधीयते ॥
दासस्त्रीभूगृहारामलेखकानां पराजये ।
एतेष्वेव सदा देयः पश्चात्कारस्तु पार्थिवैः ॥ इति ।

पश्चात्कारक्रिया निर्णयानन्तरक्रिया जयपत्रादिका । प्रमाणं साक्ष्यादिक्रिया । एतेष्वेवेत्युपलक्षणम् ।

———o———

## अथ पुनर्न्यायः

तत्र नारदः

स्त्रीषु रात्रौ बहिर्ग्रामादन्तर्वेश्मन्यरातिषु ।
व्यवहारः कृतोऽप्येषु पुनः कर्तव्यतामियात् ॥ इति ।

रहसि स्त्र्यादिभिर्निर्णीतो व्यवहारः पुनर्विचारणीयः, तत्राज्ञानपक्षपातयोः सम्भवात् । तथा बलात्कारादिना निर्णीतोऽपि व्यवहारो निवर्तनीयः पुनर्निर्णेतव्यश्च ।

याज्ञवल्क्यः

बलोपाधिविनिर्वृत्तान् व्यवहारान्निवर्तयेत् । इति ।

ततः पश्चाद्व्यवहारं प्रवर्तयेदित्यभिप्रायः, व्यवहारकर्तृवैगुण्येऽपि व्यवहारो निवर्तनीयः । तथा च स एव

स्त्रीनक्तमंतरागारबहिःशत्रुकृतांस्तथा ।
मत्तोन्मत्तार्तव्यसनिबालभीतादियोजितः ।
असंबद्धकृतश्चैव व्यवहारो न सिध्यति ॥ इति ।

नक्तं रात्रावस्त्रीभिरपि । अन्तरागारे गृहाभ्यन्तरे । बहिर्ग्रामादिभ्यः । शत्रुभिश्च कृतान् व्यवहारान् निवर्तयेदिति सम्बन्धः । असम्बद्धः अर्थिप्रत्यर्थिसम्बन्धरहितः ।

मनुः

तीरितं चानुशिष्टं च यत्र क्वचन यद्भवेत् ।
कृतं तद्धर्मतो विद्यान्न तद्भूयो निवर्तयेत् ॥ इति ।

तीरितमिति । 'पारतीर कर्मसमाप्तौ' इत्यस्य निष्ठान्तस्य रूपम् । तेन निर्णीतं समापितमित्यर्थः । अनुशिष्टं साक्षिवाक्यादवधारितम् । एतच्च स्त्रीकृतत्वादित्वनिर्वृत्तिहेत्वभावविषय एव उत्सर्गमात्रमिति बोद्धव्यम् । अत एवैतस्यापवादमाह बृहस्पतिः

कुलादिभिर्निश्चितेऽपि न संतोषं गतस्तु यः ।
विचार्य तत् कृतं राजा कुकृतं पुनरुद्धरेत् ॥

विहितनिर्णेतृनिर्णीतेऽपि व्यवहारे समाप्तिरन्यायेनेति यदि वादी मन्यते तदा पुनर्न्यायः कार्यः । अन्यथाद्रष्टृत्वनिश्चये पूर्वन्यायदर्शिनो दण्डनीयाः । तथा च नारदः

दुर्दृष्टे व्यवहारे तु सभ्यास्ते दण्डमाप्नुयुः ।
नहि जातु विना दण्डं कश्चिन्मार्गेऽवतिष्ठते ॥ इति ।

जेतुरन्यथादर्शनाप्रयोजकत्वे सभ्या एव दण्डनीया इत्यभिप्रायः । तत्प्रयोजकत्वे तु सोऽपि दण्ड्यः ।

अत एव बृहस्पतिः

निश्चित्य बहुभिः सार्धं ब्राह्मणैः शास्त्रपारगैः ।
दण्डयेज्जयिना साकं पूर्वसभ्यांस्तु दोषिणः ॥

जयिना साकं सभ्यदण्डनं सभ्यनिरूपणप्रस्तावोक्तविधिना कार्यम् ।

तथा च याज्ञवल्क्यः

दुर्दृष्टांस्तु पुनर्दृष्ट्वा व्यवहारान्नृपेण तु ।
सभ्याः सजयिनो दण्ड्या विवादाद्द्विगुणं दमम् ॥ इति ।

दुर्दृष्टान् सजयिसभ्यदोषेणेत्यर्थः । यदा तु साक्षिदोषेण व्यवहारस्य दुर्दृष्टता तदा साक्षिदण्डप्रकरणोक्तविधिना साक्षिण एव दण्ड्याः । न जयी नापि सभ्याः । यदा पुनः स जयी साक्षिदोषेण तदा त एव दण्ड्याः । न सभ्या इत्यभिप्रायः । अयं च वाद्यसंतोषवशात् प्रवृत्तः पुनर्न्यायः पूर्वं कृतस्य निर्णयस्याभासत्वनिश्चये । अनाभासत्वे तु न्यायस्य नारदेनोक्तं द्रष्टव्यम् । यथा

तीरितं चानुशिष्टं च यो मन्येत विधर्मतः ।
द्विगुणं दण्डमास्थाय तत्कार्यं पुनरुद्धरेत् ॥

विधर्मतः धर्मशास्त्रविरोधतः । अत्र कृतमिति शेषः । यो वादी सम्यग्निर्णीतमप्यौद्धत्याद्धर्मशास्त्रविरोधेन कृतमिति मन्यत इत्यर्थः ।

याज्ञवल्क्यः

यो मन्येताजितोऽस्मीति न्यायेनापि पराजितः ।
तमायान्तं पुनर्जित्वा दापयेद्द्विगुणं दमम् ॥

अयं च सदण्डः पुनर्न्यायो नृपसहित एव सभान्तरे, नृपस्यैव दण्डग्रहणाधिकारात् । नृपरहिते तु सभान्तरे दण्डविहीन एव पुनर्न्यायः ।

अत एव स्मृत्यन्तरे

न्यायापेतं यदन्येन राज्ञा ज्ञानकृतं भवेत् ।
तदप्यन्यायविहितं पुनर्न्याये निवेशयेत् ॥ इति ।

यच्चोक्तं पितामहेन

ग्रामे दृष्टः पुरं यायात् पुरे दृष्टस्तु राजनि ।
राज्ञा दृष्टः कुदृष्टो वा नास्ति तस्य पुनर्भवः ॥

इति, तदुत्कृष्टराजान्तरसभाविषयम् ।

नारदः

साक्षिसभ्यावसन्नानां दूषणे दर्शनं पुनः । इति ।

अस्यार्थः—साक्षिसभ्यद्वारेण प्राप्तावसादानां साक्षिसभ्यदूषणे ज्ञाते सति पुनर्व्यवहारदर्शनं कार्यमिति। पुनर्न्यायस्य कश्चिदपवादमाह स एव

स्वचर्यावसितानां तु प्रोक्तः पौनर्भवो विधिः। इति।

स्वचर्यावसिताः स्वव्यापारेण परस्परविरुद्धभाषणादिना पराजिताः। पौनर्भवो विधिः पुनर्न्यायः।

**बृहस्पतिः**

पलायनानुत्तरत्वादन्यपक्षाश्रयेण च।
हीनस्य गृह्यते वादो न स्ववाक्यजितस्य च॥

**अत्र मनुः**

अमात्याः प्राड्विवाको वा ये कुर्युः कार्यमन्यथा।
तत्स्वयं नृपतिः कुर्यात्तान्सहस्रं च दण्डयेत्॥ इति।

इति पुनर्न्यायः

---

## अथ कृतनिवृत्तिः

तत्र **मनुविष्णू**

यस्मिन्यस्मिन्विवादे तु कौटसाक्ष्यं कृतं भवेत्।
तत्तत्कार्यं निवर्तेत कृतं चाप्यकृतं भवेत्॥

**मनुनारदौ**

सत्या न भाषा भवति यद्यपि स्यात्प्रतिष्ठिता।
बहिश्चेद्भाष्यते धर्मान्नियताद्व्यावहारिकात्॥

नियतव्यावहारिकधर्मबाह्यविषयया भाषा लेख्यादिप्रमाणवत्तया प्रतिष्ठितापि न सत्या भवति। योऽनयाऽर्थः प्रतिपाद्यते नासावनुष्ठेय इत्यर्थः। यथा सान्धयं कश्चिदभियुंक्ते अनेन मे सर्वस्वं दत्तमित्येवमादिः।

**नारदः**

यद्बालः कुरुते कार्यमस्वतन्त्रः स एव च।
कामक्रोधाभिभूतार्तभयव्यसनपीडिताः।
रागद्वेषपरीताश्च ज्ञेयास्त्वप्रकृतिं गताः॥

अस्वतन्त्रग्रहणाद्बाललाभेऽपि बालग्रहणं पित्रोरभावेऽपि तस्यास्वातन्त्र्यप्रतिपादनार्थम्।

अत एव बृहस्पतिः

निश्चित्य बहुभिः सार्धं ब्राह्मणैः शास्त्रपारगैः ।
दण्डयेज्जयिना साकं पूर्वसभ्यांस्तु दोषिणः ॥

जयिना साकं सभ्यदण्डनं सभ्यनिरूपणप्रस्तावोक्तविधिना कार्यम् ।

तथा च याज्ञवल्क्यः

दुर्दृष्टांस्तु पुनर्दृष्ट्वा व्यवहारान्नृपेण तु ।
सभ्याः सजयिनो दण्ड्या विवादाद्द्विगुणं दमम् ॥ इति ।

दुर्दृष्टान् सजयिसभ्यदोषेणेत्यर्थः । यदा तु साक्षिदोषेण व्यवहारस्य दुर्दृष्टता तदा साक्षिदण्डप्रकरणोक्तविधिना साक्षिण एव दण्ड्याः । न जयी नापि सभ्याः । यदा पुनः स जयी साक्षिदोषेण तदा स एव दण्ड्यः । न सभ्या इत्यभिप्रायः । अयं च वाद्यसंतोषवशात् प्रवृत्तः पुनर्न्यायः पूर्वं कृतस्य निर्णयस्याभासत्वनिश्चये । अनाभासत्वे तु न्यायस्य नारदेनोक्तं द्रष्टव्यम् । यथा

तीरितं चानुशिष्टं च यो मन्येत विधर्मतः ।
द्विगुणं दण्डमास्थाय तत्कार्यं पुनरुद्धरेत् ॥

विधर्मतः धर्मशास्त्रविरोधतः । अत्र कृतमिति शेषः । यो वादी सम्यङ्निर्णीतमप्यौद्धत्याद्धर्मशास्त्रविरोधेन कृतमिति मन्यत इत्यर्थः ।

याज्ञवल्क्यः

यो मन्येताजितोऽस्मीति न्यायेनापि पराजितः ।
तमायान्तं पुनर्जित्वा दापयेद्द्विगुणं दमम् ॥

अयं च सदण्डः पुनर्न्यायो नृपसहित एव सभान्तरे, नृपस्यैव दण्डग्रहणाधिकारात् । नृपरहिते तु सभान्तरे दण्डविहीन एव पुनर्न्यायः ।

अत एव स्मृत्यन्तरे

न्यायापेतं यदन्येन राज्ञा ज्ञानकृतं भवेत् ।
तदप्यन्यायविहितं पुनर्न्याये निवेशयेत् ॥ इति ।

यथोक्तं पितामहेन

ग्रामे दृष्टः पुरं यायात् पुरे दृष्टस्तु राजनि ।
राज्ञा दृष्टः कुदृष्टो वा नास्ति तस्य पुनर्भवः ॥

इति, तदुत्कृष्टराजान्तरसभाविषयम् ।

नारदः

साक्षिसभ्यावसन्नानां दूषणे दर्शनं पुनः । इति ।

अस्यार्थः--साक्षिसभ्यद्वारेण प्राप्तावसादानां साक्षिसभ्यदूषणे ज्ञाते सति पुनर्व्यवहारदर्शनं कार्यमिति । पुनर्न्यायस्य कचिदपवादमाह स एव

स्वचर्यावसितानां तु प्रोक्तः पौनर्भवो विधिः । इति ।

स्वचर्यावसिताः स्वव्यापारेण परस्परविरुद्धभाषणादिना पराजिताः । पौनर्भवो विधिः पुनर्न्यायः ।

**बृहस्पतिः**

पलायनानुत्तरत्वादन्यपक्षाश्रयेण च ।
हीनस्य गृह्यते वादो न स्ववाक्यजितस्य च ॥

अत्र **मनुः**

अमात्याः प्राड्विवाको वा ये कुर्युः कार्यमन्यथा ।
तत्स्वयं नृपतिः कुर्यात्तान्सहस्रं च दण्डयेत् ॥ इति ।

## इति पुनर्न्यायः

---

## अथ कृतनिवृत्तिः

तत्र **मनुविष्णू**

यस्मिन्यस्मिन्विवादे तु कौटसाक्ष्यं कृतं भवेत् ।
तत्तत्कार्यं निवर्तेत कृतं चाप्यकृतं भवेत् ॥

**मनुनारदौ**

सत्या न भाषा भवति यद्यपि स्यात्प्रतिष्ठिता ।
बहिश्चेद्भाष्यते धर्मान्नियताद्व्यावहारिकात् ॥

नियतव्यावहारिकधर्मबाह्यविषयया भाषा लेख्यादिप्रमाणवत्तया प्रतिष्ठिताऽपि न सत्या भवति । योऽनयाऽर्थः प्रतिपाद्यते नासावनुष्ठेय इत्यर्थः । यथा सान्वयं कश्चिदभियुंक्ते अनेन मे सर्वस्वं दत्तमित्येवमादिः ।

**नारदः**

यद्बालः कुरुते कार्यमस्वतन्त्रः स एव च ।
कामक्रोधाभिभूतार्तभयव्यसनपीडिताः ।
रागद्वेषपरीताश्च ज्ञेयास्त्वप्रकृतिं गताः ॥

अस्वतन्त्रग्रहणाद्बाललाभेऽपि बालग्रहणं पित्रोरभावेऽपि तस्यास्वातन्त्र्याभावादिनायम् ।

**मनुः**

योगाधमनविक्रीतं योगदानप्रतिग्रहम् ।
यत्र वाप्युपधिं पश्येत्तत्सर्वं विनिवर्तयेत् ॥

योगश्छद्म, स च परकीयधनस्यात्मीयत्वापादकहेत्वभावेऽपि याचितकादिना स्वहस्तगतत्वादिसम्बन्धः । आधमनं बन्धककरणम् । योगेनाधमनं योगाधमनम् । एवं योगविक्रीतादावपि विज्ञेयो विग्रहः । उपधिश्छलम् । तथा

मत्तोन्मत्तार्ताध्यधीनैर्बालेन स्थविरेण वा ।
असम्बद्धकृतश्चैव व्यवहारो न सिध्यति ॥

अध्यधीनो दासः । असम्बद्धः व्यवहारानुकूलविषयसम्बन्धशून्यः ।

**नारदः**

तथा दासकृतं कार्यमकृतं परिचक्षते ।
अन्यत्र स्वामिसन्देशान्न दासः प्रभुरात्मनः ॥
पुत्रेण च कृतं कार्यं यत्स्यादच्छन्दतः पितुः ।
तदप्यकृतमेवाहुर्दासः पुत्रः स्मृतौ समौ ॥ इति ।

अच्छन्दतः इच्छां विना । इदं च कुटुम्बभरणव्यतिरिक्तकार्यविषयम् । एतच्च 'कुटुम्बार्थेऽध्यधीनोऽपी'त्यत्र वक्ष्यते ।

**कात्यायनः**

न क्षेत्रगृहदासानां दानाधमनविक्रयाः ।
अस्वतन्त्रकृताः सिद्धिं प्राप्नुयुर्नानुवर्णिताः ॥

नानुवर्णिताः स्वतन्त्रेण अननुमताः ।

अत्र विशेषमाह **नारदः**

स्त्रीकृतान्यप्रमाणानि कार्याण्याहुरनापदि ।
विशेषतो गृहक्षेत्रदानाधमनविक्रयाः ॥
तान्येव तु प्रमाणानि भर्ता यद्यनुमन्यते ।
पुत्रः पत्युरभावे तु राजा च पतिपुत्रयोः ॥
कुले ज्येष्ठस्तथा श्रेष्ठः प्रकृतिस्थश्च यो मतः ।
तत्कृतं स्यात्कृतं कार्यं नास्वतन्त्रकृतं कृतम् ॥

अनापदीत्यत्रापद्यस्वतन्त्रकृतान्यपि प्रमाणानीत्यार्थिकोऽर्थः प्रत्येतव्यः । विशेषतो गृहक्षेत्रेत्यादिना पूर्वोक्तमत्रोच्यते । तेनायमर्थः—गृहक्षेत्रयोर्दानाधमनविक्रया आपद्यप्यस्वतन्त्रकृता सिध्यन्तीति । पतिपुत्रयोरित्यनेन सपत्नीपुत्रादयोऽप्युपलक्षणीयाः । तेन तेषामभावे च राजेति मन्तव्यम् । स्वतन्त्रप्रकृतिस्थकृतमपि पुत्रविक्रयादिकार्यं न सिध्यति । तस्य तत्र स्वातन्त्र्याभावात् ।

तथा च कात्यायनः

सुतस्य सुतदाराणां वशित्वमनुशासने ।
विक्रये चैव दाने च वशित्वं न सुते पितुः ॥ इति ।

अतः सुतविक्रयादिकार्यं स्वतन्त्रप्रकृतिस्थकृतमपि निवर्तनीयमित्यभिप्रायः । एकपुत्रविषयमेतदिति दत्ताप्रदानिकाख्यपदे वक्ष्यामः । एवमेकवारकृतैककर्तृकैककर्मकविक्रयादावपि पुनर्विक्रयादिवशित्वाभावान्न सिध्यतीत्याह याज्ञवल्क्यः

सर्वेष्वर्थविवादेषु बलवत्युत्तरा क्रिया ।
आधौ प्रतिग्रहे क्रीते पूर्वा तु बलवत्तरा ॥ इति ।

तत्रोत्तरा क्रयादिक्रिया निवर्तनीयेत्यभिप्रायः ।

मनुः

बलाद्दत्तं बलाद्भुक्तं बलाद्यच्चापि लेखितम् ।
सर्वान्बलकृतानर्थानकृतान्मनुरब्रवीत् ॥ इति ।



## अथ स्वतन्त्रास्वतन्त्रलक्षणम्

तत्र नारदः

स्वातन्त्र्यं तु स्मृतं ज्येष्ठे ज्यैष्ठ्यं गुणवयःकृतम् ।

तथा

अस्वतन्त्राः प्रजाः सर्वाः स्वतन्त्रः पृथिवीपतिः ।
अस्वतन्त्रः स्मृतः शिष्य आचार्ये तु स्वतन्त्रता ।
अस्वतन्त्राः स्त्रियः पुत्रा दासा यश्च परिग्रहः ॥

परिग्रह उपजीविजनः ।

स्वतन्त्रस्तत्र तु गृही यस्य तत्स्यात्क्रमागतम् ।
गर्भस्थैः सदृशो ज्ञेय आष्टमाद्वत्सराच्छिशुः ॥
बाल आषोडशाद्वर्षात्पौगण्डश्चेति कीर्तितः ।
परतो व्यवहारज्ञः स्वतन्त्रः पितरावृते ॥
जीवतोर्न स्वतन्त्रः स्याज्जरयापि समन्वितः ।
तयोरपि पिता श्रेयान् बीजप्राधान्यदर्शनात् ॥
अभावे बीजिनो माता तदभावे तु पूर्वजः ॥ इति ।

तयोः पित्रोः अभावे बीजिनो मातेत्यत्र यन्मातुः स्वातंत्र्यमुक्तं, तत्पुत्रानुमतिविषयं, 'तदभावे तु पूर्वजः' इत्यादिवचनात् 'पितरावृते' इत्यत्र पूर्वजादिकं विनाऽपीति मन्तव्यम् ।

कात्यायनः

पिताऽस्वतन्त्रः पितृमान् भ्राता भ्रातृव्य एव च ।
कनिष्ठो वाऽविभक्तस्वो दासः कर्मकरस्तथा ॥

पितृमान्पितापि न स्वतन्त्र इत्यर्थः । अविभक्तस्वः अविभक्तधनः ।

हारीतः

दानार्थे वा धनार्थे वा धर्मार्थे वा विशेषतः ।
आदाने वा विसर्गे वा न स्त्री स्वातन्त्र्यमर्हति ॥

अत्र स्वतन्त्रानुमतिं विना परतन्त्रकृतं राज्ञा निवर्तनीयमिति तात्पर्यम् । तदनुमतौ तु न निवर्तनीयम् । तथा च कात्यायनः

प्रमाणं सर्व एवैते पण्यानां क्रयविक्रये ।
यदि संव्यवहारं प्राक्कुर्वन्तो ह्यनुमोदिताः ॥

एते स्त्रीपुत्रभ्रातृदासादयः । तथा

क्षेत्रादीनां तथैव स्युर्भ्राता भ्रातुः सुतः सुतः ।
निसृष्टाः कृत्यकरणे गुरुणा यदि गच्छता ॥
निसृष्टार्थस्तु यो यस्मिन् तस्मिन्नर्थे प्रभुस्तु सः ।
तद्भर्ता तत्कृतं कार्यं नान्यथा कर्तुमर्हति ॥

बृहस्पतिः

यः स्वामिना नियुक्तस्तु धनाय व्ययपालने ।
कुशीदकृषिवाणिज्ये निसृष्टार्थस्तु स स्मृतः ॥
प्रमाणं तत्कृतं सर्वं लाभालाभव्ययोदयम् ।
स्वदेशे वा विदेशे वा स्वामी तु न विसंवदेत् ॥

मनुः

कुटुम्बार्थेऽध्यधीनोऽपि व्यवहारं यमाचरेत् ।
स्वदेशे वा विदेशे वा तं ज्यायान्न विचालयेत् ॥

ज्यायान् स्वतन्त्रः भर्तृप्रभृतिः ।

इति श्रीमन्महीमण्डलाखण्डलश्रीनागमल्लान्मजविषमप्रतिज्ञापरिपूरणपरायण-
कलिकालकर्णप्रतापलङ्केश्वरशरणागतराजवज्रपंजरपरमवैष्णवरिपुगज-
सिंहेत्यादिनिजबिरुदराजीविराजमानमानोन्नतमहाराजाधिराज-
श्रीपृथ्वीचन्द्रदेवविरचिते धर्मतत्त्वकलानिधौ महानिबन्धे
व्यवहारप्रकाशे निर्णयादिनिरूपणं नाम षष्ठ उल्लासः ॥

इति व्यवहारमातृका समाप्ता

---

# अथ विवादपदनिर्णयः

## ऋणादाने वृद्धिः

तत्र विवादपदान्याह **मनुः**

तेषामाद्यमृणादानं निक्षेपोऽस्वामिविक्रयः ।
सम्भूय च समुत्थानं दत्तस्यानपकर्म च ॥
वेतनस्यैव चादानं संविदश्च व्यतिक्रमः ।
क्रयविक्रयानुशयो विवादः स्वामिपालयोः ॥
सीमाविवादधर्मश्च पारुष्ये दण्डवाचिके ।
स्तेयं च साहसं चैव स्त्रीसंग्रहणमेव च ॥
स्त्रीपुंधर्मो विभागश्च द्यूतमाह्वय एव च ।
पदान्यष्टादशैतानि व्यवहारस्थिताविह ॥ इति ।

अत्राष्टादशेति । नेयं न परिसंख्या, पदान्तराणामपि सम्भवात् ।

अत एवाह **बृहस्पतिः**

अष्टादशपदो वादो विचार्यो निवेदितः ।
सन्त्यन्यानि पदान्यत्र यानि राजा विशेत्स्वयम् ॥
पञ्चागकरशुल्कं च समयातिक्रमो निधिः ।
वधसङ्ग्रहणस्तेयमासेधाज्ञाव्यतिक्रमः ॥ इति ।

अन्यानि पञ्चागकरशुल्कानि । विशेत् पश्येत् । एतेषां च ऋणादानादिविवादपदानां स्वरूपं तत्तत्प्रकरणे वक्ष्यते । तत्र तावदृणादानस्य स्वरूपं तद्भेदाश्च केचिन्नारदेन दर्शिताः

ऋणं देयमदेयं च येन यत्र यथा च यत् ।
दानग्रहणधर्माश्च ऋणादानमिति स्मृतम् ॥

देयं द्यूतादिकुत्सितेतरकार्यार्थं पित्रादिकृतम् । अदेयं कामद्यूताद्यर्थं पित्रादिकृतम् । येन पुत्रपौत्रादिना । यत्र यस्मिन्समये पितरि प्रोषिते प्रेत इत्यादिना वक्ष्यमाणे । यथा सवृद्धिकावृद्धिकादिप्रकारेण देयमिति यत्तत्सर्वं तथा । दानं धनप्रयोगस्तस्य धर्मो अशीति-भागादिवृद्धिरूपाः । ग्रहणधर्माश्च प्रयुक्तधनग्रहणधर्मा वक्ष्यमाणास्ते च यस्मिंस्तत्पदमृणादा-नाख्यमिति स्मृतमित्यर्थः । अत्र देयादिपञ्चकमधमर्णविषयं दानादिविधिद्वयं तूत्तमर्णविषय-मिति विवेकः । तत्र देयादीनां दानपूर्वकत्वादादावुत्तमर्णस्य धनप्रयोगविधिरभिधीयते ।

तत्र **नारदः**

स्थानलाभनिमित्तं यद्दानग्रहणमिष्यते ।
तत्कुसीदमिति ज्ञेयं तेन वृत्तिः कुसीदिनाम् ॥

स्थानमवस्थानं मूलधनस्य तेन मूलावस्थान एव लाभनिमित्त धनप्रयोगोऽत्र ऋणम् । कलाशून्ये तु तुल्यत्वाद्गौणः प्रयोगः ।

**बृहस्पतिः**

परिपूर्णं गृहीत्वाधिं बन्धं वा साधु लग्नकम् ।
लेख्यारूढं साक्षिमद्वा ऋणं दद्याद्धनी सदा ॥

परिपूर्णं सवृद्धिकमूलधनपर्याप्तमित्यर्थः । अत्राध्यादीनां यथाविश्वास ग्रहणम् । बन्धपदेनात्र भोगलाभादन्यत्सुवर्णादिक गोप्याधिपदवाच्य विवक्षितमिति न पौनरुक्त्यम् ।

अस्वतन्त्रेषु प्रयोगप्रतिषेधमाह **कात्यायनः**

न स्त्रीभ्यो दासबालेभ्यः प्रदद्यात्किञ्चिदुद्धृतम् ।
दात्रा न लभ्यते तत्तु तेभ्यो दत्तं तु यद्वसु ॥

उद्धृतमुद्धारः । वृद्धिविषये **बृहस्पतिः**

वृद्धिश्चतुर्विधा प्रोक्ता पञ्चधाऽन्यैः प्रकीर्तिताः ।
षड्विधाऽन्यैः समाख्याता तत्त्वतस्तान्निबोधत ॥

क्वचित्तु षड्विधाऽस्मिन्निति पाठः । तत्रास्मिन्नस्मदीये धर्मशास्त्रे । तत्र चतुर्विधत्वमाह **नारदः**

कायिका कालिका चैव कारिता च तथा परा ।
चक्रवृद्धिश्च शास्त्रेषु तस्य वृद्धिश्चतुर्विधा ॥

षड्विधत्वमाह **बृहस्पतिः**

कायिका कालिका चैव चक्रवृद्धिस्ततोऽपरा ।
कारिता च शिखावृद्धिर्भोगलाभस्तथैव च ॥ इति ।

कायिकादिभेदचतुष्टयमभिधाय तल्लक्षणमाह **नारदः**

कायाविरोधिनी शश्वत्पणाद्यर्धा तु कायिका ।
प्रतिमासं स्रवति या वृद्धिः सा कालिका मता ॥
वृद्धिः सा कारिका नाम ऋणिकेन स्वयं कृता ।
वृद्धेरपि पुनर्वृद्धिश्चक्रवृद्धिरुदाहृता ॥ इति ।

कायाविरोधिनीति । कायो मूलधन, तदविरोधिनी । शश्वदित्यादि । मासवृद्धिरेव दिवसगणनया विभज्य प्रतिदिन गृह्यमाणा कायिकेत्यर्थः । अथवा स्वकर्मकरादेराधीकृतस्य दोहनवाहनकर्मकरणादिरूपकायिकव्यापार एव यत्र वृद्धित्वेन कल्पितः सा कायिकेत्यर्थः ।

तथा च **व्यासः**

दोह्यवाह्यकर्मयुता कायिका समुदाहृता । इति ।

प्रतिमासमित्यादि । मासि मासि गृह्यमाणा कालिका वृद्धिः । सैत्यादि । ऋणिकेन स्वेच्छया कृता वृद्धिः कारितेत्यर्थः । 'इच्छाकृता कारिता स्या'दिति वचनात् ।

अत्र छान्दसत्वात्स्वार्थे णिङ् प्रत्ययः । न पुनः परप्रेरणमात्रकृता कारिता, तस्या निषिद्धत्वात् ।

तथा च कात्यायनः

ऋणिकेन तु या वृद्धिरधिका संप्रकीर्तिता ।
आत्मकामा कृता नित्यं दातव्या कारिता च सा ।
अन्यथा कारिका वृद्धिर्न दातव्या कथंचन ॥ इति ।

शिखावृद्धिस्वरूपमाह बृहस्पतिः

प्रत्यहं गृह्यते या तु शिखावृद्धिस्तु सा मता । इति ।

अत्र प्रत्यहं गृह्यत इति संप्रतिपन्नदिनसंख्याविशिष्टकालोपलक्षणार्थम् ।

अत एव कात्यायनः

एकान्तेनैव वृद्धिं तु शोधयेद्यत्र चर्णिकः ।
प्रतिकालं ददात्येव शिखावृद्धिस्तु सा स्मृता ॥ इति ।

वृद्धेः शिखासादृश्यमाह बृहस्पतिः

शिखेव वर्धते नित्यं शिरश्छेदान्निवर्तते ।
मूले दत्ते तथैवैषा शिखावृद्धिस्ततः स्मृता ॥

भोगलाभस्वरूपमाह स एव

गृहात् स्तोमः शदः क्षेत्राद्भोगलाभः प्रकीर्तितः ।

स्तोमो गृहविषये शयनादिरूपः । शदःशब्देनात्र सस्यादिकमभिधीयते । तेन क्षेत्रादिविषये सस्यादिफलभोगो भोगलाभाख्यो वृद्धिप्रभेद इत्यर्थः । अत्र गृहक्षेत्रग्रहणं स्थावरात्मकभोग्याधेरुपलक्षणम् ।

अत एव कात्यायनः

आधिभोगस्त्वशेषो यो वृद्धिस्तु परिकल्पितः ।
प्रयोगो यत्र चैवं स्यादाधिभोगः स उच्यते ॥ इति ।

वृद्धिनियममाह मनुः

वसिष्ठविहितां वृद्धिमुत्सृजेद्वित्तवर्धिनीम् ।
अशीतिभागं गृह्णीयान्मासाद्वार्धुषिकः शते ॥

वसिष्ठविहिता च वृद्धिर्विंशतेः पञ्चमाषात्मिका ।

**वसिष्ठः**

पञ्च माषास्तु विंशत्यामेवं धर्मो न हीयते ।

विंशतिरत्र माषाणां तासुत्सृजेत् । इयं च वृद्धिः सबन्धकविषया ।

तथा च **याज्ञवल्क्यः**

अशीतिभागो वृद्धिः स्यान्मासि मासि सबन्धके ।

आधिग्रहणपूर्वकमृणप्रयोगे यावद्धनं प्रयुक्तं तस्याशीतितमो भागः प्रतिमासं वृद्धिर्भवतीत्यर्थः ।

यत्तु अशीतिभागाभिधानानन्तरं

द्विकं शतं वा गृह्णीयात्सतां धर्ममनुस्मरन् ।
द्विकं शतं तु गृह्णानो न भवत्यर्थकिल्बिषी ॥

इति **मनु**वचनं, तत्संबन्धकायन्धकभेदेन व्यवस्थितं विज्ञेयम् ।

अत एव **व्यासः**

सबन्धे भाग आशीतः षष्टिभागः सलग्नके ।
निराधाने द्विकशतं मासलाभ उदाहृतः ॥

अशीतिषष्टिभागौ बन्धकप्रतिभूसहितयोः । प्रतिमासं यथाक्रमं ग्राह्यौ । तद्धीने तु प्रयोगे पञ्चाशद्भागः प्रतिमासङ्ग्राह्य इत्यर्थः । द्वौ भागौ वृद्धिर्दीयते अस्मिञ्शत इति द्विकं शतम् । एवं वक्ष्यमाणत्रिकं शतमित्यादावपि । 'तदस्मिन्वृद्ध्यायलाभशुल्कोपदा दीयते' इति कन् । अत्र वचोभङ्ग्या पञ्चाशद्भाग उक्तः । द्विकं शतमिति वक्ष्यमाणत्रिकशतादेरप्युपलक्षणम् । अर्थकिल्बिषी परस्वग्रहणदोषवान् । ब्राह्मणाधमर्ण एवायं द्विकशतनियमः ।

एतदेवानूद्य क्षत्रादिष्वाह **मनुः**

द्विकं त्रिकं चतुष्कं च पञ्चकं च शतं समम् ।
मासस्य वृद्धिं गृह्णीयाद्वर्णानामनुपूर्वशः ॥

**याज्ञवल्क्यो**ऽपि

वर्णक्रमाच्छतं द्वित्रिचतुःपञ्चकमन्यथा ।

अन्यथा बन्धकरहिते । अधमर्णविशेषेण वृद्धिनियममाह **स** एव

कान्तारगास्तु दशकं सामुद्रा विंशकं शतम् ।
दद्युर्वा स्वकृतां वृद्धिं सर्वे सर्वासु जातिषु ॥

कान्तारं दुर्गमं वर्त्म गच्छन्तीति कान्तारगाः । वृद्ध्या धनं गृहीत्वा ये बहुतरलाभार्थं अतिगहनं धनप्राणक्षतिशङ्कावहप्रदेशं गच्छन्ति ते दशकं शतं दद्युः । ये च समुद्रगमनशीलाः ते विंशकं शतं मासि मासि दद्यः । इदमुक्तं भवति—दुर्गमार्गसमुद्रद्वीपगान्तरम्य उत्तमर्णो दशकं

शतं विंशकं शतं च यथाक्रमेण दद्यात् । मूलधनविनाशस्यापि तत्र शङ्कितत्वादिति । अयं च 'दद्युर्वा स्वकृता'मित्यादावधमर्णाभ्युपगतवृद्धिपरिमाणविशेष उक्ताशीतिभागादिशास्त्रीयवृद्धिपरिमाणेन सह विकल्पितो बोद्धव्यः । स च कारितायामेव वृद्धौ, इतरत्र तु शास्त्रतः परिमाणनियमविधिरिति ।

**मनुः**

समुद्रयानकुशला देशकालार्थदर्शिनः ।
स्थापयन्ति च यां वृद्धिं सा तत्राधिगमं प्रति ॥

अस्यार्थः—दुर्गो देशः कालश्चाल्पः अर्थस्तु लभ्यो बहुरिति जानन्तो यां वृद्धिं बहुलामप्यङ्गीकुर्वन्ति । सा वा निजके वाणिज्यफले प्राप्त एव देयादेया तल्लाभाभावे वृद्धेरप्यदानमिति । समुद्रपदं चैवंविधाकरादेरप्युपलक्षणम् ।

**नारदः**

ऋणानां सार्वभौमोऽयं विधिर्वृद्धिकरः स्मृतः ।
देशाचारस्थितिस्त्वन्या यत्रर्णमवतिष्ठति ॥

द्रव्यविशेषविषये वृद्धिविशेषमाह **याज्ञवल्क्यः**

सन्ततिस्तु पशुस्त्रीणाम्………… । इति ।

पशूनां स्त्रीणां च प्रयोगे सन्ततिरेव वृद्धिः । प्रयोगश्च पोषणासमर्थस्य तत्पुष्टिसन्ततिकामस्य सम्भवति । ग्रहणं च क्षीणपरिचर्याद्यर्थिनः । स्त्रियोऽत्र दास्यः ।

अकृतवृद्धिविषये **विष्णुः**

यो गृहीत्वा ऋणं पूर्वं श्वो दास्यामीति सामकम् ।
न दद्याल्लोभतः पश्चात्तदक्षा वृद्धिमाप्नुयात् ॥

सममेव सामकं, अवृद्धिकमिति यावत् ।

**नारदोऽपि**

न वृद्धिः प्रीतिदत्तानां स्यादनाकारिता क्वचित् ।
अनाकारितमप्यूर्ध्वं वत्सरार्धाद्विवर्धते ॥

अनाकारिता अकृता । प्रीतिदत्तानां प्रार्थनप्रत्यर्पणदिननिर्देशविधुराणामिति शेषः । दानमत्र समर्पणमात्रं पुनर्ग्रहणायैव । अनाकारितमित्यादेरयमर्थः—प्रीतिदत्तमपि प्रत्यर्पणदिननिर्देशे तद्दिनमारभ्य मासषट्कादूर्ध्वं वर्धत इति ।

यस्तु याचितकं गृहीत्वा देशान्तरं गतस्तं प्रत्याह **कात्यायनः**

यो याचितकमादाय तमदत्वा दिशं व्रजेत् ।
ऊर्ध्वं संवत्सरात्तस्य तद्धनं वृद्धिमाप्नुयात् ॥

याचितकं परकीयेन स्वकार्यं कर्तुं याचनया प्राप्तम्। एतच्चाप्रतियाचितयाचितकविषयम्। प्रतियाचिते तु स एव

कृत्वोद्धारमदत्वा यो याचितस्तु दिशं व्रजेत्।
ऊर्ध्वं मासत्रयात्तस्य तद्धनं वृद्धिमाप्नुयात्॥

कृत्वोद्धारं याचितकमादायेत्यर्थः। प्रवासाभावे तु प्रतियाचनकालादारभ्याकारितापि याचितस्य वृद्धिरित्याह स एव

स्वदेशेऽपि स्थितो यस्तु न दद्याद्याचितोऽसकृत्।
स तत्राकारितां वृद्धिमनिच्छन्नपि चावहेत्॥ इति।

'न दद्याद्याचितः' इति प्रकृते न सम्बन्धः। क्रीतमूल्यात्तर्पणविषये कात्यायनः

पण्यं गृहीत्वा यो मूल्यमदत्त्वैव दिशं व्रजेत्।
ऋतुत्रयस्योपरिष्टात्तद्धनं वृद्धिमाप्नुयात्॥

एतच्चाप्रतियाचितविषये।

तथा

निक्षेपं वृद्धिशेषं च क्रयं विक्रयमेव च।
याच्यमानं न चेद्दद्याद्वर्धते पञ्चकं शतम्॥
प्रीतिदत्तं न वर्धेत यावन्न प्रतियाचितम्।
याच्यमानं न चेद्दत्तं वर्धते पञ्चकं शतम्॥

एतत्पञ्चकं शतं शूद्रस्य। वृद्ध्यकरणपक्षे अन्येषामपि स्वस्ववर्णोक्तैव वृद्धिः।

अशास्त्रीयवृद्धिनिषेधमुखेन मनुराह

कृतानुसारादधिका व्यतिरिक्ता न सिध्यति। इति।

कृतानुसारात् शास्त्रोक्तानुसारात्। अधिका वृद्धिर्न सिध्यति। अत्र हेतुमाह—व्यतिरिक्तेति। धर्मशास्त्रबाह्येत्यर्थः।

विष्णुरपि

तां वृद्धिं दद्युरकृतामपि वत्सरातिक्रमेण यथाभिहिताम्।

धर्मशास्त्र इति शेषः। संवत्सरपदं तु प्रागुदीरिततत्तद्वृद्धिकालोपलक्षणम्।

अकृतवृद्धेरपवादमाह नारदः

पण्यमूल्यं भृतिर्न्यासो दण्डो यश्च प्रकल्पितः।
वृथादानाक्षिकपणा वर्धन्ते नाविवक्षिताः॥

पण्यस्य क्रीतवस्तुनो मूल्यम्। न्यासो वक्ष्यमाणलक्षणः। वृथादानं चाटचारणादिभ्यो देयत्वेनाङ्गीकृतम्, आक्षिकपणो द्यूतद्रव्यम्, एतेषु षट्सु अकृता वृद्धिर्नास्तीत्यर्थः। अत्र पण्य-

मूलस्यावृद्धिः प्रयासप्रतियाचनाभावे यथास्थितविषया। अतः 'पण्यं गृहीत्वा यो मूल'मित्यादिना न विरोधः। 'दण्डो यचाभिहारिक'मिति पाठे आभिहारिकं बलाद्गृहीतम्।

**याज्ञवल्क्यः**

दीयमानं न गृह्णाति प्रयुक्तं यः स्वकं धनम्।
मध्यस्थस्थापितं चेत्स्याद्वर्धते न ततः परम्॥

मध्यस्थस्थापितं मध्यस्थहस्ते स्थापितम्। ततःपरं स्थापनानन्तरम्। मध्यस्थस्थापनाभावे स्थापितस्यापि याच्यमानस्यादाने च पूर्ववद्वर्धत एव।

**संवर्तो**ऽपि

न वृद्धिः स्त्रीधने लाभे निक्षेपे च यथास्थिते।
सन्दिग्धे प्रातिभाव्ये च यदि न स्यात्स्वयंकृता॥

स्त्रीधनं प्रीत्या व्ययीकृतम्। तथा च भर्तृपुत्रादीनुक्त्वा स एव

यदि ह्येकतरोऽमीषां स्त्रीधनं भक्षयेद्बलात्।
स वृद्धिं प्रतिदाप्यः स्याद्विनयं च समाप्नुयात्॥
तदेव यद्यनुज्ञाप्य भक्षयेत्प्रीतिपूर्वकम्।
मूलमेव स दाप्यः स्याद्यदा स धनवान् भवेत्॥

लाभे वृद्धौ। यथास्थिते अन्यथाकरणरहिते। एतेन निक्षेपस्य अन्यथाकरणे वृद्धिरुक्ता भवति। सन्दिग्धे येन केनचित्सन्देहेन दातुमनुचितत्वेन स्थिते। प्रातिभाव्ये द्रव्यार्पणादौ साक्षात्प्रतिभूविषये। विनयं दण्डम्।

**व्यासः**

प्रातिभाव्यं भुक्तबन्धमगृहीतं च दित्सतः।
न वर्धते प्रपन्नस्य दमः शुल्कं प्रतिश्रुतम्॥

अत्र भुक्तबन्धग्रहणं निक्षेपोपभोग इव गोप्याधिभोगे वृद्धिर्मा भूदित्येतदर्थम्।

प्रयुक्तस्य वस्तुनो वृद्धिग्रहणमन्तरेण चिरं स्थितस्य कस्य कियती परा वृद्धिरित्यत्राह **गौतमः**

चिरावस्थाने द्वैगुण्यं प्रयोगस्य।

प्रयुज्यत इति प्रयोगधनं हिरण्यादिः, चिरावस्थान इत्युक्तत्वादन्तरान्तरा वृद्धिग्रहणे न द्वैगुण्यनियमः। अत्र प्रयोगस्येत्येकवचननिर्देशात्प्रयोगान्तरकरणे द्वैगुण्यातिक्रमो दर्शितः।

अत्र **मनुः**

कुसीदवृद्धिर्द्वैगुण्यं नात्येति सकृदाहृता। इति।

उपचयार्थं प्रयुक्तं द्रव्यं कुसीदं नात्येति नातिक्रामति। सकृदाहृता मूलधनग्रहणकाल एव गृहीता। एतेन प्रतिदिनं प्रतिमासं प्रतिवत्सरं वा वृद्धिग्रहणे द्वैगुण्यातिक्रमोऽपि भवतीति

दर्शितम् । सकृदाहितेति तु पाठे पुरुषान्तरसंक्रामिता पुनर्वा मूलीकृता वृद्धिर्द्वैगुण्यमत्येतीति व्यतिरेकमुखेनावगम्यते । तेन यदा ऋणिकः स्वयमेव ऋणं सवृद्धिकं पुरुषान्तरदेयं करोति यदा वा मूलीकरोति धनिको वा धनिकान्तरे स्वाधिं कृत्वा स्वधनं गृह्णाति तदा तद्दिनमारभ्य द्वैगुण्यपर्यन्तं प्रतिदानपर्यन्तं वा तद्वर्धत इति मन्तव्यम् । एवं वक्ष्यमाणत्रैगुण्यादावपि; तुल्यन्यायत्वात् । इदं च द्वैगुण्यं हिरण्यविषयम्, वस्त्रादीनां त्रैगुण्यादिविधानात् ।

तथा च बृहस्पतिः

हिरण्ये द्विगुणा वृद्धिस्त्रिगुणा वस्त्रकुप्यके ।
धान्ये चतुर्गुणा प्रोक्ता सदवाह्यलवेषु च ॥
उक्ता पञ्चगुणा शाके बीजेक्षौ षड्गुणा स्मृता ।
लवणस्नेहमद्येषु वृद्धिरष्टगुणा स्मृता ।
गुडे मधुनि चैवोक्ता प्रयुक्ते चिरकालिके ॥

कुप्यं हिरण्यरूप्यातिरिक्तं ताम्रादि ।

तथा च वसिष्ठः

ताम्रायःकांस्यरीतीनां त्रपुणः सीसकस्य च ।
त्रिगुणा तिष्ठते वृद्धिः कालाच्चिरकृतस्य हि ॥ इति ।

सदो धान्यातिरिक्तं क्षेत्रभवं पलालादि । वाह्यं वाहनीयं अश्ववृषभादि । लवः लवनीयं मेषलोमचमरीकेशादि, नत्वाविकम्;

मणिमुक्तप्रवालानां सुवर्णरजतस्य च ।
तिष्ठति द्विगुणा वृद्धिः फलकैटाविकस्य च ॥

इति द्वैगुण्यविधायककात्यायनात् ।

कैटं कीटभवम् । चिरकालिक इति सप्तम्येकवचनान्तं पदं हिरण्यादिपदेन सम्बध्यते । यत्र पुनः सदवाह्यादिकेषु बहुवचनान्तता तत्र चिरकालिकेष्विति वचनविपरिणामः ।

याज्ञवल्क्यः

(सन्ततिस्तु पशुस्त्रीणां) रसस्याष्टगुणा परा ।
वस्त्रधान्यहिरण्यानां चतुस्त्रिद्विगुणा परा ॥

रसपदेनात्र तैलघृतादिकमप्यभिधीयत इति केचित् । लवणादिकमित्यन्ये । परेति नातः परं वर्धत इत्यर्थः ।

वसिष्ठः

द्विगुणं हिरण्यं त्रिगुणं धान्यम् । धान्येनैव रसा व्याख्याताः । पुष्पमूलफलानि च । तुलाधृतमष्टगुणम् ॥ इति ।

**कात्यायनः**

तैलानां चैव सर्वेषां मद्यानामथ सर्पिषाम् ।
वृद्धिरष्टगुणा ज्ञेया गुडस्य लवणस्य च ॥ इति ।

गुडवत्तुलाधृतशर्करादावपि अष्टगुणैव ।

तथा च **वसिष्ठः**

तुलाधृतमष्टगुणम् । इति ।

एतच्चाष्टगुणत्वं सुवर्णादिव्यतिरिक्तविषयम्, तत्र तद्वृद्धिविशेषसद्भावात् ।

**मनुः**

धान्ये शदे लवे वाह्ये नातिक्रामति पञ्चताम् । इति ।

अत्र चैकस्मिन्नेव द्रव्ये नानावचनैर्वृद्ध्युत्कर्षापकर्षविधानं देशविशेषेण समर्घमहार्घत्वाद्युपलक्षितकालविशेषेण प्रत्यर्पणकालीनाधमर्णसामर्थ्यासामर्थ्यविशेषेण च व्यवस्थितं बोद्धव्यम् ।

येषां तु धर्मशास्त्रेषु नोक्ता वृद्धिस्तेषां द्विगुणैव वृद्धिः ।

अनुक्तानां द्विगुणा वृद्धिः ।

इति **विष्णुस्मरणा**दिति ।

द्रव्यविशेषेण वृद्ध्युपरमापवादमाह **बृहस्पतिः**

तृणकाष्ठेष्टकासूत्रकिण्ववर्मास्थिचर्मणाम् ।
हेतिपुष्पफलानां च वृद्धिस्तु न निवर्तते ॥

किण्वं सुराद्रव्योपादानकारणद्रव्यभूतो मलविशेषः । वर्म कवचम् । हेतिरायुधम् ।

**विष्णुरपि**

किण्वकार्पासचर्मवर्मायुधेष्टकांगाराणां सदा देया । इति ।

**वसिष्ठोऽपि**

दन्तवर्मास्थिशृंगाणां मृन्मयानां तथैव च ।
अक्षया वृद्धिरेतेषां पुष्पमूलफलस्य च । इति ।

अक्षया मूलप्रतिदानाभावेऽष्टसङ्ख्यातगुणापि वर्धेत इत्यर्थः । अत्र पुष्पमूलफलकार्पासाना वृद्ध्यनिवृत्तिः प्रतिदानसमयातिसमृद्धाऽधमर्णविषया । त्रिगुणादिवृद्धिस्तु तदितरविषयेति न तत्प्रतिपादकप्रागुक्तवचनविरोधः ।

**बृहस्पतिः**

शिरावृद्धिं कायिकां च भोगलाभं तथैव च ।
धनी तावत्समादद्याद्यावन्मूलं न शोधितम् ॥

**याज्ञवल्क्यः**

आधिस्तु भुज्यते तावद्यावन्मूलं न दीयते । इति ।

अयं च वृद्ध्युपरमापवादः । चिरावस्थाने सकृदाहितायां च वृद्धौ बोद्धव्यः ।

वृद्धिग्रहणप्रतिषेधमाह **मनुः**

नातिसांवत्सरीं वृद्धिं न चादृष्टां विनिर्हरेत् ।
चक्रवृद्धिः कालवृद्धिः कारिता कायिका च या ॥

अत्राद्यपादार्थे केचिदेवमाहुः—द्वैगुण्यपर्यन्ते वृद्धिस्वीकारविधेः संवत्सरानन्तरमपि वृद्धिग्रहणे न दोषः, ततश्चाभ्युदयार्थिना तां संवत्सरादूर्ध्वं या वृद्धिस्तां (न) विनिर्हरेत् न गृह्णीयात्। अयं तावदर्थो युक्तः, विरोधाभावात्। अन्ये तु संवत्सराधिकां वृद्धिं न गृह्णीयाद्यदि वृद्धिमहत्त्वेन तावतैव द्वैगुण्यं भवेदिति अध्याहृत्याद्यपदार्थमाहुः—तदसङ्गतम्; 'कुसीदवृद्धिर्द्वैगुण्यं नात्येती'त्यनेन फलतो गतार्थत्वापत्तेः । वत्सरमात्रेण द्वैगुण्यापादकवृद्धिमहत्त्वस्यानिषिद्धत्वानुपपत्तेश्च । अपरे पुनरन्यथा व्याचक्षते—शूद्राधमर्णे प्रतिमासं पञ्चकं शतं गृह्णीयादिति या वृद्धिः प्रागुक्ता ब्राह्मणाद्यधमर्णे कथंचिदङ्गीकारवशाद्गृह्यमाणा संवत्सरं यावद्गृहीतव्या, न ततः परमिति स्वयमप्यर्थोऽस्तु समनन्तरार्थवद्बहुदोषाभावात् । 'न चादृष्टां विनिर्हरे'दित्यस्यायमर्थः—धर्मशास्त्रेष्वदृष्टां च षट्कं शतमित्येवंभूतां स्वबुद्धिकल्पितां वृद्धिं न गृह्णीयादिति । नन्वेवं च व्याख्यायमाने 'कृतानुसारादधिका व्यतिरिक्ता न सिध्यती'त्यनेन गतार्थत्वप्रसङ्गात् । अस्तु ह्यर्थोऽनुवादः गत्यन्तराभावादिति केचित्समादधति । अन्ये पुनरुक्तस्यैवं दार्ढ्यार्थं पुनरभिधानमिति मन्यन्ते । वस्तुतस्तु कृतानुसाराच्छास्त्रोक्तानुसारादधिका सम्प्रतिपत्तिमात्रलभ्या वृद्धिर्न सिद्ध्यतीत्येवपरत्वाक्षरगतार्थत्वं तस्य । 'न निर्हरेदि'ति पदद्वयमुत्तरार्धपदैरनुषंगात्सम्बध्यते । तेनायमर्थः—या चक्रवृद्ध्यादिभेदेन चतुःप्रकारा वृद्धिरभिहिता ताश्च न गृह्णीयादिति । एतदुक्तं भवति—चक्रवृद्ध्यादयः स्वरसतो न ग्राह्या इति । नन्वशीतिभागो वृद्धिरिति प्रतिमासं ग्राह्या कालिका भवति, सा च स्वरसतो ग्राह्या । तथा अनतिभूरिपरिमाणा कारितापि स्वरसतो ग्राह्या । तथा कायिकाऽप्यतिपीडावर्जिता । तेन तासां कथं प्रतिषेधः ? उच्यते—केनोक्तं तासां प्रतिषेध इति । कासां तर्हीत्र प्रतिषेधः ? उच्यते—यथा 'पञ्चमाषास्तु विंशत्यामेवं धर्मो न हीयते' इत्येवं **वसिष्ठ**वचनविहिता वृद्धिः 'वसिष्ठविहितां वृद्धिमुत्सृजेद्वित्तवर्धिनी'मिति **मानवे** वचनान्तरे प्रतिषिद्ध्यते। एवं 'कुसीदवृद्धिर्धर्म्या स्याद्विंशतेः पञ्चमाषिकी । प्रतिमास'मिति **गौतमेन** विहिता कालिका प्रतिषिद्ध्यते। कारिता चातिभूरिपरिमाणाऽत्र प्रतिषिद्ध्यते । कायिकाऽप्यतिपीडावती । तेन न कश्चिद्विरोधः । ननु **गौतमो**क्तायाः कालिकाया धर्म्यत्वात्कथं तस्या निषेधः ? उच्यते—यथा 'एवं धर्मो न हीयते' इति धर्म्यत्वेनापि **वसिष्ठ**-

विहिता प्रतिषिद्धा तथैव प्रतिषिद्ध्यते । अत्यर्थाधिकपरिमाणत्वेनाधर्म्या । अधर्म्यैव चोक्त **मनुना** 'वित्तविवर्द्धिनी'मिति वदता, कथं तर्हि **वसिष्ठगौतम**योर्धर्मत्वेनाभिधानं ? पञ्चकं शतमितियत् शूद्राधमर्णविषयत्वेनेति ब्रूमः । एवं च शूद्रेतराधमर्णविषये त्वधर्मत्वात् तत्रैव कथंचिदङ्गीकारवशात्प्राप्ता **मनुना** प्रतिषिद्धेति मन्तव्यम् । केचित्त्रैवर्णिकेष्वपि धर्म्यत्वमापादयितुं **गौतमा**दिवचनमेव व्याचक्षते । माषो विंशतिमो भागः पणस्य परिकीर्तितः—स्मृत्युक्तो माषः कार्षापणस्य विंशतिमो भागः पञ्चमाषिकीत्यत्र परिगृह्यते । तथा सति कार्षापणविंशतेः प्रयुक्तायाः पञ्चमाषिकी वृद्धिरशीतिभागवृद्धिरेव नामान्तरेणेति नास्त्यधर्म्यत्वशङ्केति । अन्ये पुनरन्यथा व्याचक्षते—'पञ्चकृष्णलको माषः' इति प्रसिद्धो माषोऽत्र माषशब्दार्थः । तथा च सुवर्णविंशतेः प्रयुक्तायाः पञ्चमाषिकी वृद्धिरशीतिभागवृद्धेरीषदधिकेति कुतो वृद्धेरधर्म्यतेति । तद्व्याख्याद्वयमप्ययुक्तम् **वसिष्ठ**वचने तावदुभयव्याख्यानेऽपि '**वसिष्ठ**विहिता'मित्यादि**मनु**वचनविरोधो दुर्वारः । धर्म्यत्वेऽपि 'वित्तवर्धिनीमुत्सृजे'दित्यस्याघटनात् । **गौतम**वचने त्वेवं 'षोडश मासैर्द्विगुणा भवती'ति वाक्यशेषविरोधो दुष्परिहरः । तथा हि प्रथमव्याख्यातॄणां व्याख्याने षोडशभिर्मासैः कार्षापणचतुष्कं भवति द्वितीयव्याख्यातॄणां व्याख्याने सुवर्णपञ्चकं भवति, तस्माद्व्याख्याद्वयमप्यसम्बद्धम् । अस्मत्पक्षे पुनर्न वाक्यशेषविरोधः । व्यावहारिकनिष्कविंशतेः प्रयुक्तायाः प्रसिद्धमाषपञ्चकवृद्धौ षोडशमासैर्द्वैगुण्यं सिद्ध्येत्, किंतु धर्म्यत्वविरोधः, स चास्माभिः परिहृत एव तेन न चोद्यावकाशः । अत एव 'स्वरसतो न ग्राह्या' इति प्रतिषेधो न पुनः सर्वथा न ग्राह्या इति ।

अत एव चक्रवृद्धौ कथंचिदङ्गीकृतायां धनिकदोषात्कथंचित्तस्य अलाभमाह **स** एव

> चक्रवृद्धिसमारूढो देशकालव्यवस्थितः ।
> अतिक्रामन्देशकालौ न तत्फलमवाप्नुयात् ॥

अयमर्थः—अतिक्रामन् देशकालौ यदि समयदिवसं परिभाषितदेशं वा अतिक्रामति न सन्निहितस्तत्र भवत्युत्तमर्णस्तदा स्वदोषात्तत्फलमाप्नुयात् । मयाऽस्मिन्देशेऽस्मिन्काले परिशोधनीयेति यत्र व्यवस्थापूर्वकं चक्रवृद्धिः स्वीकृता, तत्र यद्युत्तमर्णोऽन्यस्मिन्देशेऽन्यस्मिन्काले च याचते तदा चक्रवृद्धिं न लभत इति । अत्र 'तत्फल'मिति चक्रवृद्धिलक्षणफलनिषेधात् अशीतिभागादिरूपं तु फलं लभत एवेति गम्यते ।

---

## अथाधिविधिः

तत्राधिर्नामाधमर्णेन गृहीतस्य धनस्योपरि प्रत्ययार्थं उत्तमर्णे यद्वस्तु आधीयते सः । स च द्विविधः—कृतकालोऽकृतकालश्चेति । स पुनः प्रत्येकं गोप्यभोग्यभेदेन द्विविधः ।

यथाह नारदः

अधिक्रियत इत्याधिः स विज्ञेयो द्विलक्षणः ।
कृतकालेऽपनेयश्च यावद्देयोद्यतस्तथा ।
स पुनर्द्विविधः प्रोक्तो गोप्यो भोग्यस्तथैव च ॥ इति ।

कृतकालेऽपनेय इति । आधीकरणसमय एव । अमुष्मिन्निन्द्रमहोत्सवादौ त्वदीयं धनं दत्वा अयमाधिर्मया मोचनीयः, नो चेत्तवैवायं भविष्यतीत्यधमर्णेन निरूपितः कालः कृतकालस्तस्मिन्नुपनेय आत्मसमीपं नेयो मोचनीयः कृतकालेऽपनेयः । यावद्देयोद्यत इति । देयं दानं तदनतिक्रम्य यावद्देयमुद्यतः स्थापितः यावद्देयोद्यतः गृहीतधनप्रतिदानपर्यन्तः, अकृतकाल इत्यर्थः । गोप्यो रक्षणीयः ।

बृहस्पतिः

आधिर्बन्धः समाख्यातः स च प्रोक्तश्चतुर्विधः ।
जङ्गमः स्थावरश्चैव गोप्यो भोग्यस्तथैव च ।
याहच्छिकः सावधिको लेख्यारूढोऽथ साक्षिमान् ॥

याहच्छिकः अकृतकालः । सावधिकः कृतकालः । चतुर्विधः स्वरूपप्रकारकालप्रमाणैः । तत्र स्वरूपमेव द्विविधम्—स्थावरजङ्गमभेदेन । प्रकारश्च द्विविधः—गोप्यभोग्यभेदेन । कालो द्विविधः—अवधिनियमानियमाभ्याम् । प्रमाणं द्विप्रकारम्—लेख्यसाक्षिभेदेन ।

हारीतः

बन्धं यथा स्थापितं स्यात्तथैव परिपालयेत् ।
दैवराजोपघाते तु न दोषो धनिनां क्वचित् ॥

उत्तमर्णेन आधिग्रहणानन्तरं तत्राशङ्कासविकारादसारत्वादिना अनादेयो यथा न भवति तथा प्रतिदानपर्यन्तं रक्षणीयः । एवं कृतेऽपि दैवादिना यदि नाशादि स्यात्तदा नोत्तमर्णदोषः, किंत्वधमर्णो ऋणं बन्धकान्तरं वा दाप्य इत्यर्थः ।

बृहस्पतिरपि

दैवराजोपघातेन यद्याधिर्नाशमाप्नुयात् ।
तत्रान्यं दापयेद्बन्धं शोधयेद्वा धनं ऋणी ॥ इति ।

दैवोपघातोऽम्बुदकदेशोपप्लवादिः । राजोपघातः स्वापराधमन्तरेण राजकृतोपघातः । रक्ष्यमाणस्याप्याधेरसारत्वे बन्धान्तरादि देयम् ।

तथा च नारदः

रक्ष्यमाणोऽपि यद्याधिः कालेनेयादसारताम् ।
आधिरन्योऽथवा कार्यो देयं वा धनिने धनम् ॥

असारताऽत्र सवृद्धिकमूलधनापर्याप्तता विवक्षिता । केचित्तु—एकसंवत्सरजवृद्धिसहित-मूलधनापर्याप्ततामसारतामाहुः—तत्तेषां विशेषोक्तौ कारणा(?)भावादुत्प्रेक्षामात्रमित्युपेक्षणीयम् ।

यत्र स्वत एवाधेरल्पत्वे तत्पर्याप्तयेऽधिकं देयमङ्गीकृत्याधिं ददाति तत्राह हारीतः

आधेः समधिकं द्रव्यं गृहीतं ग्राहकेन तु ।
अधिकं हि च दास्यामि तद्धार्यं धनिकस्य सः ॥

अधिकं आधेः पूरकम् ।

कात्यायनः

न चेद्धनिकदोषेण निष्पतेत म्रियेत वा ।
आधिमन्यं स दाप्यः स्याद्दणान्मुच्येत नर्णिकः ॥

स्मृत्यन्तरे

स्रोतसाऽपहृते क्षेत्रे राज्ञा चैवापहारिते ।
आधिरन्योऽथ कर्तव्यो देयं वा धनिने धनम् ॥

अत्र पक्षद्वयेऽप्याध्यन्तरादिदानं धनिकदोषाभावे वेदितव्यम् । स्रोतसाऽपहृत इति दैवकृतोपलक्षणम् ।

यदा पुनर्धनिको यथास्थापितमाधिं न पालयति तदाह हारीतः

बन्धं यथा स्थापितं स्यात्तथैव परिपालयेत् ।
अन्यथा नश्यते लाभो मूलं वा तद्व्यतिक्रमात् ॥

यथेति । गोप्यत्वेन भोग्यत्वेन वा स्थापितः स्याद्व्यतिक्रमात् गोप्यस्य भोग्यत्वरूपात्, भोग्यस्य वा गोप्यत्वरूपात् । अत्र मूलनाशो न केवलं व्यतिक्रममात्रात्, किन्तु बलात्कारकृत-महाभोगात् । भोगमात्रे तु मन्वादिभिर्वृद्ध्यभावाभिधानात् ।

मनुरपि

न भोक्तव्यो बलादाधिर्भुञ्जानो वृद्धिमुत्सृजेत् ।

आधिः शयनादिस्तस्मिन् भुज्यमानेऽप्यविनाशिनि यद्यधमर्णेन भोगनिषेधः कृतस्तदा बलान्न भोक्तव्यः । भोगे वृद्धित्यागः ।

याज्ञवल्क्योऽपि

गोप्याधिभोगे नो वृद्धिः (सोपकारे च हापिते) । इति ।

भोगे बलादिति शेषः । प्रागुदाहृतमनुवचनात् । तेनाल्पभोगेऽप्याधारव्यतिक्रमरूपा-पराधात् महतोऽपि लाभस्य नाशः स्यादित्यर्थः ।

**मनुः**

यः स्वामिनाऽननुज्ञातमाधिं भुङ्क्ते विचक्षणः ।
तेनार्धवृद्धिर्मोक्तव्या तस्य भोगस्य निष्कृतिः ॥

अधमर्णं वंचयित्वा यो गोप्याऽऽधिमुपभुंक्ते तेन भोगानुसारेण लाभे हानिः कार्येत्यर्थः । अननुज्ञातं अनुज्ञानं विना, न तु बलात् । एतच्च वृद्धेरल्पत्वे, बहुत्वे च तद्भोगोचितमूल्यदानम् । प्रतिषिद्धाधिभोगे प्रागुक्तम् । केचित्तु तेनार्धवृद्धिर्मोक्तव्येति पठन्ति ।

**कात्यायनः**

अकाममननुज्ञातमाधिं यः कर्म कारयेत् ।
भोक्ता कर्मफलं दाप्यो वृद्धिं वा लभते न सः ॥

कर्मफलं वेतनं भाटकादि । तत्रापि कर्मानुसारेणेति द्रष्टव्यम् । दाप्यः आधिस्वामिने राज्ञेति शेषः । अकाममिति दासादिवुद्धिमदादिविषयम्, अन्यत्रासम्भवात् ।

तथा

यस्त्वाधिं कर्म कुर्वाणं वाचा दण्डेन कर्मभिः ।
पीडयेत्तर्जयेच्चैव प्राप्नुयात्पूर्वसाहसम् ॥

कुर्वाणमिति कथनादकुर्वतः पीडनादौ न दोषः ।

तथा

बलादकामं यत्राधिमनिसृष्टं प्रवेशयेत् ।
प्राप्नुयात्साहसं पूर्वमाधाता चाधिमाप्नुयात् ॥

अनिसृष्टं अनाहितम् । साहसं पूर्वं पूर्वसाहसम् । भोग्याधौ बलादल्पस्याप्यनाहितस्य भोगे भोक्तुर्दण्डो मूलनाशश्च स्यादिति तात्पर्यार्थः । वंचनया त्वधिकस्याधेर्भोगे भोगानुसारेण मूलनाशः, अन्यथा बलग्रहणानर्थक्यप्रसङ्गात् । आधिह्रासादिकरणे **याज्ञवल्क्यः**

गोप्याधिभोगे नो वृद्धिः सोपकारे च ह्रापिते ।
नष्टो देयो विनष्टश्च दैवराजकृताद्दते ॥

सोपकारे उपकारकारिणि । अश्ववृषादौ भोग्याधौ वृद्धिसहिते ह्रापिते व्यवहाराक्षमत्वलक्षणहानिं गमिते नो वृद्धिरिति पूर्वेण सम्बन्धः । नष्टो विकृतिं गतः । पूर्ववत्कृत्वा देयः गोप्याधिर्नष्टश्चेत्पूर्ववत्कृत्वा देयः । उपभुक्तोऽपि चेत् वृद्धिरपि त्याज्या । भोग्याधिर्यदि नष्टस्तदा यथापूर्वं कारयित्वा देयः, सवृद्धिकश्चेद्वृद्धिरपि हेया, विनष्टः उभयविधोऽप्याधिः सर्वथा नाशं प्राप्तश्चेत्तदा सोऽपि देयः मूल्यादिद्वारेणेति शेषः । तद्दाने सवृद्धिका मूलप्राप्तिः तददाने मूलस्यापि नाशः ।

**बृहस्पतिः**

भुक्ते त्वसारतां प्राप्ते मूलहानिर्न जायते ।

मूलहानिरत्र भोगजनितासारत्वानुसारिणी ।

व्यासः

ग्रहीतृदोषान्नष्टश्चेदन्यो हेमादिको भवेत् ।
ऋणं सलाभं संशोध्य तन्मूलं दापयेद्धनम् ॥

धनिकदोषादाधौ नष्टे धनिने सलाभमृणं राजा दापयित्वा आधिमूल्यं धनमधमर्णाय दापयेदित्यर्थः । इदं चाध्यपेक्षया अधिकसलाभर्णविषयम् ।

ऋणपर्याप्ताधिनाशे त्वाह नारदः

विनष्टे मूलनाशः स्याद्दैवराजकृतादृते ॥ इति ।

मूलपदोपादानाच्च वृद्धिहानिमिति गम्यते।

हारीतः

तत्समो द्विगुणो वाऽपि धनिकस्य समर्पितः ।
आधौ नष्टे धनं नष्टं धनिकस्याधिरेव च ॥

इदं च सलाभर्णपर्याप्ताधिनाशविषयम् । बहुमूल्याधिनाशे सलाभर्णादुपरि आधिमूल्यमाधात्रे देयमित्याह

बृहस्पतिः

बहुमूल्यं यत्र नष्टं धनिकं न च तोषयेत् । इति ।

न च तोषयेदिति वचनादाधाता धनेन धनिकस्य परितोषस्तावद्देयमित्याशङ्कनीयम् ।

यत आह मनुः

मूल्येन तोषयेच्चैनमाधिस्तेनोऽन्यथा भवेत् । इति ।

सलाभर्णापनयने अवशिष्टाध्यंशमूल्येनेत्यर्थः । यत्र च सावधि भोग्यमाधिं विधायान्तरैव धनिको धनं गृहीतमधमर्णो वाऽऽधिं मोचयितुमिच्छति तत्राह बृहस्पतिः

यत्राहितं गृहक्षेत्रं भोगे न प्रकर्षान्वितम् ।
तत्रर्णी नाप्नुयाद्द्रव्यं धनी चैव ऋणं तथा ॥ इति ।

भोगे भोगनिमित्तम् । न प्रकर्षान्वितं न पूर्णावधिकम् । द्रव्यमाधिम् ।

एतच्च परस्परानुमतौ । अनुमतौ स एवाह

पूर्णे प्रकर्षे तत्स्वाम्यमुभयोरपि कीर्तितम् ।
अपूर्णे तु प्रकुर्यातां परस्परमतेन तौ ॥ इति ।

---

## अथाधिसंसिद्धिः

तत्र **नारदः**

आधिस्तु द्विविधः प्रोक्तो जङ्गमः स्थावरस्तथा ।
सिद्धिरस्योभयस्यापि भोगो यद्यस्ति नान्यथा ॥ इति ।

सिद्धिः आधित्वसिद्धिः । अन्यथा भोगं विना अधमर्णेनोद्दिष्ट उत्तमर्णस्वीकारमात्रेणेति यावत् । अत्र यद्यपि गोप्याधेर्भोगो नास्ति तथापि भोगस्थानीयस्वगृहाद्यवस्थापनव्यापारादाधित्व-सिद्धिर्भवति । एतदेव व्यतिरेकमुखेनाह **बृहस्पतिः**

न भुङ्क्ते यः समाधानं नादद्यान्न निवेदयेत् ।
प्रमीतसाक्षिऋणिकं तस्य लेख्यमपार्थकम् ॥

समाधानं आधिः । भोगः प्रसिद्धः । आदानं सीमाशंकुस्थापनादिना स्वीकरणम् । निवेदनं ममायमाधिरिति ऋणिकसमक्षं मध्यस्थजनेषु ख्यापनम् । अपार्थकं असाधकम् ।

**कात्यायनः**

मर्यादाचिह्नितं क्षेत्रं ग्रहणेऽपि यदा भवेत् ।
ग्रामादयश्च लिख्यन्ते तदा सिद्धिमवाप्नुयात् ॥

ग्रामादयश्च क्षेत्रादेर्व्यापकत्वेनेति शेषः । आदिपदेन च देशादेर्ग्रहणम् । आधेर्भुक्त्यादि-वत् व्यक्तिविशेषोल्लेखनलेखनमपि आधित्वसिद्धिरित्यर्थः । एकस्यैवाधेः स्थानद्वयाधानेन विवादे विशेषमाह

ययोर्निक्षिप्त आधिस्तौ विवदेतां यदा नरौ ।
भुक्तिर्यस्य जयस्तस्य बलात्कारं विना भवेत् ॥

यदा तु उभयोरपि भोगस्तदा यस्य प्राथमिको भोगस्तस्यैवाधिर्भवति ।

तदाह **बृहस्पतिः**

क्षेत्रमेकं द्वयोर्बन्धे दत्तं यत्समकालिकम् ।
येन भुक्तं भवेत्पूर्वं तस्य तत्सिद्धिमाप्नुयात् ॥

दत्तमत्राधमर्णेनोद्दिष्टम् । क्षेत्रपदं भोग्यादेरुपलक्षणम् ।

**वसिष्ठोऽपि**

तुल्यकाले विसृष्टानां लेख्यानामधिकर्मणि ।
येन भुक्तं भवेत्पूर्वं तस्याधिर्बलवत्तरः ॥

तुल्यकालोत्पन्नानां लेख्यानां सद्भावसाम्ये भोग्याधिसिद्धौ भोगस्य प्रसाधनकरणत्वात्तत्र धर्मनिबन्धना बलवत्ता युक्तेत्यर्थः । भोग्याविशेषेऽपि तेनैवोक्तम्

यद्येकदिवसे तौ तु भोक्तुकामावुपागतौ ।
विभज्याधिं समं तेन भोक्तव्य इति निश्चयः ॥

तेन ताभ्यामित्यर्थः। गोप्याधिरपि यद्युभयत्राहितः तदाद्युपादानादिकर्तुर्जेयः, तस्यैवाधिसिद्धिसम्भवात्।

उभयोरपि सिद्धिसाम्ये कात्यायनः

आधिमेकं द्वयोर्यस्तु कुर्यात्का प्रतिपद्भवेत्।
तयोः पूर्वकृतं कार्यं तत्कर्ता चोरदण्डभाक्॥

प्रतिपत् निर्धारणा। पूर्वं कृतं पूर्वमुपादानादिगोचरः।

अत्राधिविशेषेण दण्डविशेष उक्तो विष्णुना

गोचर्ममात्रां भुवमन्यस्याधीकृताम्। तस्मादनिर्मोच्यान्यस्य यः प्रयच्छति स वध्यः। ऊनां चेत् षोडश सुवर्णान्दण्ड्यः।

गोचर्मपरिमाणमाह स एव

एकोऽश्नीयाद्यदुत्पन्नं नरः संवत्सरं फलम्।
गोचर्ममात्रा सा क्षोणी स्तोका वा यदि वा बहुः।

उपादानादियौगपद्ये बृहस्पतिः

तुल्यकालोपस्थितयोर्द्वयोरपि समं भवेत्।
प्रदाने विक्रये चैव विधिः संपरिकीर्तितः॥

उपस्थितयोः उपादानादिकं कर्तुमिति शेषः।

**कात्यायनः**

आधानं विक्रयो दानं लेख्यसाक्षिकृतं यदा।
एकक्रियाविरुद्धं तु लेख्यं तत्रापहारकम्॥

लेख्यसाक्षिमात्रकृतानामाध्यादीनां विरोधे लेख्यकृतं सिध्यतीत्यर्थः। लेख्ययोः सिद्धत्वाविशेषेऽपि बलाबलमाह स एव

अनिर्दिष्टं च निर्दिष्टमेकत्र च विलेखितम्।
विशेषलिखितं न्याय्यमिति कात्यायनोऽब्रवीत्॥

*अयमर्थः—आधातुराधीकरणकाले यद्धनं स्वरूपतो निरूपितं सन्निकृष्टं च विद्यते तन्निर्दिष्टमित्युच्यते।* तद्विपरीतं तद्धनमाधित्वेन कल्प्यमानमनिर्दिष्टमित्युच्यते। तयोर्लिखितयोर्विरोधे विशेषलिखितं बलवदिति।

अमुमेवार्थं विविच्याह स एव

अविद्यमानप्रधनमनादिष्टस्वरूपकम्।
आकाशभूतमाद्ध्यादादिष्टं नैव तद्भवेत्॥
यद्यत्तदाऽस्य विद्येत तदादिष्टं विनिर्दिशेत्॥ इति।

प्रशब्दोऽत्र चरणपूरणार्थम् । अनादिष्टस्वरूपकं अनिरूपितस्वरूपम् । आकाशभूतं अविद्यमानप्रायम् ।

आधानसमये विद्यमानत्वसाम्येऽप्याह स एव

यस्तु सर्वस्वमादिश्य प्राक्स्थलारामचिह्नितम् ।
आदध्यात्तु कथं तु स्याच्चिह्नितं बलवत्तरम् ॥

अयमर्थः—यः प्राक् अविशेषेण सर्वस्वमाधित्वेनोपदिश्य कस्यचिद्धस्ते ऋणं गृहीत्वा कालान्तरे पुनर्धनिकानुमत्या क्षेत्रादिकमारामादिचिह्नितं पूर्वगृहीतऋणार्थमादध्यात्तत्र चिह्नितं बलवत्तरम् । पूर्वाधेराध्यन्तरादिक्रियाप्रतिबन्धकस्य धनिकेन त्यक्तत्वादिति । चिह्नितमिति विरोध्युत्तरक्रियोपलक्षणम् । तेन प्रथममाधिमादाय धनी धनं प्रदाय तदनु ऋणिनः स्वच्छाशयत्वेनाधिवैधुर्येणैतत ऊर्ध्वं ऋणमस्त्विति प्रकारान्तरेण क्रियां कुरुते तदा निराधिक्रियैव बलवतीति मन्तव्यम् ।

तथा च याज्ञवल्क्यः

सर्वेष्वर्थविवादेषु बलवत्युत्तरा क्रिया ॥ इति ।

एवं सर्वत्र प्राप्तौ क्वचिदपवादमाह स एव

आधौ प्रतिग्रहे क्रीते पूर्वा तु बलवत्तरा । इति ।

अत्र स्वामित्वप्रतिबन्धावगमाभ्यां प्रागेव पूर्वस्याः क्रियायाः कृतत्वादिति भावः ।

वसिष्ठोऽपि

यः पूर्वतरमाधाय विक्रीणीते तु तत्पुनः ।
किमेतयोर्बलीयः स्यात्प्राक्तनं बलवत्तरम् ॥ इति ।

तथा

कृतं यत्रैकदिवसे दानमाधानविक्रयम् ।
त्रयाणामिति सन्देहे कथं तत्र विचिन्तयेत् ॥
त्रयोऽपि तद्धनं धर्म्यं विभजेयुर्निजांशतः ।
उभौ क्रियानुसारेण त्रिभागेण प्रतिग्रही ॥ इति ।

उभौ धनिकक्रेतारौ । क्रियानुसारेण दत्तधनानुसारेण क्रियानुसारेण भागद्वयं गृह्णीयातामिति शेषः ।

बृहस्पतिरपि

कृतं चेदेकदिवसे विक्रयाधिप्रतिग्रहम् ।
त्रयाणामपि सम्बन्धे कथं तत्र विचारणा ॥
त्रीण्येव हि प्रमाणानि विभजेयुर्यथांशतः ।
उभौ चार्थानुसारेण त्रिभागेण प्रतिग्रही ॥ इति ।

त्रिभागेण प्रतिग्रही, सम्बध्यत इति शेषः ।

आधेः स्वत्वनिवृत्तौ विशेषमाह **याज्ञवल्क्यः**

आधिः प्रणश्येद्द्विगुणे धने यदि न मोक्ष्यते ।

धनिकेनाधेरुपरि दत्तेऽर्थेऽसम्प्रतिपन्नवृद्ध्या कालक्रमेण द्विगुणतां प्राप्ते यद्यधमर्णेन न मोक्ष्यते तदा स प्रणश्यति अधमर्णस्य स्वं न भवेत्, किन्तु धनप्रयोक्तुरेव भवेदित्यर्थः। एतच्च कृतकालगोप्याधिविषयम्, इतरेषां तु विशेषश्रवणात् ।

तथा च स एव

काले कालकृतो नश्येत्फलभोग्यो न नश्यति । इति ।

काले कृतकालः । आहिताग्न्यादित्वात्कालशब्दस्य पूर्वपातः । यदा अमुष्मिन् काले ऋणं न ददामि तदाऽऽधिरेवानृण्याय भवितेतिरूपः कालकृतः । स स्वकृतकाले द्वैगुण्यात्प्रागूर्ध्वं वा नश्येत् । फलभोग्यः क्षेत्रगृहारामादिः । कदाचिदपि न नश्यति ।

अत्र विशेषमाह **व्यासः**

हिरण्ये द्विगुणीभूते पूर्णे काले कृतावधौ ।
बन्धकस्य धनी स्वामी द्विसप्ताहं प्रतीक्ष्य तु ।
अतोऽन्तरा धनं दत्वा ऋणी बन्धमवाप्नुयात् ॥

द्वैगुण्यातिक्रमेण कृतकालातिक्रमेण, चतुर्दशाहप्रतीक्षा कार्येत्यर्थः । अतोऽन्तरा चतुर्दशाहादर्वाक् । यत्तु पूर्णावधौ शान्तलाभे बन्धे स्वामी धनी भवेत् । 'अनिर्गते दशाहे तु ऋणी मोक्षितुमर्हति' इति **बार्हस्पत्यं** वचनं, तद्देशकालापेक्षया अधमर्णतारतम्याद्यपेक्षया च व्यवस्थितं बोद्धव्यम् । नन्वयमाधिप्रणाशोऽनुपपन्नः, तत्स्वत्वध्वंसकाभावात् । अथ प्रयुक्तधनद्वैगुण्यमवधिभूतसमयातिक्रमश्च तद्ध्वंसहेतुरिति चेत्—नैवं, दानविक्रयादेरेव तद्ध्वंसकतया नियतत्वात् । न चादिपदपरिगृहीतवर्गान्तर्गतं द्वैगुण्यादिकमपीति वाच्यम्, आदिपदेनापि स्वत्वनाशकतया लोकप्रसिद्धानामेव परिग्रहस्य समुचितत्वात् । न च द्वैगुण्यादिकमपि तथात्वेन लोके प्रसिद्धमिति वाच्यम्, तादृश्याः प्रसिद्धेरननुभवपराहतत्वात् । तस्मायुक्तमुक्तं धनद्वैगुण्यादावाधिनाशोऽनुपपन्न इति । अत्राभिधीयते—माऽस्तु नाम द्वैगुण्यादेः स्वत्वध्वंसकतया लोके प्रसिद्धत्वम् । द्रव्यविनिमयस्य त्वस्त्येव तथा प्रसिद्धत्वम्, तिलविक्रयप्रतिषेधाद्विक्रयाकरणेऽपि विनिमयेन तिलानां स्वत्वनिवृत्तिदर्शनात् । तत्रश्चात्रापि कृतकालावधौ ऋणग्रहणकाल एव । यद्यहमियता कालेनामुमाधिं न मोचयिष्यामि तदा आधिरेव मदानृण्याय भवदीयो भविष्यतीति धनिकर्णिकयोर्मिथोविनिमये सम्प्रतिपत्तेर्जातत्वादवधिभूतकालेऽतिक्रान्ते स्वत्वनाशो युज्यत एव । धनद्वैगुण्ये तु यद्यपि ऋणग्रहणसमये यद्यहं द्वैगुण्येऽप्याधिं न मोचयिष्यामि तदा मदानृण्याय त्वदीय एवाधिर्भविष्यतीति सम्प्रतिपत्तिर्न नियता, तथापि यत्रैवं सम्प्रतिपत्तिः कृता तत्रैव द्वैगुण्ये स्वत्वनाशोऽस्तु, हेतुसद्भावात् । तद्विषयं चेदं 'आधिः प्रणश्येदि'ति वचनम् । यत्तु **मनुनोक्तं** 'न त्वाधेः कालसंरोधान्निसर्गोऽस्ति न

विक्रयः' इति, तस्यायमर्थः—कालेन संरोधः कालसंरोध उत्तमर्णसन्निधौ चिरकालमवस्थानम्। तस्मान्निसर्गे अन्यत्राधीकरणं दानं वा उत्तमर्णकर्तृकं न, चाविक्रयोऽस्ति, किन्तु प्रतिरोधादिना द्विगुणधनस्यैव ग्रहणम्। एवं विक्रयाधीकरणप्रतिषेधादुत्तमर्णस्य स्वत्वाभावः सूच्यत इति वदेत्। ऋणग्रहणकाले धनद्वैगुण्ये मया अयमाधिर्मोक्तव्यः, अन्यथा तवैवेत्यधमर्णकृतकसम्प्रतिपत्त्यभावविषयम्; अतो न विरोधः। अन्ये तु 'न त्वेवाधौ सोपकारे कौसीदीं वृद्धिमाप्नुयादि'ति भोग्याधि प्रस्तुत्य 'न चाधेः कालसंरोधादि'त्यस्य पठितत्वाद्भोग्याधिविषयतयैव विरोधाभावमाहुः। कश्चित्तु उत्तमर्णस्य स्वत्वाभावेन दानविक्रयादिप्रसक्त्यभावादेव निषेधो न युक्तः, अतः कालसंरोधादवधिकालाभ्यन्तरेऽस्वातन्त्र्यादधमर्णेनान्यस्मै दानं विक्रयश्चाधेर्न कर्तव्यमिति वाक्यार्थं वर्णयन् विरोधशंकैव नास्तीत्याह।

**बृहस्पतिः**

हिरण्ये द्विगुणीभूते मृते नष्टेऽधमर्णिके।
द्रव्यं तदीयं संगृह्य विक्रीणीत ससाक्षिकम्॥
रक्षेद्वा कृतमूल्यं तु दशाहं जनसंसदि।
ऋणानुरूपं परतो गृह्णीतान्यत्तु वर्जयेत्॥

मृते आधिमोक्षणादर्वागिति शेषः। नष्टे क्व गत इति चिरकालमविज्ञाते। अधमर्णिके अत्राधमर्णपदं ऋणादानाधिकारिपुत्राद्युपलक्षणम्। द्रव्यम् आधिकृतम्। ऋणानुरूपं द्विगुणादिद्रव्यपर्याप्तम्। अन्यत् अवशिष्टम्। अतः 'अन्यत्तु वर्जयेदि'ति वदता द्विगुणीभूतधनेऽपि धनिकस्याधावस्वामितोक्ता। ततश्च 'न चाधेः कालसंरोधादि'ति मनुवचनसमानार्थमिदमपि वचनमिति। अत्र हिरण्यपदं वस्त्रादेरुपलक्षणम्। द्विगुणपदं च तत्र वृद्ध्युपलक्षणम्। ततश्च वस्त्रादेर्या परा वृद्धिर्विहिता सैव ग्राह्या, नाधिकेति तात्पर्यार्थः।

अत एव हिरण्यादिविशेषानुल्लेखेनाह **कात्यायनः**

आधाता यत्र न स्यात्तु धनी बन्धं निवेदयेत्।
राज्ञस्ततस्तद्विख्यातो विक्रेय इति धारणा।
सवृद्धिकं गृहीत्वार्थं शेषं राजन्यथार्पयेत्॥ इति।

अत्राप्याधातृपदं पूर्ववदुपलक्षणम्। 'राजन्यथार्पयेदि'ति ज्ञात्यादिप्रत्यासन्नाभावविषयम्। तत्सद्भावे तत्रैवार्पणस्योचितत्वात्। यत्र शेषार्पणं क्रियते स एव चेत्सवृद्धिकं धनमुत्तमर्णाय दद्यात् तदा नाधिर्विक्रेयः, किन्तु धनदायार्पयेत्। अत एव प्रतीक्षणपक्षोऽप्युक्तः। यदा त्वस्मिन्नेव विषये धनी तमाधिमन्यत्रादध्यात्तदा स्वप्रयुक्तधनसमेनैव धनेनादध्यान्न तु सवृद्धिकेनापि।

तदुक्तं **प्रजापतिना**

धनी धनेन तेनैव परमाधिं नयेद्यदि।
कृत्वा तदाधिं विक्रेतुं पूर्वं वाऽस्य समर्पयेत्॥ इति।

एतच्चान्याधौ नियतसम्प्रतिपत्त्या द्वैगुण्यादर्वागप्यान्याधौ द्रष्टव्यम्। एवमुक्तज्ञात्यादा-

चर्पणान्तो विधिर्बहुमूल्यादिविषय एव, तत्रैव शेषार्पणादेः सम्भवात्। यदि सममूल्य तदा ससाक्षिकं विक्रीय स्वयमेव सर्वं गृह्णीयात्। न्यूनमूल्यत्वे च विक्रीय गृहीत्वाऽवशिष्टमृण-दानाधिकारिणि कथंचिदागते तस्माद्गृह्णीयादित्यादिकमुक्तवचन एवोक्तम्।

आधिविशेषणविशेषमाह याज्ञवल्क्यः

चरित्रबन्धककृतं सवृद्ध्या दापयेद्धनम्।
सत्यंकारकृतं द्रव्यं द्विगुणं प्रतिदापयेत्॥

चरित्र शोभनचरित स्वच्छाशयत्वादि तेन बन्धकम्। यथा धातु स्वच्छाशयत्वेनाल्प-मूल्यमप्यङ्गुलीयकादिकमाधिं गृहीत्वा बहुधनमुत्तमर्णः प्रयुक्ते। अधमर्णोऽपि ऋण गृहीत्वा द्वैगुण्यादौ जाते शान्तलाभत्वाद्धनाद्वृद्धेर्न चाधेराधानान्तर न च विक्रय कर्तुमनेन शक्य इति विसृश्य ऋणप्रतिदाने विलम्बमवलम्बते, तदा राजा सवृद्धिक द्वैगुण्यादूर्ध्वं दापयेत्। अथवा चरित्रमेव बन्धक चरित्रबन्धकम्। चरित्रपदेन चेष्टापूर्ताविजनितमपूर्वमुच्यते। अन्यत्पूर्ववत्। एवंविधे त्वाधावधमर्णस्य ऋणमप्रयच्छतो न ऋणबाध। तत्राधिनाशस्यैव जातत्वादितिभि-प्राय.। सत्यकारकृतमिति। करण कार। भावे घञ्। सत्यस्य कार सत्यकार। 'कारे सत्या-गदस्य' इति मुम् प्रत्ययः। सत्यकारेण कृत सत्यकारकृतम्। क्रयविक्रयादिव्यवस्थानिश्चयाय यदङ्गुलीयकादि परकरे निहित तद्व्यवस्थातिक्रमे द्विगुण दातव्यम्। तत्रापि येनाङ्गुलीयकादि दत्त स एव चेद्व्यवस्थातिक्रम करोति तदा तस्य तदेव हातव्यम्। इतरश्चेदतिक्रमी तदा तदे-वाङ्गुलीयकादि द्विगुण प्रतिदापयेदिति। एतच्चाधिप्रसङ्गतोऽभिहितमिति।

व्यासः

गोप्याधिं द्विगुणादूर्ध्वं मोचयेदधमर्णिकः। इति।

द्विगुणादूर्ध्वं प्रयुक्तधने शान्तलाभे सतीत्यर्थ। एतच्च द्वैगुण्यादिनिमित्ताधिनाशाभाव-विषयम्। तन्नाशविषये तु द्वैगुण्यादे प्रागेव मोचयेत्। तथा चाभिहित तेनैवाधस्तात्

अतोऽन्तरा धनं दत्वा ऋणी बन्धकमाप्नुयात्। इति।

यत्तु फलभोग्य बन्धक तत्तु मूलमात्र दत्वा फलकालान्ते वर्तमानमृणी समाप्नुयादित्याह स एव

फलभोग्यं पूर्णकालं दत्वा द्रव्यं तु सामकम्। इति।

अत्र ऋणी बन्धमवाप्नुयादित्यस्यानुषग। सममेव सामकम्, मूलमात्रमिति यावत्। यत्राधीकरणसमय एव यावन्मूल धन मया देय तावदयमाधिर्वृद्ध्यर्थं दत्त इति समयकरण तत्र द्वैगुण्यातिक्रमेऽपि मूलमात्र दत्वा ऋणी बन्ध प्राप्नुयादित्यर्थ।

याज्ञवल्क्यः

उपस्थितस्य मोक्तव्य आधिः स्तेनोऽन्यथा भवेत्।

प्रयोजकेऽसति धनं कुले न्यस्याधिमाप्नुयात् ॥
तत्कालकृतमूल्यो वा तत्र तिष्ठेदवृद्धिकः ।

उपस्थितस्य गृहीतधनप्रत्यर्पणेनाधिमोक्षणार्थमुपस्थितस्याधिर्धनिना न मोक्तव्यः । स्तेनः स्तेनवत् दण्ड्य इत्यर्थः । प्रयोजके उत्तमर्णे असति असन्निहिते । कुले प्रयोजककुले । न्यस्य धनं सवृद्धिकं न्यस्य, आप्नुयादधमर्ण इति शेषः । यदा तु प्रयोक्तुरसन्निधौ तदाप्तगृहीत्रभावे वाऽधमर्णस्य धनप्रतिदित्सा स्यात् तदाधेर्मूल्यं विधाय तद्गृह एवावृद्धिकं स्थापयेत्, तदूर्ध्वं धनं न वर्धत इत्यर्थः ।

बृहस्पतिः

क्षेत्रादिकं यदा भुक्तमुत्पन्नमधिकं ततः ।
मूलोदये प्रविष्टं चेत्तदाधिं प्राप्नुयादृणी ॥

आधिकृतं क्षेत्रादिकं यदा द्विगुणादिवृद्ध्या लाभे शान्ते पश्चादपि भुज्यते ततो भुज्यमानात् तस्मात् क्षेत्रान्मूलोदयसमं धनं यदा धनिके प्रविष्टं भवति तदा तस्मिन्काले ऋणी प्रतिदानं विनैवाधिं प्राप्नुयादित्यर्थः ।

याज्ञवल्क्योऽपि

यदा तु द्विगुणीभूतमृणमाधौ तदा खलु ।
मोच्य आधिस्तदुत्पन्ने प्रविष्टे द्विगुणे धने ॥ इति ।

मोच्यः आधिः, धनिना आधिर्मोक्तव्य इत्यर्थः ।

अत्र विषये विशेषमाह बृहस्पतिः

परिभाष्य यदा क्षेत्रं प्रदद्यात् धनिके ऋणी ।
त्वयेदं शान्तलाभेऽर्थे मोक्तव्यमिति निश्चितम् ॥
प्रविष्टे सोदये द्रव्ये प्रदातव्यं त्वया मम ॥ इति ।

यत्र ऋणग्रहणकाले त्वयेदमित्यादि परिभाष्याधिराधीयते तत्रैव पूर्वोक्ताधिलाभ इत्यर्थः ।

विष्णुरपि

गृहीतधनप्रवेशार्थमेव यत्स्थावरं दत्तं तद्गृहीतधनप्रवेशे दद्यात् । इति ।

एवं परिभाष्य आहितस्याधेर्लोके क्षयाधिरिति प्रसिद्धः । अत्र सोदयमूलं धनादिकं गृहीतं चेद्धनिना तदपि अधमर्णाय देयम् । यत्र त्वेवंभूतपरिभाषामकृत्वा वृद्ध्यर्थ एवाध्युपभोग इत्यधमर्णेन कृता परिभाषा तत्र सोदयादभ्यधिकेऽपि फले प्रविष्टेऽपि मूलदानं विना न कदाचिदप्याधिलाभ इत्यनुसन्धेयम् ।

बृहस्पतिः

यदि प्रकर्पितं तत्स्यात्र तदा धनभाग्धनी ।
ऋणी च न लभेद्बन्धं परस्परमतं विना ॥

सवृद्धिनिमित्तकभोगार्थं दत्तं बन्धकं प्रकर्षितं वृद्धेरप्यधिकफलं यदि स्यात्तदा धनी उत्तमर्णो न धनभाक्, उत्तमर्णाद्गृहीतं धनं तस्मात् अप्रदायैव स्वमाधिमधमर्णो लभत इत्यर्थः। यदा पुनस्तद्बन्धकमप्रकर्षितं वृद्धयेऽप्यपर्याप्तं तदा ऋणी सामकं धनं दत्त्वा न स्वमाधिं लभते, किन्तु वृद्धिशेषं पूरयित्वेत्यर्थः। इदं चोत्तमर्णाधमर्णयोः परस्परानुमतौ। अनुमतौ तु अधिकमपि बन्धकं मूलधनप्रदानपर्यन्तमुत्तमर्ण उपभुंक्त एव। तथा अधमर्णोऽपि वृद्धयपर्याप्तमपि स्वकीयं बन्धकं मूलधनमात्रप्रत्यर्पणेनैव लभत इति।

इत्याधिः

---

## अथ प्रतिभूनिर्णयः

तत्र याज्ञवल्क्यः

दर्शने प्रत्यये दाने प्रातिभाव्यं विधीयते। इति।

प्रातिभाव्यं नाम विश्वासार्थं पुरुषान्तरेण सह सङ्केतः। दर्शने यदैतद्दर्शनापेक्षा तव स्यात् तदैवैनमानीय दर्शयिष्यामीति। प्रत्यये विश्वासे, यथा—साधुरयं धनी विशिष्टकुलोत्पन्नो नायं वञ्चकः, प्रयच्छाऽस्मै धनमिति। दाने प्रत्यर्पणे, यथा—यद्ययं धनं न दास्यति तदाऽहमेवानेन गृहीतं धनं सवृद्धिकं दास्यामीति। एषु त्रिषु प्रातिभाव्यं विधीयत इति प्रत्येकं सम्बन्धः। एतच्च त्रैविध्यं प्रकारान्तरस्याप्युपलक्षणम्।

तथा च बृहस्पतिः

दर्शने प्रत्यये दाने ऋणे द्रव्यार्पणे तथा।
चतुःप्रकारः प्रतिभूः शास्त्रे दृष्टो मनीषिभिः॥
आहैको दर्शयाम्येनं साधुरेषोऽपरोऽब्रवीत्।
दाताऽहमेतद्द्रविणमर्पयाम्यपरो वदेत्॥ इति।

ऋणे ऋणदान इति सम्बन्धः। अर्पणमत्र याचितकविषयम्। तेन केनापि किञ्चिद्लङ्कारादिकं याचनयाऽऽनीत तत्र चेदन्योऽभिधत्ते यद्ययं न प्रत्यर्पयति तदाऽहमानीय दर्शयिष्यामीति। अत्रार्पणमात्रम्, ऋणे तु दानमेवेति द्वयोर्भेदोपन्यासः। क्वचित्तु 'ऋणिद्रव्यार्पणे' इत्यपि पाठः। तत्र ऋणिनो यद्द्रव्यं गृहोपकरणादि तस्यार्पणे।

हारीतः

अभये प्रत्यये दाने उपस्थाने प्रदर्शने।
पञ्चस्वेषु प्रकारेषु ग्राह्यो हि प्रतिभूर्बुधैः॥

अभये बन्धवधादिपीडाया अकरणे। उपस्थानमत्र बन्धकद्रव्यार्पणम्, न दर्शनम्; तस्य पृथगुपादानात्।

**व्यासः**

लेख्येऽकृते च दिव्ये वा दानप्रत्ययदर्शने।
गृहीतबन्धोपस्थाने ऋणिद्रव्यार्पणे तथा॥

अत्र प्रतिभुवो भवन्तीति शेषः। लेख्येऽकृते अकृते लेख्ये। दर्शने दिव्ये वा अकृत इत्यनुषङ्गः।

**कात्यायनः**

दानोपस्थानवादेषु विश्वासशपथाय च।
लग्नकं कारयेदेवं यथायोगं विपर्यये॥

उपस्थानमत्र दर्शनम्। वादो विवादः। तत्र प्रत्यर्थिसमानयनोर्ध्वं साधितधनादिप्राप्तये सभ्यैः प्रतिभूग्रहणं कार्यं विश्वासे विश्वासार्थम्, दासादावाशङ्कायां सत्यामित्यर्थः। शपथाय शपथार्थं शपथविलम्बे सति। यथेत्यादि। विपर्यये अन्यस्मिन्नपि कार्यन्यत्यासविषये यथायोगं यथासम्भवमुक्तप्रकारेण लग्नकं कारयेदित्यर्थः। एवं च धूर्तदायादसंभावानायां सत्यां गोप्याधायाधिपालने भोग्याधावुपभोजयितु बहुमूल्याधावाधिप्रत्यर्पणायेत्येवमादिषु प्रतिभूर्ग्राह्य इत्यवगन्तव्यम्। अन्ये तु दानोपस्थानेत्यत्र तृतीयचरणे 'लग्नकं दापयेद्देय'मिति पठन्ति, विपर्यये अन्यथात्वे देयं धनम्।

प्रतिभुवामसाधारणधर्मविषये **मनुः**

यो यस्य प्रतिभूस्तिष्ठेद्दर्शनायेह मानवः।
अदर्शयन्स तं तस्य प्रयच्छेत्स्वधनादृणम्॥

दर्शनायादीयमान ऋणिकं दर्शयिष्यामीति यस्तिष्ठेत् सोऽदर्शयन्स्वधनादृणं प्रयच्छेत्। एतच्चोपलक्षणम्—तेनायमेतादृशो धनी पुत्री आप्तश्चेत्यादिष्वर्थेषु मद्वचसा प्रत्ययः क्रियतामित्येवं प्रत्ययप्रतिभूरपि प्रत्ययविपर्यये धनं प्रयच्छेदिति द्रष्टव्यम्।

अत एव **बृहस्पतिः**

आद्यौ तु वितथे दाप्यौ तत्कालावेदितं धनम्।
उत्तरौ तु विसंवादे तौ विना तत्सुतौ तथा॥

आद्यौ दर्शनप्रत्ययप्रतिभुवौ। उत्तरौ ऋणद्रव्यार्पणप्रतिभुवौ।

**कात्यायनोऽपि**

दर्शनप्रतिभूर्यस्तं देशे काले न दर्शयेत्।
निबन्धमावहेत्तत्र दैवराजकृतादृते॥

निबन्धं देयं द्रव्यम् । आवहेत् धनिने प्रापयेत् । दर्शने तु प्रातिभाव्यान्मुक्तिरुक्ता तेनैव

यद्यसौ दर्शयेत्तत्र मोक्तव्यः प्रतिभूर्भवेत् ।

यदा तु दर्शनीयः क्वास्त इति न प्रतीतिः तदा लग्नकस्य तदन्वेषणाय कालदानमाह बृहस्पतिः

नष्टस्यान्वेषणे कालं दद्यात्प्रतिभुवे धनी ।
देशानुरूपतः पक्षं मासं सार्धमथापि वा ॥

इदं च सार्धमासदानं परमावधित्वेनैव बोद्धव्यम् ।

तथा च कात्यायनः

नष्टस्यान्वेषणार्थं तु देयं पक्षत्रयं परम् ।
यद्यसौ दर्शयेत्तत्र मोक्तव्यः प्रतिभूर्भवेत् ॥
काले व्यतीते प्रतिभूर्यदि तन्नैव दर्शयेत् ।
स तमर्थं प्रदाप्यः स्यात्प्रेते चैवं विधिः स्मृतः ॥

अत्र प्रदापनं शनैः शनैः कार्यं, न पीडया ।

नात्यन्तं पीडनीयाः स्युर्ऋणं दाप्याः शनैः शनैः ॥

इति बृहस्पतिवचनात् ।

आधिपालविषये पितामहः

आधिपालकृतस्त्वाधिर्मितकालोपलक्षणः ।
न चेत्स धनिने दत्तस्तत्राधेस्तैः समर्पणम् ॥

तैः प्रतिभूभिः । अत्र तैरिति बहुवचनमेकत्वादिसंख्योपलक्षणम् ।

अत एव हारीतः

विश्वासार्थं कृतः स्वाधिर्न प्राप्तो धनिना यदा ।
प्रापणीयस्ततस्तेन देयं वा धनिने धनम् ॥

तेन आधिपालकेनेत्यर्थः । अत्र प्रापयितुमशक्यत्वे धनदानपक्षो बोद्धव्यः ।

प्रतिभूपुत्रादिविषये याज्ञवल्क्यः

दर्शनप्रतिभूर्यत्र मृतः प्रात्ययिकोऽपि वा ।
न तत्पुत्रा ऋणं दद्युर्दद्युर्दानाय यः स्थितः ॥

प्रात्ययिकः प्रत्ययप्रतिभूरित्यर्थः । ऋणं पितृप्रातिभाव्यागतं दानाय दानप्रतिभूत्वेन यः स्थितः तत्पुत्रा ऋणं दद्युरित्यर्थः । यदा तु देयत्वेन प्राप्तमृणं प्रतिभुवः तत्पुत्रादयोऽपि वा न दद्युस्तदा राज्ञा दापनीयः ।

तथा याज्ञवल्क्यः

आद्यौ तु वितथे दाप्यावितरस्य सुता अपि ।

व्यासः

विप्रत्यये लेख्यदिव्यदर्शने वाऽकृते सति ।
ऋणं दाप्याः प्रतिभुवः पुत्रं तेषां न दापयेत् ।
दानवादप्रतिभुवौ प्रदाप्यौ तत्सुतौ तथा ॥

यत्तु

प्रातिभाव्यं वृथादानमाक्षिकं सौरिकं च यत् ।
दण्डं शुल्कावशेषं च न पुत्रो दातुमर्हति ॥

इति मनुवचनं, तद्दर्शनादिप्रातिभाव्यविषयम् ।

दर्शनप्रातिभाव्ये तु विधिः स्यात्पूर्वचोदितः ।

इति समनंतरमेव, तेनैवाभिहितत्वात् । दर्शनपदमत्र विप्रत्ययाद्युपलक्षणम् ।

अत्रापि क्वचिदपवादमाह कात्यायनः

गृहीत्वा बन्धकं यस्तु दर्शनेऽस्य स्थितो भवेत् ।
विभाव्य वादिना तस्माद्दाप्यः स्यात्तदृणं सुतः ॥

क्वचित् 'विना पित्रा धनं तस्मादि'ति तृतीयचरणे पाठः । तत्र विना पित्रा पितरि प्रेते दूरदेशं गते चेत्यर्थः । तस्माद्गृहीतबन्धकरूपात् ।

मनुः

अदातरि पुनर्दाता विज्ञातप्रकृतावृणम् ।
पश्चात्प्रतिभुवि प्रेते परीप्सेत्केन हेतुना ॥
निरादिष्टधनश्चेत्तु प्रतिभूः स्यादलंधनः ।
स्वधनादेव तद्दद्यान्निरादिष्ट इति स्थितिः ॥

अस्यार्थः- प्रतिभुव्यदातरि । दानार्थमभूते विज्ञातप्रकृतौ प्रथममेव दर्शनादिनियमकरणेन निश्चितादातृत्वस्वभावे प्रेते ऋणं दाता उत्तमर्णः केन हेतुना तत्पुत्रादादातुमीप्सेत् । यत एव दानार्थं नासौ प्रतिभूः कृतः । पित्रा च देयत्वेनांगीकृतमेव धनं पुत्रादिना दायादेन दातव्यम्, अतोऽन्यथा न देयमित्यर्थः । तत्किमेवं सर्वत्र नेत्याह—निरादिष्टेति । दर्शनप्रत्ययादिप्रतिभाव्यकाल एव दानार्थं यदि प्रतिभूर्धारणिकेन निरादिष्टधनो दत्तधनः स्यात्तत्र दत्तं तस्मै धनं धार्यमाणशोधनायालं पर्याप्तं यस्य सोऽलंधनः तदा निरादिष्टो दत्तधनः स तस्मिन्द्रव्ये व्ययितेऽपि स्वधनादेवाकृष्य दद्यात्, तथा च तद्दायादैरपि तद्देयमेवेत्यर्थः । अलंधन इति सर्वदाऽनमपेक्ष्य । अल्पेऽपि स्थापिते तावदेव शोधनीयं, न सर्वं धनं देयम् ।

इदं च प्रातिभाव्यसम्बन्धिपैतृकमृणं कलारहितमेव दद्यादित्याह **व्यासः**

ऋणं पैतामहं पौत्रः प्रातिभाव्यागतं सुतः ।
समं दद्यात्तत्सुतौ तु न दाप्याविति निश्चयः ॥

अस्यार्थः—प्रातिभाव्यव्यतिरिक्तं पितामहसम्बन्ध्यृणं पौत्रः समं यावत्पितामहेन गृहीतं तावद्दद्यात् न वृद्धिः । तथा सुतोऽपि प्रातिभाव्याऽऽयातं पैतृकमृणं सममेव दद्यात् । तत्सुतौ तयोः पौत्रप्रतिभूसुतयोर्यौ सुतौ प्रपौत्रप्रतिभूपौत्रौ तौ तु अप्रातिभाव्यागतं प्रातिभाव्यागतं च ऋणं यथाक्रमं न दाप्यौ, यदि तावगृहीतधनौ स्यातामिति ।

अनेकप्रतिभूविषये विशेषमाह **याज्ञवल्क्यः**

बहवः स्युर्यदि स्वांशैर्दद्युः प्रतिभुवो धनम् ।
एकच्छायाश्रितेष्वेषु धनिकस्य यथारुचि ॥

बहुपदं द्वयोरप्युपलक्षणम् । एकच्छायेति । एकस्याधमर्णस्य छायासादृश्यं सकलधनदायकत्वरूपतां प्रत्येकं विकल्पेनाश्रिता अधमर्णवत् सकलर्णदानार्थं स्थिता इत्यर्थः । तेषु धनिकस्य यथारुचि वित्ताद्यपेक्षया धनिकोऽयं प्रतिभुवं स्वार्थं प्रार्थयते स एवाखिलमृणं दद्यात् इत्यर्थः । इदं च प्रात्ययिकादिप्रतिभूमात्रविषये विज्ञेयम् । यत्र पुनर्धनिकस्य समा रुचिस्तत्र सर्वेऽपि पूर्ववत्स्वांशैर्दद्युः, 'समं स्याद्श्रुतत्वादि'ति न्यायस्यात्रापि समानत्वात् ।

एकच्छायाश्रितप्रतिभूवत् तत्सुतेऽपि प्राप्तावपवादमाह **कात्यायनः**

एकच्छायाश्रिते सर्वं दद्यातु प्रोषिते सुतः ।
मृते पितरि पित्रंशं परर्णं न बृहस्पतिः ॥

परर्णं एकच्छायाश्रितलग्नकान्तरसम्बन्धि ऋणम् । अत्रापि मूलसममेव देयम् ।

पुत्रेणापि समं देयमृणं सर्वं तु पैतृकम् ।

इति **बृहस्पति**वचनात् ।

समं मूलमात्रं ऋणं प्रातिभाव्यागतं तथा ।
एकच्छायाप्रतिष्ठानां दायो यस्तत्र दृश्यते ।
प्रोषिते तत्सुतः सर्वं पित्रंशं तु मृते तु सः ॥ इति ।

प्रतिभुवो दुष्टत्वे **पितामहः**

यो यस्य प्रतिभूर्भूत्वा मिथ्या चैव तु गच्छति ।
धनिकस्य धनं दाप्यः कर्ता दण्डं च तत्समम् ॥
कुर्याच्चेत्प्रतिभूर्वादमृणिकार्थेऽर्थिना सह ।
सोपसर्गस्तदा दण्ड्यो विवादाद्विगुणं धनम् ॥ इति ।

सोपसर्गो विलम्बकारी ।

लग्नकादिदत्तप्रतिक्रियाविषये याज्ञवल्क्यः

प्रतिभूर्दापितो यत्तु प्रकाशं धनिनो धनम् ।
द्विगुणं प्रतिदातव्यमृणिकैस्तस्य तद्भवेत् ॥

दापितः राज्ञेति शेषः। प्रकाशं सर्वजनसमक्षम्। अत्र दापित इति वदता धनद्वैगुण्यलोभेन स्वयमेवोपेत्य ददतः प्रतिभुवो न द्वैगुण्यप्राप्तिः, किन्तु धनिकपीडया ददत इति दर्शितम्।

तथा च नारदः

यं चार्थं प्रतिभूर्दद्याद्धनिकेनोपपीडितः ।
ऋणिकैस्तत्प्रतिभुवे द्विगुणं प्रतिदापयेत् ॥

एतच्च त्रिपक्षानन्तरप्रतिदानविषयम् ।

तथा च कात्यायनः

प्रातिभाव्यं तु यो दद्यात्पीडितः प्रतिभावितः ।
त्रिपक्षात्परतः सोऽर्थं द्विगुणं लब्धुमर्हति ॥

प्रतिभावितः प्रतिभूत्वेनाकारितः । अत्र त्रिपक्षानन्तरं द्वैगुण्याभिधानात्तत्पूर्वं समये च देयमित्यवगम्यते। केचित्तु त्रिपक्षात्परतस्त्वाकारितापि वृद्धिर्भवति, ततः कालेन द्वैगुण्यं नत्वेक्षावतैव द्वैगुण्यमित्याहुः—तच्चिन्त्यम् । तथाऽन्यदपि द्रव्यमधमर्णार्थे व्ययितं प्रतिभुवेऽधमर्णेन देयम्।

तथा च कात्यायनः

अस्यार्थे येन यद्दत्तं ऋणिना पीडितेन तु ।
साक्षिभिर्भावितेनैव प्रतिभूस्तत्समाप्नुयात् ॥

इदं च द्वैगुण्यदानं हिरण्यविषयम्।

पश्वादौ तु विशेषमाह याज्ञवल्क्यः

संततिस्त्रीपशुष्वेव धान्यं त्रिगुणमेव च ।
वस्त्रं चतुर्गुणं प्रोक्तं रसश्चाष्टगुणः स्मृतः ॥

एतेनैतदुक्तं भवति—यस्य द्रव्यस्य यावती परा वृद्धिरुक्ता तस्य द्रव्यस्य प्रतिभुवा दत्तस्याधमर्णेन तावत् वृद्धिसहितस्यैव प्रतिभुवे दानमिति। पशुस्त्रीणां संततभावे स्वरूपदानमेव।

प्रातिभाव्ये निषिद्धानाह कात्यायनः

न स्वामी न च वै शत्रुः स्वामिनाऽधिकृतस्तथा ।
निरुद्धो दण्डितश्चैव सन्दिग्धश्चैव न क्वचित् ॥
नैव रिक्थी न मित्रं च न चैवात्यन्तवासिनः ।
राजकार्ये नियुक्ताश्च ये च प्रव्रजिता नराः ॥

नाशक्तो धनिने दातुं दण्डं राज्ञे च तत्समम् ।
नाविज्ञातो ग्रहीतव्यः प्रतिभूः स्वक्रियां प्रति ॥

सन्दिग्धोऽभिशस्तः । अत्यन्तवासिनो नैष्ठिकब्रह्मचारिणः । तत्समं विवादास्पदीभूतद्रव्यसमम् । 'नैव रिक्थी' इत्यविभक्तविषयम् ।

भ्रातॄणामथ दम्पत्योः पितुः पुत्रस्य चैव हि ।
प्रातिभाव्यमृणं साक्ष्यमविभक्ते न तु स्मृतम् ॥

इति **याज्ञवल्क्य**स्मरणात् ।

साक्षित्वं प्रातिभाव्यं च दानं ग्रहणमेव च ।
विभक्ता भ्रातरः कुर्युर्नाविभक्ताः परस्परम् ॥

इति **नारद**वचनाच्च ।

**इति प्रतिभूनिर्णयप्रकरणम्**

---

## अथ ऋणप्रतिदानाधिकारिणः

तत्र **बृहस्पतिः**

याचमानाय दातव्यमल्पकालकृतं ऋणम् ।
पूर्णावधौ शान्तलाभमभावे तु पितुः सुतैः ॥

दातव्यं धनग्राहिणेति शेषः । अल्पकालकृतं धनिकेच्छया कृतनियतदानकालम् । पुत्रस्य ऋणदानावश्यकत्वे हेतुमाह **नारदः**

इच्छन्ति पितरः पुत्रान्स्वार्थहेतोर्यतस्ततः ।
उत्तमर्णाधमर्णाभ्यां मामयं मोक्षयिष्यति ॥
अतः पुत्रेण जातेन स्वार्थमुत्सृज्य यत्नतः ।
ऋणात्पिता मोचनीयो यथा न नरकं व्रजेत् ॥

यतस्ततः भार्योपयमपुत्रिकाकरणप्रतिग्रहाद्युपायानां मध्ये येनकेनचिदुपायेनेत्यर्थः । उत्तमर्णाधमर्णाभ्यां इति । 'जायमानो वै ब्राह्मणस्त्रिभिर्ऋणवा जायते ब्रह्मचर्येण ऋषिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्यः' इति श्रुत्युक्तम् । उत्तमर्ण-उत्तमाः पितरस्तत्सम्बन्धित्वात् । अधमर्ण परस्माद् वृद्ध्या गृहीतम् । अधमा मनुष्यास्तत्सम्बन्धित्वात् । अथवा उत्तमर्णाधमर्णशब्दाभ्यां लक्षणया कुसीदजीवितयेव गृहीतमृणमवगन्तव्यम् ।

अत एव **कात्यायनः**

पितॄणां सूनुभिर्जातैर्दानेनैवाधमादृणात् ।
विमोक्षस्तु यतस्तस्मादिच्छन्ति पितरः सुतान् ॥ इति ।

दानेन ऋणप्रतिदानेनास्वार्थं उपभोगादिरूपम् । जातेन व्यवहारज्ञतया निष्पन्नेन, न तूत्पन्नमात्रादिना, तस्य व्यवहारानभिज्ञत्वेन ऋणदानान(?)धिकारात् ।

यथाह **नारदः**

अप्राप्तव्यवहारश्चेत्स्वतंत्रोऽपि हि नर्णभाक् ।
स्वातन्त्र्यं हि स्मृतं ज्येष्ठे ज्यैष्ठ्यं गुणवयःकृतम् ॥

प्राप्तव्यवहारश्च पूर्णषोडशवर्षो भवति, स्वतन्त्रस्तु बाल्यदशायामपि पितृमरणाद्भवति ।

तथा च स एव

गर्भस्थैः सदृशो ज्ञेय आऽष्टमाद्वत्सराच्छिशुः ।
बाल आषोडशाद्वर्षात्पोगण्डश्चेति कथ्यते ॥
परतो व्यवहारज्ञः स्वतन्त्रः पितरावृते ॥ इति ।

एवं च पितर्युपरतेऽप्यप्राप्तव्यवहारैर्न देयमृणं अदाने दोषाभावात् । प्राप्तव्यवहारैस्तु सर्वथा देयम्, अदाने दोषसम्भवात् ।

तदुक्तं **कात्यायनेन**

नाप्राप्तव्यवहारैस्तु पितर्युपरते क्वचित् ।
काले तु विधिना देयं वसेयुर्नरकेऽन्यथा ॥ इति ।

क्वचिदित्यत्र देश इत्यनुषज्यते । विधिना ऋणप्रतिदानप्रदर्शितेन ।

तथा

विद्यमानेऽपि रोगार्ते स्वदेशात्प्रोषिते तथा ।
विंशात्संवत्सराद्देयं ऋणं पितृकृतं सुतैः ॥

विंशात्संवत्सरात् प्रवासदिनमारभ्येति शेषः ।

**बृहस्पतिः**

सान्निध्येऽपि पितुः पुत्रैर्ऋणं देयं विभावितम् ।
जात्यन्धपतितोन्मत्तक्षयश्वित्रादिरोगिणः ॥

अत्रादिपदेन दुश्चिकित्स्यरोगसमहो न तु ज्वरादेः । क्वचिदुपरते प्रोषिते पितरि व्याध्यादिदूषिते वा जात्यन्धादिभिः पुत्रैर्न देयमित्याह **कात्यायनः**

ऋणं तु दापयेत्पुत्रं यदि स्यान्निरुपद्रवः ।
द्रविणार्हश्च धुर्यश्च नान्यथा दापयेत्सुतम् ॥

द्रविणार्हः पितृद्रव्यभागार्हः । धुर्यः पितुर्धुरो यो वोढा । अत्रार्ह इति वदन् पितुर्द्रव्या-

ग्रहणेऽपि पुत्रो दाप्य इति दर्शयति । नान्यथेत्यनेन च दुश्चिकित्स्यरोगाद्यभिभूतः पैतृकधनानर्होऽन्धपंढादिरधुर्यश्च पितृकृतर्णापाकरणानधिकारिण इत्युक्तम् । धुर्यैश्चेत्येतत्प्रधानोपसर्जनतया वर्तमानानेकपुत्रविषयम् ।

तथा च नारदः

पितर्युपरते पुत्रा ऋणं दद्युर्यथांशतः ।
विभक्ता ह्यविभक्ता वा यस्तां वोढहते धुरम् ॥ इति ।

यथांशत इत्येतद्विषमांशगृहीतृपुत्रविषयम् । समांशग्राहिणः समानमेव दद्युः । अविभक्ताश्चेत्संभूय समुत्थानेन दद्युर्यदि ते समप्रधानभूताः । प्रधानोपसर्जनभावेन वर्तमानेषु तु तेषु यः प्रधानभूतः स एव कृत्स्नं दद्यात्, उपसर्जनस्यानधिकारात् । पितृकृतस्वकृतर्णसद्भावे प्रथमं पितृकृतं देयं, तदप्यात्मीयवदेव देयम् ।

तथा च बृहस्पतिः

पित्र्यमेवाग्रतो देयं पश्चादात्मीयमेव च ।
ऋणमात्मीयवत्पित्र्यं पुत्रैर्देयं विभावितम् ॥

आत्मीयवत्, यथात्मीयं सवृद्धिकं देयं तथेत्यर्थः । क्वचित्पितृकृतऋणादानापवादमाह स एव

सौराक्षिकं वृथादानं कामक्रोधप्रतिश्रुतम् ।
प्रातिभाव्यं दण्डशुल्कशेषं पुत्रैर्न दापयेत् ॥

सौराक्षिकं सुरापाननिमित्तकं द्यूतपराजयनिमित्तकं च । वृथादानं निष्फलं दानम् ।

धूर्ते वंदिनि मल्ले च कुवैद्ये कितवे शठे ।
चाटचारणचौरेषु दत्तं भवति निष्फलम् ॥

इत्याद्युक्तं कामक्रोधप्रतिश्रुतम् ।

तल्लक्षणं कात्यायन आह

लिखितं मुक्तकं वाऽपि देयं यत्तु प्रतिश्रुतम् ।
परपूर्वस्त्रियै तत्तु विद्यात्कामकृतं नृणाम् ॥
यत्र हिंसां समुत्पाद्य क्रोधाद्द्रव्यं विनाश्य वा ।
उक्तं तुष्टिकरं यत्तु विद्यात्क्रोधकृतं तु तद् ॥

मुक्तकं लेखनशून्यम् । परपूर्वस्त्रियै परभार्यायै । यत्र हिंसामित्यादि । परस्य हिंसासाधनविशेषं कृत्या द्रव्यं वा नाशयित्वा तत्तुष्ट्यर्थं द्रव्यं दास्यामीति प्रतिश्रुतं तत्क्रोधकृत्यमित्यर्थः । प्रातिभाव्यं दर्शनादिप्रतिभूदेयं प्रतिभूप्रकरणप्रपञ्चितं दण्डम् ।

**व्यासः**

दण्डं वा दण्डशेषं वा शुल्कं तच्छेषमेव वा ।
न दातव्यं तु पुत्रेण यच्च न व्यावहारिकम् ॥ इति ।

पौत्रदेयऋणविषये **कात्यायनः**

पित्रा दृष्टमृणं यस्तु क्रमायातं पितामहात् ।
निर्दोषं नोद्धृतं पुत्रैर्देयं पौत्रैस्तु तद्गुः ॥

पित्रा दृष्टं स्वपितृकृतत्वेन निश्चितम् । क्रमायातं क्रमप्राप्तं निर्दोषं अदेयत्वनिष्पादकादोषविधुरम् । नोद्धृतं पुत्रैर्दुश्चिकित्स्यरोगादिवशादनपाकृतम् ।

तथा च **स** एव

पैतामहं तु यत्पुत्रैर्न दत्तं रोगिभिः स्थितैः ।
तस्मादेवंविधं पुत्रैर्देयं पैतामहं समम् ।
सदोषं व्याहृतं पित्रा नैव देयमृणं क्वचित् ॥

समं वृद्धिरहितम् । सदोषं सुराकामादिव्यसनदोषयुक्तम्, पित्रा व्याहृतं निराकृतमपाकृतं हृतमदृष्टं वा । इदं यद्यत्पुत्रस्यादेयत्वेनोक्तं तत्सर्वं पौत्रैरप्यदेयमित्यदेयत्वोपलक्षणार्थं सदोषग्रहणमित्यवगन्तव्यम् ।

अत्र **विष्णुः**

धनग्राहिणि प्रेते प्रव्रजिते द्विदशाः समाः प्रोषिते वा तत्पुत्रपौत्रैर्धनं देयम् । नातः परमभीप्सुभिः । इति ।

नातः परमित्यादि । विंशतिवर्षादूर्ध्वं विलम्बो न कार्यो धनप्रतिदानमभीप्सुभिरित्यर्थः । यद्वा अतःपरं पुनर्पौत्रेभ्यः परं प्रपौत्रादिभिः ऋणं जानानैरपि न देयमिति ।

अत एव **कात्यायनः**

पित्रभावे तु दातव्यमृणं पौत्रेण यत्नतः ।
चतुर्थेन न दातव्यं तस्मात्तद्धि निवर्तते ॥

**नारदो**ऽपि

क्रमादव्याहतं प्राप्तं पुत्रैर्यन्नर्णमुद्धृतम् ।
दद्युः पैतामहं पौत्रास्तच्चतुर्थान्निवर्तते ॥ इति ।

इदं च प्रपितामहगृहीतर्णानपाकरणमगृहीततद्धनस्यैव, न गृहीतधनस्यापि ।

दानक्रममाह **बृहस्पतिः**

तयोः पैतामहं पूर्वं देयमेव ऋणं सदा । इति ।

तयोः ताभ्यां पितृभ्यात्मीयाभ्यामित्यर्थः । अथवा तयोः पितृपितामहर्णयोः । अत्रापि धुर्यपौत्रान्तरसद्भावे अविभक्तस्य या पितृव्यादेः सद्भावे । प्रधानभूतेषु नानापौत्रेषु वा सविभागेषु प्राप्ताप्राप्तव्यवहारविषये स्वातन्त्र्यास्वातन्त्र्यविषये च निर्णयः पुत्रविषयेवन्निर्णयवद् विशेयः ।

ऋक्थग्राहविषये याज्ञवल्क्यः

ऋक्थग्राह ऋणं दाप्यो योषिद्ग्राहस्तथैव च ।
पुत्रोऽनन्याश्रितद्रव्यः पुत्रहीनस्य ऋक्थिनः ॥

विभागयोग्यं द्रव्यमृक्थं तद्विभागद्वारा यो गृह्णाति स ऋक्थग्राहः, स ऋणं दाप्यः । रागादिवशात्परभार्यां यो भार्यात्वेन स्वीकरोति स योषिद्ग्राहः, न तु पुत्रोत्पादकतया नियुक्तो जारो वा, तयोरुपगममात्रकारित्वेन ग्राहकत्वाभावात् । अत्र योषितो विभाज्यद्रव्यत्वेन ऋक्थ-व्यपदेशानर्हत्वात् पृथगुपादानम् । पुत्रोऽनन्याश्रितद्रव्यः यदीयमातापितृसम्बन्धि द्रव्यं नान्यथाश्रितं तथा । पुत्रहीनस्य ऋक्थिनः ये ऋक्थं गृह्णन्ति ते ऋणं दाप्या इति । एतेनैतदुक्तं भवति—ऋक्थग्राह ऋणं दाप्यस्तदभावे योषिद्ग्राहस्तदभावे पुत्र इति । न च

न भ्रातरो न पितरः पुत्रा ऋक्थहराः पितुः ।

इति वचनात्पुत्रसद्भावेऽन्यस्य ऋक्थग्रहणासम्भवाद् 'ऋक्थग्राह ऋणं दाप्यः' इत्यनुपपन्नमिति वाच्यम् ।

क्लीबोऽथ पतितस्तज्जः पङ्गुरुन्मत्तको जडः ।
अन्धोऽचिकित्स्यरोगाद्या भर्तव्यास्ते निरंशकाः ॥
पितृद्विट्पतितः षण्ढो यश्च स्यादौपपातिकः ।
औरसा अपि नैतेंऽशं लभेयुः क्षेत्रजाः कुतः ॥

तथा

सवर्णापुत्रोऽप्यन्यायवृत्तो न लभेतैकेषाम् ।

इत्यादियाज्ञवल्क्यनारदगौतमादिवचनोक्तानां पुत्रत्वेऽपि ऋक्थानर्हत्वसम्भवात् । न च

न द्वितीयस्तु साध्वीनां क्वचिद्भर्तोपदिश्यते ॥

इति वचनाद्योषिद्ग्राहस्य च शास्त्रविरुद्धत्वात् 'योषिद्ग्राहस्तथैव चे'त्येतदपि विरुद्धमित्यपि वाच्यम् ।

अन्तिमा स्वैरिणीनां या प्रथमा च पुनर्भुवाम् ।
ऋणं तयोः पतिकृतं दद्याद्यस्ते उपाश्नुते ॥
अधनस्य ह्यपुत्रस्य मृतस्योपैति यः स्त्रियम् ।
ऋणं वोढुः स भजते सैव तस्य धनं स्मृतम् ॥
या तु सप्रधनैव स्त्री सापत्या वान्यमाश्रयेत् ।
सोऽस्या दद्यादृणं भर्तुरुत्सृजेद्वा तथैव ताम् ॥

इत्यादिनारदादिवचनेष्वतिक्रान्तनिषेधस्य रागिणः स्वैरिणीपुनर्भूविशेषाधिकधनसापत्यस्त्रीपरि-ग्राहिणस्तत्पूर्वपतिऋणदानदर्शनात् । अन्तिमा चतुर्थी प्रथमा तिसृणाम् ।

एतदेव विविच्याह **नारदः**

परपूर्वाः स्त्रियस्त्वन्याः सप्त प्रोक्ता यथाक्रमम् ।
पुनर्भूस्त्रिविधा तासां स्वैरिणी तु चतुर्विधा ॥
कन्यैवाक्षतयोनिर्या पाणिग्रहणदूषिता ।
पुनर्भूः प्रथमा प्रोक्ता पुनःसंस्कारकर्मणा ॥
कौमारं पतिमुत्सृज्य या त्वन्यं पुरुषं श्रिता ।
पुनः पत्युर्गृहं यायात्सा द्वितीया प्रकीर्तिता ॥
असत्सु देवरेषु स्त्री बान्धवैर्या प्रदीयते ।
सवर्णाय सपिण्डाय सा तृतीया प्रकीर्तिता ॥
स्त्री प्रसूताऽप्रसूता वा पत्यावेव तु जीवति ।
कामात्समाश्रयेदन्यं प्रथमा स्वैरिणी तु सा ॥
मृते भर्तरि तु प्राप्तान्देवरादीनपास्य या ।
उपगच्छेत्परं कामात्सा द्वितीया प्रकीर्तिता ॥
प्राप्ता देशाद्धनक्रीता क्षुत्पिपासातुरा तु या ।
तवाऽहमित्युपगता सा तृतीया प्रकीर्तिता ॥
देशधर्मानवेक्ष्य स्त्री गुरुभिर्या प्रदीयते ।
उत्पन्नसाहसाऽन्यस्मै साऽन्तिमा स्वैरिणी स्मृता ॥

उत्पन्नसाहसा उत्पन्नव्यभिचारा । नापि 'पुत्रपौत्रैर्ऋणं देय'मिति **याज्ञवल्क्येनै**वोक्तत्वात् 'पुत्रो दाप्य' इत्यनेन पौनरुक्त्यमाशङ्कनीयम्, एतस्य क्रमार्थत्वेन तदभावात् । नापि पुत्रे सति द्रव्यस्यान्याश्रयणासम्भवादनन्याश्रितद्रव्य इति विशेषणमनर्थकमाशङ्कनीयम्, अनेकपुत्रेषु ऋक्थाभावेऽप्यंशग्रहणाधिकारिण एवार्णापाकरणेऽधिकारो नानाधिकारिणोऽन्धादेरित्येवंपरत्वेन सार्थकत्वात् । न चैतदपि मन्तव्यं यत्पुत्रे सत्यपि ऋक्थग्राहिण ऋणादानाभिधाने कैमुतिकन्यायेनासति पुत्रे तस्य सुतरामृणदानाधिकारित्वसिद्धेः 'पुत्रहीनस्य ऋक्थिन' इत्येतदप्यपार्थकमिति । पुत्रपौत्रविधुरस्य प्रपौत्रादयो यदि ऋक्थभाजः स्युस्तदा ते दाप्या नान्यथेत्येतदर्थत्वात् । पुत्रपौत्रौ तु ऋक्थग्रहणाभावेऽपि ऋणदानाधिकारिणावित्यभिहितमधस्तात् । अथवा पुत्रहीनस्येत्युत्तमर्णपरं, पुत्रपदं च पौत्रादितदन्वयपरं, तेनाधमर्णसम्बन्धिधनस्त्रीहारिपुत्रा ऋणं कस्य दाप्या इत्याकाङ्क्षाया प्रथममुत्तमर्णस्य दाप्याः, तदुपरमात्तु तत्पुत्रपौत्रादेः, तदभावे पुत्रहीनस्य पुत्रपौत्राद्यन्वयविहीनस्योत्तमर्णस्य यो ऋक्थी ऋक्थग्रहणयोग्यः सपिण्डादिस्तस्य ऋक्थिनो दाप्या इत्यर्थः ।

तथा च **नारदोऽपि**

ब्राह्मणस्य तु यद्देयं सान्वयस्य न चाऽस्ति सः ।
निर्वपेत्तत्सकुल्येषु तदभावे स्वबन्धुषु ॥

इत्यभिधायाभिहितवान् ।

यदा तु न सकुल्याः स्युर्न च सम्बन्धिबान्धवाः ।
तदा दद्यात् द्विजेभ्यस्तु तेष्वसत्स्वप्सु निक्षिपेत् ॥ इति ।

अस्यार्थः—ब्राह्मणस्योत्तमर्णस्य यद्देयं तत्तस्मै देयम्, तदभावे तत्संतानस्य पुत्रादेस्तद्धनग्राहिणः, तदभावे तत्सकुल्येषु, तदभावे मातुलादिबन्धुषु क्रमेण निक्षिपेत्, तदभावे द्विजेभ्यो दद्यात्तदभावे अगाधे जले प्रक्षिपेत् ।

प्रजापतिरपि

बन्ध्वभावे तु विप्रेभ्यो देयं क्षेप्यं जलेऽपि वा ।
जले क्षिप्तं तथाऽग्नौ च धनं स्यात्पारलौकिकम् ॥

अग्नौ चेत्यत्र हुतमित्यध्याहारः । पारलौकिकं आनृण्यापादनेन परलोकमित्यर्थः ।

गोभिलः

ऋणेष्वज्ञायमानेषु गोलकामध्यपर्णेन जुहुयाद्यत्कुसीदमिति । इति ।

माध्यवर्णिकी चाग्निरत्र देवता । आनृण्यत्वार्थे चायं होम अनृणो भवामि इति मन्त्रलिङ्गात् । गोलकाः पलाशाः ।

तथा च सङ्ग्रहकारः

द्रव्यं यत्त्वधमर्णस्थं क्वचिद्ब्राह्मणगं भवेत् ।
सुतादिब्राह्मणान्तानां ऋक्थभाजामसम्भवे ॥
पलाशस्य पलाशेन जुहुयान्मध्यमेन तत् ।
यत्कुसीदमिति प्रासेदथ वार्येव तद्धनम् ॥ इति ।

क्वचित् उत्तमर्णादियन्धूनामभावविषय इत्यर्थः ।

यत्कुसीदमिति पूर्वेणैव सम्बध्यते मूलस्मृतौ जलप्रक्षेपणमन्त्रस्यास्मरणात् ।

निक्षिप्तादिधनेऽप्येष विधिर्दृष्टः पुरातनैः ।

एवं च यत्रासन्निहितपात्रोद्देशेन त्यक्तं द्रव्यं तस्य तत्पात्रायसम्भवे उक्तरीत्यैव जलप्रक्षेपादिकं विधेयम् । अत्र ब्राह्मणपदोपादानाद्देयंविधक्षत्रियादिधनं राज्ञा ग्रहीतव्यमिति दर्शितम् । तेन ब्रह्मस्वं राज्ञा कथमपि न ग्राह्यमित्यर्थः । केचित्तु नारदवचनस्थब्राह्मणपदमुत्तमर्णमात्रोपलक्षणमित्याहुः ।

कुटुम्बविषये बृहस्पतिः

पितृव्यभ्रातृपुत्रस्त्रीदासशिष्यानुजीविभिः ।
यद्गृहीतं कुटुम्बार्थे तद्गृही दातुमर्हति ॥

नारदोऽपि

शिष्यान्तेवासिदासस्त्रीप्रेष्यकृत्यकरैश्च यत् ।
कुटुम्बहेतोरुत्क्षिप्तं दातव्यं तत्कुटुम्बिना ॥

शिष्यो वेदाध्येता। अन्तेवासी तु शिल्पविद्यार्थी। कुटुम्बहेतोः कुटुम्बभरणार्थम्। उत्क्षिप्तं संविधानादिना स्वानुज्ञानमन्तरेणापि कृतं ऋणं देयम्, कुटुम्बभरणस्यावश्यंकार्यत्वादित्यर्थः।

**नारदः**

पितुरेव नियोगाद्वा कुटुम्बभरणाय वा।
कृतं वा यदृणं कृच्छ्रे दद्यात्पुत्रस्य तत्पिता॥

अत्र पुत्रग्रहणं कुटुम्बोपलक्षणं, पितृग्रहणं च प्रभोरुपलक्षणम्।

अत एव **कात्यायनः**

कुटुम्बार्थमशक्ते तु गृहीतं व्याधितेन च।
उपप्लवनिमित्तं च विद्यादापत्कृतं तु तत्॥
कन्यावैवाहिकं चैव प्रेतकार्यं तु यत्कृतम्।
एतत्सर्वं प्रदातव्यं कुटुम्बेन कृतं प्रभोः॥

अशक्ते कुटुम्बापोषणासमर्थे कुटुम्बिनीत्यर्थः। कन्यावैवाहिकं कन्याविवाहनिमित्तकम्। यत्कृतं येन धनेन कृतम्, प्रभोः कुटुम्बिन इति यावत्।

**नारदः**

ऋणं पुत्रकृतं पुत्रा शोध्यं यदनुमोदितम्।
सुतस्नेहेन वा दद्यान्नान्यथा दातुमर्हति॥

शोध्यमपाकरणीयम्।

**कात्यायनः**

देयं प्रतिश्रुतं यत्स्याद्यच्च स्यादनुमोदितम्।

**याज्ञवल्क्यः**

गोपशौण्डिकशैलूषरजकव्याधयोषिताम्।
ऋणं दद्यात्पतिस्तेषां यस्माद्वृत्तिस्तदाश्रया॥

शैलूषो नटः। वृत्तिः जीवनम्। तदाश्रया योषिदधीना। अत्र 'यस्माद्वृत्तिस्तदाश्रये'ति हेतुमन्निगदादितरेऽपि ये तैलिकादयो योषिदधीनजीवनास्तेऽपि योषित्कृतमृणं दद्युरिति गम्यते।

यत्तु

न स्त्री पतिपुत्रकृतं न स्त्रीकृतं पतिपुत्रौ।

इति विष्णुवचनम्, तत् कुटुम्बार्थादिकृतऋणव्यतिरिक्तविषयम्, रजकादिस्त्रीव्यतिरिक्तस्त्रीकृतर्णविषयं चावगन्तव्यम्। अत एव **याज्ञवल्क्यः**

न योषित्पतिपुत्राभ्यां न पुत्रेण कृतं पिता।
दद्यादृते कुटुम्बार्थान्न पतिः स्त्रीकृतं तथा॥

कुटुम्बार्थादृत इत्येतत्सर्वशेषः।

कात्यायनोऽपि

न भार्यया कृतमृणं कथञ्चित्पतिरावहेत् ।
आपत्कृतादृते पुंसः कुटुम्बार्थो हि दुस्तरः ॥
अन्यत्र रजकव्याधगोपशौण्डिकयोषिताम् ।
तेषां तत्प्रत्यया वृत्तिः कुटुम्बं च तदाश्रयम् ॥

तेषां रजकादीनां तत्प्रत्यया वृत्तिः, योषिदधीनं तद्वर्तनमित्यर्थः ।

कुटुम्बं जनविशेषविषये याज्ञवल्क्यः

अविभक्तैः कुटुम्बार्थे यदृणं तु कृतं भवेत् ।
दद्युस्तद्रिक्थिनः प्रेते प्रोषिते वा कुटुम्बिनि ॥ इति ।

अविभक्तैर्बहुभिर्भ्रात्रादिभिः समप्राधान्यैः, बहुत्वमतन्त्रं, तेनैकेन द्वाभ्यामपि वा कृतमृणं कुटुम्बी दद्यात् । असति तस्मिन् प्रोषिते वा तद्रिक्थिनः सर्वे दद्युः । तत्रापि केषांचिदसत्त्वे सता देयम् ।

तथा च विष्णुः

अविभक्तैः कृतमृणं यस्तिष्ठेत्स दद्यात् । इति ।

अत्र 'यस्तिष्ठेदि'ति वचनादृणकर्तरि प्रेते प्रोषिते वा ऋक्थिनो दद्युर्न पुनस्तस्मिन्नुपस्थितेऽपि, प्रधाने सति गुणभूतानामृणदानानधिकारात् ।

अत एव मनुः

ग्रहीता यदि नष्टः स्यात्कुटुम्बे च कृतो व्ययः ।
दातव्यं बान्धवैस्तत्स्यात्प्रविभक्तैरपि सतः ॥ इति ।

अविभक्तेन विभक्तेन वा भ्रात्रादिना कुटुम्बार्थे यः कृतो व्ययः स तस्मिन्मृते तद्रिक्थिदायादैर्देय इत्यर्थः ।

परतन्त्रस्त्रीविषये कात्यायनः

भर्त्रा पुत्रेण वा सार्धं केवलं वाऽऽत्मना कृतम् ।
ऋणमेवंविधं देयं नान्यथा तत्कृतं स्त्रिया ॥ इति ।

सम्भूय केवलं स्वयमेव भर्त्रा पुत्रेण वा सह यत्कृतमृणं तत् तत्सद्भावे स्त्रिया न देयं, अभावे तु देयम्, यत्तु स्वयमेव कृतं तदुभयथाऽपि न देयमित्यर्थः ।

याज्ञवल्क्यः

प्रतिपन्नं स्त्रिया देयं पत्या वा सह यत्कृतम् ।
स्वयं कृतं वा यदृणं नान्यत् स्त्री दातुमर्हति ॥

प्रतिपन्नं प्रवसता मुमूर्षुणा वा पत्या पुत्रेण वा नियुक्त्याऽहं दास्यामीत्यभ्युपेतमित्यर्थः ।

न स्त्री पतिकृतं दद्यादृणं पुत्रकृतं तथा ।
अभ्युपेतादृते ( यद् वा सह पत्या कृतं भवेत् ॥ )

इति **नारद**स्मरणात् । इदं च प्रतिपन्नर्णादानं पतिपुत्रधनाभावेऽपीत्यनुसन्धेयम् । अन्यत्सुराकामादिवचनोपात्तं प्रतिपन्नमपि पत्या सह कृतमपि न देयमित्यर्थः ।

**कात्यायनः**

मर्तुकामेन याऽऽज्ञाता भर्त्रा देयमृणं त्वया ।
अप्रपन्नाऽपि सा दाप्या धनं यद्याश्रितं स्त्रिया ॥

धनं भर्तृसम्बन्धि । अनाश्रितभर्तृधना स्त्री यद्यप्रतिपन्ना तदा न दाप्येति गम्यते । न च

दद्यादपुत्रा विधवा नियुक्ता वा मुमूर्षुणा ।
यो वा तद्रिक्थमादद्याद्यतो रिक्थमृणं ततः ॥

इति **नारदीय**वचनविरोधः, तस्याप्याश्रितभर्तृधनविधवानियुक्तविषयत्वात् । यत्पुनः 'न स्त्री पतिपुत्रकृत'मिति **विष्णु**वचनं, तत्सामान्यप्रतिषेधकत्वात् विशेषविधायकप्रागुदीरितवचनविषयव्यतिरिक्तविषयेऽवतिष्ठत इति न विरुद्धम् ।

इति ऋणप्रतिदानाधिकारिणः

---

## अथ ऋणप्रतिदानविधिः

तत्र **बृहस्पतिः**

याचमानाय दातव्यमल्पकालमृणं कृतम् ।
पूर्णावधौ शान्तलाभमभावे तु पितुः सुतैः ॥ इति ।

अल्पकालमदर्शितकालं कार्तिक्यादौ प्रतिदेयमित्यादिप्रकारेण यत्कृतम् । शान्तलाभं उपरतलाभम् । अत्रायं भावार्थः—स्वल्पकालमृणं याच्ञानन्तरं देयम् । कृतावधिकं तदवधौ शान्तलाभं लाभशान्त्यनन्तरं देयमिति ।

इदं च याच्ञादेः समनन्तरप्रतिदानविधानं, न ततः प्राग्दाननिषेधार्थसम्भवे ऋणस्य शीघ्रमपाकरणीयत्वात् । अत एव **कात्यायनेन** ऋणानपाकरणे दोष उक्तः

तपस्वी चाग्निहोत्री च ऋणवान् म्रियते यदि ।
तपश्चैवाग्निहोत्रं च सर्वं तद्धनिनां धनम् ॥

**बृहस्पतिकात्यायनाभ्यामुक्तम्**

उत्तमादिकमादाय स्वामिने न ददाति यः ।
स तस्य दासो भृत्यः स्त्री पशुर्वा जायते गृहे ॥

उद्धारमृणम् । आदिपदान्निक्षेपादिपरिग्रहः ।

यत्तु

याच्यमानं न दद्याद्यद् ऋणं वाऽपि प्रतिग्रहम् ।
तद्द्रव्यं वर्धते तावद्यावत्कोटिशतं भवेत् ॥
ततः कोटिशते पूर्णे वेष्टितस्तेन कर्मणा ।
अश्वः करी वृषो दासो भवेज्जन्मनि जन्मनि ॥

इति नारदवचनं, तद्याच्यमानस्यादातुरेव क्लेशातिशयो नान्यस्येत्येतदर्थमिति मन्तव्यम् ।

प्रतिदानानन्तरं प्रतिदातुः कर्तव्यमाह याज्ञवल्क्यः

दत्त्वर्णं पाटयेल्लेख्यं शुद्ध्यै वाऽन्यत्तु कारयेत् ।

क्रमेण सकृद्वा कृत्स्नमृणं दत्त्वा लेख्यं पाटयेत् । यदा तु दूरविषमदेशादिस्थितं नष्टं वा पत्रं स्यात्तदा शुद्ध्यै अनृणत्वख्यापनाय अन्यत्तु कारयेत्, प्रतिदत्तपत्रं योत्तमर्णाद्गृह्णीयादित्यर्थः ।

तथा

लेख्यं दद्यादृणे शुद्धे तदभावे प्रतिश्रवः ।
धनिकर्णिकयोरेवं विशुद्धिः स्यात्परस्परम् ॥

प्रतिश्रवः प्रतिदत्तमित्येतस्मिन्नर्थे श्रोत्रियादिसाक्षिश्रावणम् ।

ससाक्षिकऋणप्रतिदाने विशेषमाह याज्ञवल्क्यः

साक्षिमच्च भवेद्यद्वा तद्दातव्यं ससाक्षिकम् ।

साक्षिसमक्षं यदृणं गृहीतं तत्तत्साक्षिसमक्षमेव दातव्यमिति । यदा पुनरादयसाक्षिणां कथंचिद्देशान्तरगमनादिना असम्भवस्तदा साक्ष्यन्तरसमक्षं दातव्यमित्यर्थः ।

अशक्ताधमर्णविषये मनुः

ऋणं दातुमशक्तो यः कर्तुमिच्छेत्पुनः क्रियाम् ।
स दत्त्वा निर्जितां वृद्धिं करणं परिवर्तयेत् ॥

क्रियाशब्दोऽत्र साक्षिलेख्यपरः, क्रियान्तरस्य ऋणविषये नातीवोपयुक्तत्वात् । तेनायमर्थः—यदा ऋणप्रतिदानावसरे केनापि कारणेन सलाभमूलदानाशक्तोऽधमर्णो धनस्य ग्रहणस्य चिरकृतत्वपरिहाराय धनिकपरितोषायलेख्यादिरूपां क्रियां पुनश्चिकीर्षेत तदा निष्पन्नवृद्धिसहितां लेख्यादिक्रियां वर्तमानवत्सरादिचिह्नितां परिवर्तयेत्पुनः कुर्यादिति ।

एतदेव स्फोरयति स एव

अदर्शयित्वा तत्रैव हिरण्यं परिवर्तयेत् ।
यावती सम्भवेद्वृद्धिस्तावतीं दातुमर्हति ॥

मूलभूतं हिरण्यं धनिके अदर्शयित्वा अदत्त्वा क्रियां परिवर्तयेत् । तदा च यावती सम्भवेत् कालेन वृद्धिस्तामेव लेखितुमर्हति, नतु मूलस्य पुनःस्थापनार्थमधिकं तेन देयमित्यर्थः ।

सकलऋणदानाशक्तविषये **याज्ञवल्क्यः**

> लेख्यस्य पृष्ठेऽभिलिखेद्दत्त्वा दत्त्वर्णिको धनम् ।
> धनी चोपगतं दद्यात्स्वहस्तपरिचिह्नितम् ॥

यदा ऋणी सर्वमृणं दातुमसमर्थस्तदा स्वशक्त्यनुसारेण दत्त्वा दत्त्वा प्राचीनलेख्यस्य पृष्ठे एतावन्मया प्रतिदत्तमिति लिखेत् । उत्तमर्णो वा प्राप्तं धनं तस्यैव लेख्यस्य पृष्ठे लिखेत् । एतावन्मया लब्धमिति स्वहस्तचिह्नितम् । स्वहस्ताक्षरचिह्नितं अथवा उपगतं प्रवेशपत्रं स्वहस्तचिह्नितं ऋणिने धनी दद्यात् । अयं च पक्षः प्राचीनपक्षासम्भवे ।

अत एव **विष्णुः**

असमग्रप्रदाने लेख्यासन्निधाने चोत्तमर्णः स्वलिखितं दद्यात् ॥ इति ।

ऋणिकायेति शेषः ।

अत एव **नारदः**

> गृहीत्वोपगतं दद्यादृणिकायोदयं धनी ।

उदयमृणिकेनैवार्जितं गृहीत्वा धनी ऋणिकायोपगतं दद्यादित्यन्वयः । उदयशब्देनात्रोपार्जितं धनं ब्रुवन् 'ब्राह्मणस्तु परिक्षीणः शनैर्दाप्यो यथोदयम्' इत्युक्तविषये त्वयं पक्षो विज्ञेय इति दर्शयति **बृहस्पतिः**

> ऋणं धर्मादितो गृह्य यस्तूपरि न लेखयेत् ।
> न चैवोपगतं दद्यात्तस्य तद्वृद्धिमाप्नुयात् ॥

धर्मात् क्षेत्रदारपश्वाद्यवरोधरूपात् इतः अधमर्णात् ऋणं गृह्य अकृत्स्नमृणमुपादाय यो धनी लेख्यस्योपरि मयैतावत्प्राप्तमिति न लिखेत्, न चैवोपगतं प्रवेशपत्रं दद्यात् । तस्य तद्दिनमारभ्य यावल्लेखनं लेख्यदानं वा न करोति तावत्तदधमर्णादुपात्तं धनं वृद्धिमाप्नुयात् वर्धेत इत्यर्थः ।

वृद्धिश्च कियती भवतीत्यपेक्षायामाह **नारदः**

> यदि वा नोपरि लिखेदृणिना नोदितोऽपि सन् ।
> धनिकस्येव वर्धेत तथैव ऋणिकस्य तत् ॥

यथा वृद्ध्या ऋणिकस्योपरि स्थितं द्रव्यं धनिकाय वर्धते तथैव ऋणिकाय धनिकस्योपरिस्थितं वर्धेत इत्यर्थः ।

प्रार्थनासमये प्रार्थितः ऋणी यदि न ददाति तदा धनिककर्तव्यमाह

> यैर्यैरुपायैरर्थं स्वं प्राप्नुयादुत्तमर्णिकः ।
> तैस्तैरुपायैः संगृह्य साधयेदधमर्णिकम् ॥
> धर्मेण व्यवहारेण छलेनाचरितेन च ।
> प्रयुक्तं साधयेदर्थं पञ्चमेन बलेन च ॥ इति ।

अत्र व्यवहारेणेत्यपलापिविषयम्, इतरत्सम्प्रतिपन्नविषयम् ।

अत एव बृहस्पतिः

प्रतिपन्नस्य धर्मोऽयं व्यपलापी तु संसदि ।
लेख्येन साक्षिभिर्वाऽपि भावयित्वा प्रदाप्यते ॥ इति ।

अयं धर्मः, 'धर्मोपधिबलात्कारैर्गृहसंरोधनेन चे'त्यादिरूपो बृहस्पतिनैवोक्तः। व्यपलापी यस्तु ऋणापह्नवशीलः, स तु संसदि लेख्यादिव्यवहारेण प्रसाध्य प्रदानोन्मुखीकार्य इत्यर्थः।

धर्मस्वरूपं व्याचष्टे बृहस्पतिः

सुहृत्सम्बन्धिसन्दिष्टैः सामोक्त्याऽनुगमनेन च ।
प्रायेण वा ऋणी दाप्यो धर्म एवमुदाहृतः ॥

सुहृत्सम्बन्धिसन्दिष्टैः प्रियमान्यजनादेशैः । सामोक्त्या प्रियपूर्ववाक्येन। अनुगमनेन अनुवर्तनेन । प्रायेण प्रायोपवेशनेन । अपरे तु प्रायेण प्रार्थनाबाहुल्येन वेत्याहुः । व्यवहारो लेख्याद्यैर्विभावनम् ।

छलस्य रूपमप्याह स एव

छद्मना याचितं चार्थमानीय ऋणिकाद्धनी ।
अन्वाहितादि संगृह्य दाप्यते यत्र सोपधिः ॥

छद्मना उत्सवादिव्याजेन याचितमलङ्कारादि। अन्वाहितमन्यस्मै दातुमर्पितं आदिग्रहणादन्यदपि केनापि प्रकारेणानीय सङ्गृह्य दाप्यते प्रतिदानोन्मुखीक्रियते उपधिः छलमित्यर्थः ।

आचरितादिकमप्याह स एव

दारपुत्रपशून् रुध्वा कृत्वा द्वारोपवेशनम् ।
यत्रर्णी दाप्यतेऽर्थं स्वं तदाचरितमुच्यते ॥
रुध्वा स्वगृहमानीय ताडनाद्यैरुपक्रमैः ।
ऋणिको दाप्यते यत्र बलात्कारः प्रकीर्तितः ॥

अत्र दारादीनां रोधनमात्रं कार्यं, न तु भोगः । एते चोपायविषयभेदेन प्रयोज्याः ।

तथा च कात्यायनः

राजानं स्वामिनं विप्रं सान्त्वेनैव प्रसाधयेत् ।
ऋक्थिनं सुहृदं चापि छलेनैव प्रसाधयेत् ॥
वणिजः कार्षिकांश्चैव शिल्पिनश्चात्रवीद्भृगुः ।
देशाचारेण दाप्याः स्युर्दुष्टान्संपीड्य दापयेत् ॥

सान्त्वेन धर्माख्योपायेन। संपीड्येति बलात्काराचरितयोरुपादानम्।

देशाचारापेक्षायां स एव

धार्योऽवरुद्धस्त्वृणिकः प्रकाशं जनसंसदि ।
यावन्न दद्याद्देयं च देशाचारस्थितिर्यथा ॥

देशाचारस्थितिर्यथेत्यस्यार्थः—यत्र देशे स्वयमेवावरुध्य धारयति तत्र तथैव धार्यः। यत्र त्वधमर्णाद्धेतनलिप्सुना पुरुषान्तरेणावरुध्य धार्यते तत्र तथैव धार्य इति।

तथा

विण्मूत्रशङ्का यत्र स्यात् धार्यमाणस्य देहिनः।
पृष्ठतो वाऽनुगन्तव्यो निबन्धं वा समुत्सृजेत्॥

निबन्धं शृङ्खलादिना।

पक्षान्तरमाह स एव

स कृतप्रतिभूश्चैव मोक्तव्यः स्याद्दिने दिने।
आहारकाले रात्रौ च निबन्धे प्रतिभूस्थितः॥

स धार्यमाणो ऋणी कृतदर्शनप्रतिभूरावश्यककृत्यकाले मोक्तव्यः पलायनप्रतिबन्धे यतः प्रतिभूः स्थित इत्यर्थः।

तथा

यो दर्शनप्रतिभुवं नाधिगच्छेन्न चाश्रयेत्।
स चारकैर्निरोद्धव्य आर्यप्रत्ययिकः शुचिः।
सोऽनिबन्धः प्रमोक्तव्यो निबध्यः शपथेन वा॥

प्रत्ययिकः अपलायित्वेन निश्चितः। अनिबन्धः रक्षकेण रहित इत्यर्थः।

धनी स्मृतिमार्गेण धनं साधयता राज्ञा न निवार्य इत्याह मनुः

यः स्वकं साधयेदर्थमुत्तमर्णोऽधमर्णिकात्।
स राज्ञा नाभियोक्तव्यः स्वयं संसाधयन् धनम्॥

नाभियोक्तव्यो न किमपि वाच्यः।

अत एव विष्णुः

प्रयुक्तमर्थं यथाकथंचित्साधयमानो न राज्ञा वाच्यः स्यात्। इति।

यथाकथंचित् स्मृत्यविरुद्धमार्गेण।

याज्ञवल्क्यः

प्रपन्नं साधयन्नर्थं न वाच्यो नृपतेर्भवेत्।
साध्यमानो नृपं गच्छेद्दण्ड्यो दाप्यश्च तद्धनम्॥

प्रपन्नमधमर्णेनाङ्गीकृतं साक्ष्यादिभिर्भावितं वा साधयन् धर्मादिभिरुपायैरुत्तमर्णः प्रत्याहरन्नृपतेर्न वाच्यो निवारणीयो भवति। यः साध्यमानो याच्यमानो राजानं गत्वा साधयन्तमभियुङ्क्ते स दण्ड्यः शक्त्यनुसारेण, धनिने च तद्धनं दाप्य इत्यर्थः।

दण्डस्तु **मनुना** दर्शितः

यः साधयन्तं छन्देन वेदयेद्धनिकं नृपे ।
स राज्ञा तच्चतुर्भागं दाप्यस्तस्य च तद्धनम् ॥

यस्तु विप्रतिपन्नः स नासेध्यः ।

तथा च **बृहस्पतिः**

अनासेध्यः क्रियावादी सन्दिग्धेऽर्थे कथञ्चन ।
आसेधयंस्त्वनासेध्यं दण्ड्यो भवति धर्मतः ॥

अनासेध्य इति च्छलादिनिष्पत्तिप्रदर्शनार्थम् ।

क्रियावादिसंदिग्धपदयोरर्थं स्वयमेव व्याचष्टे

प्रदातव्यं यद्भवति न्यायतस्तद्ददाम्यहम् ।
एवं यत्रार्णिको ब्रूते क्रियावादी स उच्यते ॥
रूपसंख्यादिलाभेषु यत्र भ्रान्तिर्द्वयोर्भवेत् ।
देयानादेययोर्वाऽपि सन्दिग्धोऽर्थः स कीर्तितः ॥

अत्र दण्डमाह **कात्यायनः**

पीडयेद्यो धनी कश्चिदृणिकं न्यायवादिनम् ।
तस्मादर्थात्स हीयेत तत्समं चाऽऽप्नुयाद्दमम् ॥ इति ।

दुष्टर्णिकविषये **यमः**

ऋणिकः सधनो यस्तु दौरात्म्यान्न प्रयच्छति ।
राज्ञा दापयितव्यः स्याद् गृहीत्वा द्विगुणं ततः ॥

ततः दुरात्मर्णिकतः । अत्र द्विगुणमिति सवृद्धिकमूलप्रदर्शनार्थमिति केचिद्व्याचक्षते ।

अशक्तऋणिविषये **नारदः**

अथ शक्तिविहीनः स्यादृणी कालविपर्ययात् ।
शक्त्यपेक्ष्यमृणं दाप्यः काले काले यथोदयम् ॥

एतच्च धनिकोत्कृष्टजात्यधमर्णविषयम् ।

तथा **याज्ञवल्क्यः**

हीनजातिं परिक्षीणमृणार्थं कर्म कारयेत् ।
ब्राह्मणस्तु परिक्षीणः शनैर्दाप्यो यथोदयम् ॥

हीनजातिं स्वस्वजात्यपेक्षया हीनजातिम् । ऋणार्थं ऋणनिवृत्त्यर्थम् । कर्म च तत्तज्जात्यनुरूपं कारयेत्तत्कुटुम्बाविरोधेन । अत्र हीनजातिपदं समजात्युपलक्षणम् । तेन समजातिमपि परिक्षीणं यथोचितं कर्म कारयेत् । ब्राह्मणपदं च स्वस्वोत्कृष्टजातेरुपलक्षणम् । तेन क्षत्रियादिरधमर्णः परिक्षीणो वैश्यादेः शनैः शनैर्दाप्य इति ।

तदेव विस्पष्टमाचष्टे **मनुः**

कर्मणाऽपि समं कुर्याद्धनिकेनाधमर्णिकः ।
समोऽपकृष्टजातिश्च दद्याच्छ्रेयांस्तु तच्छनैः ॥ इति ।

**कात्यायनः**

धनदानासहं बुद्ध्वा स्वाधीनं कर्म कारयेत् ।
अशक्तो बन्धनागारे प्रवेश्यो ब्राह्मणादृते ॥

युगपदनेकोत्तमर्णाभियोगे एकस्याधमर्णस्य राज्ञो दापनक्रममाह **याज्ञवल्क्यः**

गृहीतानुक्रमाद्दाप्यो धनिनामधमर्णिकः ।
दत्त्वा तु ब्राह्मणायैव नृपतेस्तदनन्तरम् ॥

एकजातीयेषूत्तमर्णेषु येन क्रमेण धनं गृहीतं तेनैव क्रमेण राज्ञा ऋणी दाप्यः, अनेकजातीयेषु तु ब्राह्मणादिक्रमेणैवेत्यर्थः । यदा त्वधमर्णेन प्रतिपन्नमर्थमुत्तमर्णो दुर्बलतया ग्रहीतुमशक्तो राज्ञा साधितार्थो भवति तदा ताभ्यां दातव्यमाह **विष्णुः**

उत्तमर्णश्चेद्राजानमियात्तद्विभावितोऽधमर्णो राज्ञे धनदशमभागं दद्यात् प्राप्तार्थश्चोत्तमर्णो विंशतितमांशम् । इति ।

**याज्ञवल्क्यः**

राज्ञाऽधमर्णिको दाप्यः साधितादृशकं शतम् ।
पञ्चकं च शतं दाप्यः प्राप्तार्थो ह्युत्तमर्णिकः ॥

अत्र विशेषमाह **कात्यायनः**

नानर्णसमवाये तु यद्यत्पूर्वकृतं भवेत् ।
तत्तदेवाग्रतो देयं राज्ञः श्रोत्रियतोऽपि वा ॥
एकाहे लिखितं यत्र तत्र कुर्याद्दणं समम् ।
ग्रहणं रक्षणं लाभमन्यथा तु यथाक्रमम् ॥
यस्य द्रव्येण यत्पण्यं साधितं यो विभावयेत् ।
तद्द्रव्यमृणिकेनैव दातव्यं तस्य नान्यथा ॥ इति ।

यस्योत्तमर्णस्य धनाद्यत् पण्यमधमर्णेन वाणिज्यार्थं साधितं गृहीतं तत् पण्यविक्रयप्राप्तं धनमनेकोत्तमर्णसमवायेऽपि अधमर्णेन तस्यैवोत्तमर्णस्य ऋणपरिहारार्थं देयम् । नान्यथा न पूर्वोक्तप्रकारेणेत्यर्थः ।

इति श्रीमन्महीमण्डलाखण्डलाधीनागमहागमजविषमप्रनिष्ठापरिपूरणपरायणकलिकालकर्णप्रतापदेवेश्वरशरणागतराजन्यपंजरपरमवैष्णवरिपुगजसिंहेत्यादिनिजबिरुदराजीविराजमानमानोन्नतमहाराजाधिराजश्रीपृथ्वीचन्द्रदेवविरचिते धर्मतत्त्वकलानिधौ महानिबन्धे व्यवहारप्रकाशे ऋणदानपदनिरूपणं नाम सप्तम उल्लासः ॥

---

## निक्षेपाख्यव्यवहारपदम्

अथ निक्षेपाख्यव्यवहारपदमभिधीयते ।

तत्र तत्स्वरूपमाह **नारदः**

स्वं द्रव्यं यत्र विस्रंभान्निक्षिपत्यविशङ्कितः ।
निक्षेपो नाम तत्प्रोक्तं व्यवहारपदं बुधैः ॥ इति ।

द्रव्यं सुवर्णरजतवसनादिकम् । ग्राहकसमक्षं यदा निक्षिपति तदा निक्षेपशब्दवाच्यं व्यवहारपदमित्यर्थः ।

**व्यासो**ऽपि

स्थानत्यागाद्राजभयात्तथा दायादवञ्चनात् ।
समर्प्यतेऽन्यस्य हस्ते निक्षेप नाम तं विदुः ॥

इदं च निक्षेपलक्षणमुपनिधिसाधारणम् ।

असाधारणं त्वाह

**नारदः**

असङ्ख्यातमविज्ञातं समुद्रं यन्निधीयते ।
तं जानीयादुपनिधिं निक्षेपं गणितं विदुः ॥

**बृहस्पतिः**

अनाख्यातं व्यवहितमसङ्ख्यातमदर्शितम् ।
मुद्राङ्कितं च यद्दत्तं तदौपनिधिकं स्मृतम् ॥

व्यवहितं पेटिकादौ प्रक्षिप्य पिहितम् ।

तस्य द्वैविध्यमाह **नारदः**

स पुनर्द्विविधः प्रोक्तः साक्षिमानितरस्तथा ।
प्रतिदानं तथैवास्य प्रत्ययः स्याद्विपर्यये ॥

विपर्यये अन्यथात्वे । प्रत्यये दिव्यादिः कार्यः स्यादित्यर्थः ।

एतस्य स्थापनस्थानमाह **मनुः**

कुलजे वृत्तसंपन्ने धर्मज्ञे सत्यवादिनि ।
महापक्षे धनिन्यार्ये निक्षेपं निक्षिपेद्बुधः ॥

वृत्तमाचारः, तत्सम्पन्ने । महापक्षे बहुबन्धौ । आर्ये उत्तमदेशजाते । त्रैवर्णिक इत्यन्ये ।

**बृहस्पतिः**

स्थानं गृहं गृहस्थं च तद्वर्णे विविधान् गुणान् ।
सत्यं शौचं बन्धुजनं परीक्ष्य स्थापयेन्निधिम् ॥

एतत्पालने विधिफलं भक्षणादौ दोषं चाह स एव

ससाक्षिकं गृहे दत्तं विविधं समुदाहृतम् ॥
पुत्रवत्परिपाल्यं तद्विनश्येच्चदुपेक्षया ।
ददतो यद्भवेत्पुण्यं हेमकुप्याम्बरादि च ॥
तत्स्यात्पालयतो न्यासं यथैव शरणागतम् ।
भर्तृद्रोहे यथा नार्याः पुंसः पुत्रसुहृद्वधे ॥
दोषो भवेत्तथा न्यासे भक्षितोपेक्षिते नृणाम् ।
न्यासद्रव्यं न गृह्णीयात्तन्नाशस्त्वयशस्करः ॥ इति ।

कुप्यं स्वर्णरजतातिरिक्तम् । ताम्रादिन्यासग्रहणं निक्षेपाद्युपलक्षणार्थम् । तेन फलश्रुत्यादिकमपि निक्षेपादिसाधारणमित्यवसेयम् । यत्र तूपेक्षादिदोषाभावे दैवाद्युपघातेन नाशस्तत्र दोषाभावः ।

तथा च बृहस्पतिः

दैवराजोपघातेन यदि तन्नाशमाप्नुयात् ।
ग्रहीतृद्रव्यसहितं तत्र दोषो न विद्यते ॥

ग्रहीतृद्रव्यसहितमित्येतदुपेक्षाभावनिश्चायकत्वेनोक्तं, नतु तेन विना दोष इत्येतदर्थम् ।

नारदः

ग्रहीतुः सह योऽर्थेन नष्टो नष्टः स दायिनः ।
दैवराजकृते तद्वन्न चेत्तज्जैह्मकारितम् ॥

नष्टः स दायिनः । निक्षेप्तुरेव नष्ट इत्यर्थः । तेन राजकृतेऽपि ग्रहीतृकौटिल्यान्नष्टो देय एव । ग्रहीत्रपराधो दान उपयुज्यते ।

मनुः

चौरैर्हृतं जलेनोढमग्निना दग्धमेव वा ।
न दद्याद्यदि तस्मात्स न संहरति किञ्चन ॥

चौरैरित्यादि राजदैवोपलक्षणम् । किञ्चनाल्पमपि यद्यसौ न संहरति न गृह्णाति । एतेनाल्पस्वामि हरणे निक्षेपो दैवादिनष्टोऽपि देय इत्युक्तम् ।

उपनिधिविषयेऽपि स एव

समुद्रे नाप्नुयात्किञ्चिद्यदि तस्मान्न संहरेत् ।

समुद्रे उपनिधौ । केचित्तु समुद्रे मुद्रामुद्रिते प्रत्यर्पिते नाप्नुयात्, किञ्चिदपहरणशङ्कादि तथा समुद्रेऽपि यदि तस्मात्किञ्चिन्न संहरेत् न संगृह्णीयादित्येतम्यार्थमाहुः ।

कात्यायनः

निक्षिप्तं यस्य यत्किञ्चित्तत्प्रयत्नेन पालयेत् ।
दैवराजकृतादन्यो विनाशस्तस्य कीर्त्यते ॥

तस्य माद्यस्य दोषेण कृतत्वेन कीर्तन इत्यर्थः । तद्दोषविनाशे तस्य हानिमाह स एव

यस्य दोषेण यत्किञ्चिद्विनश्येत ह्रियेत वा ।
तद्द्रव्यं सोदयं दाप्यो दैवराजकृताद्विना ॥

दोषोऽत्रोपेक्षादिरूपः ।

तथा च **बृहस्पतिः**

भेदेनोपेक्षया न्यासं ग्रहीता यदि नाशयेत् ।
याच्यमानो न दद्याद्वा दाप्यस्तत्सोदयं भवेत् ॥

नाशे दानं मूल्यद्वारैव । एतच्च दानं सममेव ।

............समं दाप्य उपेक्षितम् ।

इति **व्यास**वचनात् । याचमानस्यादाने सोदयं दाप्यः ।

उदयश्च

निक्षेपं वृद्धिशेषं च क्रयविक्रयमेव च ।
याचमाने न चेद्दद्याद्वर्धते पञ्चकं शतम् ॥

इति **कात्यायनो**क्तो द्रष्टव्यः । एतच्चारक्षितविषयम्,

भक्षितं सोदयं दाप्यः समं दाप्य उपेक्षितः ।
किञ्चिन्न्यूनं प्रदाप्यः स्याद्द्रव्यमज्ञाननाशितम् ॥

इति **व्यासेनो**क्तत्वात् । किञ्चिन्न्यूनं चतुर्थांशहीनमिति **विज्ञानयोगीश्वरः** । भक्षितवदपहृतमपि । तथा च **विष्णुः**

निक्षेपापहारी वृद्धिसहितं धनं धनिकस्य दाप्यः । इति ।

याचितस्यादत्तस्य दैवादिना नाशे मूलमात्रमेव दाप्यः ।

याचितानन्तरं नाशे दैवराजकृतेऽपि सः ।
ग्रहीता प्रतिदाप्यः स्यात् (अन्यथा दण्डमर्हति) ॥

इति **व्यास**वचनात् । दाप्यः मूलमात्रमिति शेषः ।

अत्र विशेषमाह **नारदः**

याच्यमानस्तु यो दातुर्निक्षेपं न प्रयच्छति ।
दण्ड्यः स राज्ञो भवति नष्टे दाप्यस्तु तत्समम् ॥

अत्र नष्ट इति दैवराजादित इति विशेषोऽध्याहार्यः ।

तथा

यश्चार्थं साधयेत्तेन निक्षेप्तुरननुज्ञया ।
तत्रापि दण्ड्यः स भवेत्सोदयं च तमावहेत् ॥

अत्र दण्डः साधितार्थानुसारेण ग्राह्यः । उदयोऽत्र साधितलाभः ।

**बृहस्पतिः**

न्यासद्रव्येण यः कश्चित्साधयेत्कार्यमात्मनः ।
दण्ड्यश्च राज्ञो भवति दाप्यस्तच्चास्य सोदयम् ॥

अत्रापि स्वाम्यननुज्ञयेति शेषो ग्राह्यः, प्रागुक्तकात्यायनवचनात् ।

निक्षेपापहारे दण्डमाह **मनुः**

निक्षेपस्यापहर्तारं तत्समं दापयेद्दमम् ।
तथोपनिधिहर्तारमविशेषेण पार्थिवः ॥

उपनिधिपदं न्यासाद्युपलक्षणम् । अविशेषेण वर्णाविशेषेण ।

अतिप्रतिषिद्धे निक्षेपादेश्छलादिनापहारे, **स** एव

उपधाभिस्तु यः कश्चित्परद्रव्यं हरेन्नरः ।
ससहायस्तु हंतव्यः प्रकाशं विविधैर्वधैः ॥

उपधाभिर्न निक्षिप्तमित्यादिछलोक्तिभिः । परद्रव्यं निक्षेपादि । प्रकाशं लोकसाक्षिकम् । विविधैः अङ्गछेदादिभिः सर्वैरेव । एतच्च भूयः करणे द्रष्टव्यं, दण्डभूयस्त्वात् ।

निक्षेपापह्नवे दण्डमाह **बृहस्पतिः**

गृहीत्वाऽपह्नुते यत्र साक्षिभिः शपथेन वा ।
विभाव्य दापयेन्न्यासं तत्समं विनयं तथा ॥

**व्यासो**ऽपि

निक्षेपं निह्नुते यस्तु नरो बन्धुबलान्वितः ।
साक्षिभिर्वाऽथ दिव्येन विभाव्य प्रतिदाप्यते ॥

**मनुः**

निक्षेपस्यापहर्तारमनिक्षेप्तारमेव च ।
सर्वैरुपायैरन्विच्छेच्छपथैश्चैव वैदिकैः ॥
यो निक्षेपं नार्पयति यश्चानिक्षिप्य याचते ।
उभौ तौ चौरवच्छास्यौ दाप्यौ वा तत्समं दमम् ॥

'दाप्यौ वा द्विगुणं दम'मिति **मत्स्यपुराणीयः** पाठः । अनिक्षेप्तारं अनिक्षिप्य याचमानम् । उपायैश्चरादिभिः, अन्विच्छेत् जिज्ञासेत् । वैदिकैः वेदोक्तैः, अग्न्यादिभिः । श्रुतौ हि 'सोऽनृतेनात्मनात्मानमभिव्याहृत्य परशुं तप्तं गृह्णाति स दह्यत' इत्यादावग्नीनां तत्त्वप्रतिपत्त्युपायता गम्यते । चौरवच्छास्यौ अङ्गच्छेदादिना । एतच्च रत्नापहारादौ । अन्ये तु दाप्यौ चेति । अपरे तु 'चौरवच्छास्यौ' इति प्रथमसाहसे न दण्ड्यावित्याहुः ।

स्वापकर्दौष्ट्ये स एव

निक्षेपो यः कृतो येन यावांश्च कुलसन्निधौ ।
तावानेव स विज्ञेयो विब्रुवन्दण्डमर्हति ॥

निक्षेपो निक्षेपादिः । यः सुवर्णादिः । कुलस्य ज्ञात्यादेः । विब्रुवन् ससाक्षिके साक्षिवचनविरुद्धं ब्रुवन् ।

असाक्षिके बृहस्पतिः

रहो दत्ते निधौ यत्र विसंवादः प्रजायते ।
विभावकं तत्र दिव्यमुभयोरपि च स्मृतम् ॥

उभयोर्मध्ये एकस्येत्यर्थः ।

मनुः

मिथो दायः कृतो येन गृहीतो मिथ एव वा ।
मिथ एव प्रदातव्यो यथा दायस्तथा ग्रहः ॥

मिथः एकान्ते दायो निक्षेपः मिथो गृहीतः । गृहीत्वाऽपि न ज्ञापितः । मिथ एव प्रदातव्यो न साक्ष्यादिसन्निधौ । एतेन ग्रहणे साक्ष्यभावे प्रत्यर्पणेऽपि साक्षिणो नानुसन्धेया इत्युक्तम् । 'यथा दायस्तथे'ति तु ससाक्षिके ससाक्षिक एवेत्येतदर्थम् । दायोऽत्र निक्षेपदानम् ।

तथा

यो निक्षेपं याच्यमानो निक्षेप्तुर्न प्रयच्छति ।
स याच्यः प्राड्विवाकेन तन्निक्षेप्तुरसन्निधौ ॥
स यदि प्रतिपद्येत यथान्यस्तं यथाकृतम् ।
न तत्र विद्यते किञ्चिद्यत्परैरभियुज्यते ॥
साक्ष्यभावे प्रणिधिभिर्वयोरूपसमन्वितैः ।
अपदेशैश्च स न्यसेद्धिरण्यं तेषु तत्त्वतः ॥
तेषां न दद्याद्यदि तु तद्धिरण्यं यथाविधि ।
द्वयं निगृह्य दाप्यं स्यादिति धर्मस्य धारणा ॥ इति ।

न प्रयच्छति प्रथमं लोभादिना । निक्षेप्तुरसन्निधौ याच्यः यदि त्वया ततोऽपहृतं तदा गतमेव तस्य धनम् । त्वयाऽस्माभिश्च विभज्य भाह्यमिति प्राड्विवाकेनैकान्ते प्रार्थनीयाः । प्रतिपद्येत अङ्गीकुर्यात् । यथान्यस्तं येन मुद्रादिना न्यस्तम् । यथाकृतं कटकादिप्रकारेण न तत्र विद्यत इति यदि तस्मिन्प्रत्यर्पितेऽपि परो ममैतन्न्यूनमित्यभियुङ्क्ते तदाऽभियोगादिकं तत्र न विद्यते । तावतैव तच्छुद्धिसिद्धिः स्थापकोक्तमुद्रादेर्भावात् । न तु दण्डाभावः, सापराधत्वात् । साक्ष्यभाव इति । प्रणिधिभिश्चरैः वयोरूपसमन्वितैः । वयसा वृद्धत्वादिना रूपेण पालित्यादिना प्रामाणिकत्वोचितेनान्वितैः । अपदेशैः नास्य धनस्य रक्षकोऽस्माकं विद्यत इत्यादिव्याजोक्तिभिः न्यसेत्प्राड्विवाकस्तस्य निक्षेपानभ्युपगन्तुर्हस्ते वृद्धादिभिर्निक्षेपान्तरं निदध्यादित्यर्थः । तेषां न दद्यादिति । तेषां प्रणिधीनां प्रार्थनानन्तरं यदि तद्धिरण्यं न दद्यात्तदा द्वयं निक्षेपद्वयं निगृह्य दाप्य इत्यर्थः । प्रणिधिदत्तप्रतिदाने तु सन्देहानुवृत्तेर्दिव्येनैव निर्णय इति । निक्षेपादिकं च येन स्थापितं तस्यैव हस्ते देयं, नान्यस्य ।

तथा च बृहस्पतिः

स्थापितं येन विधिना येन यच्च यथाविधि ।
तथैव तस्य तद्देयं न देयं प्रत्यनन्तरे ॥

प्रत्यनन्तरपदेन स्थापितद्रव्यस्वामीस्थापकेतरस्तत्पुत्रादिरभिधीयते । तेन स्थापके देशान्तरादिगते निक्षेपस्तत्पुत्रादौ न देय इत्यर्थः ।

मनुरपि

निक्षेपोपनिधी नित्यं न देयौ प्रत्यनन्तरे ।

उपनिधिपदं याचिताद्युपलक्षणम् ।

अत्र विशेषमाह

स्वयमेव तु यो दद्यान्मृतस्य प्रत्यनन्तरे ।
न स राज्ञाऽभियोक्तव्यो न निक्षेप्तुश्च बन्धुभिः ॥

अस्यार्थः—असाक्षिकं निक्षेपादिकं पुत्रादिभिरविदितं यो दातर्युपरते स्वयं तत्पुत्रादौ दद्यात् नासौ राज्ञा तत्पुत्रादिना वा न्यूनत्वादिशङ्कामात्रेणैवाभियोज्यः । न्यूनत्वादिनिश्चये त्वभियोज्य एवेति । एवमनेन वचनभङ्गिभेदेन स्थापके मृते प्रत्यनन्तरे प्रत्यर्पणं ग्राहकेण कार्यमित्युक्तम् । एतदपि प्रत्यन्तरबहुत्वे नैव कस्मिंश्चित्प्रत्यन्तरे कार्यं किन्तु सकलप्रत्यनन्तरसन्निधौ । तथा निक्षेप्तुर्बन्धुभिः प्रत्यनन्तरभूतैरभियोज्यो न भवतीति ।

यदा च निक्षेपस्तत्र सम्भावितो न च स्वयं तेन दत्तस्तत्राह स एव

अच्छलेनैव चाऽन्विच्छेत्तमर्थं प्रीतिपूर्वकम् ।
विचार्य तस्य वा वृत्तं साम्नैव परिभावयेत् ॥
निक्षेपेष्वेषु सर्वेषु विधिः स्यात्परिसाधने ।

अन्विच्छेत् अन्वेषणमस्मिन् जने निक्षेपादिकमस्तीत्यवधारणम् । तदच्छलानुसारेण कुर्यात् तथा प्रीतिपूर्वकं मैत्र्यादिकरणपूर्वकमन्विच्छेत् । तथा विचार्येति । तस्य वृत्तं चेष्टितं निक्षेपहरणानुरूपं अतिव्ययाद्यपि तद्ग्रहणनियतं विचार्य तमेव साम्ना याचेत न दण्डादिना दण्डादिना तु साधने । कथञ्चिदतथात्वे मिथ्याभियोगे दण्डपातः स्यात् । निक्षेपेषु निक्षिप्तेषु याचितान्वाहितनिक्षेपादिषु ।

अन्वाहितादौ निक्षेपधर्मानतिदिशति बृहस्पतिः

अन्वाहिते याचितके शिल्पिन्यासे सबन्धके ।
एष एवोदितो धर्मस्तथा च शरणागते ॥

अन्वाहितं नाम यदेकस्य हस्ते निहितं द्रव्यं परकरे स्वामिने देहीति अनु पश्चादाहितम् । याचितमुत्सवादौ परकीयमलंकारादि याचित्वाऽऽनीतम् । शिल्पिन्यासः कुण्डलकङ्कणादिनिर्माणाय तन्निर्माणहस्तन्यस्तहेमादिः । एष एव विधिः निक्षेपप्रतिदानादिविधिः दृष्टो मन्वादिभिर्निर्णयः ।

सपनिधिधर्मानभिधाय याज्ञवल्क्योऽपि

याचितान्वाहितन्यासनिक्षेपादिष्वयं विधिः ॥

न्यासो नाम गृहस्वामिनो दर्शयित्वा स्वाम्यसमक्षं गृहजनकरे प्रक्षेपो गृहस्वामिने देयमिदमिति ।

तथा च बृहस्पतिः

राजाचौरारातिभयात्तथा दायादवञ्चनात् ।
स्थाप्यतेऽन्यगृहे द्रव्यं न्यासस्तत्परिकीर्तितम् ॥

अत्र गृह इति वदता गृहपतेः स्थानान्तरावस्थितस्यासमक्षं तस्मिन्नागते देयमिदमित्युक्त्वा स्थापितं न्यासशब्दवाच्यमित्युक्तमिति गम्यते । अत्रादिपदेन प्रतिन्याससङ्ग्रहः ।

तथा च नारदः

एष एव विधिर्दृष्टो याचितान्वाहितादिषु ।
शिल्पिषूपनिधौ न्यासे प्रतिन्यासे तथैव च ॥ इति ।

प्रतिन्यासो नामान्योन्यापेक्षया मदीयमिदं द्रव्यं त्वया संरक्षणीयं त्वदीयं च मयेति यत्स्थापितं हेमादि ।

शिल्पिन्यासविषये विशेषमाह कात्यायनः

यैश्च संस्क्रियते न्यासो दिवसैः परिनिश्चितैः ।
तदूर्ध्वं स्थापयन् शिल्पी दाप्यो दैवहृतेऽपि तम् ॥

एतेन शिल्पिहस्ते न्यस्तस्य परिनिश्चितदिनाभ्यन्तरे दैवराजाद्युपघाते सति न दाप्य इति गम्यते ।

तथा

न्यासदोषाद्विनाशः स्याच्छिल्पिनं तं न दापयेत् ।
दापयेच्छिल्पिदोषात्तत्संस्कारार्थं यदर्पितम् ॥

शिल्पिदोषादित्यत्र विनाशः स्यादित्यनुषज्यते ।

शिल्पिन्यासविषये विशेषमुक्त्वा याचितविषयेऽप्याह स एव

यदि तत्कार्यमुद्दिश्य कालं परिनियम्य वा ।
याचितेऽर्थकृते तस्मिन्न प्राप्ते न तु दाप्यते ॥

अस्यार्थः—यत्कार्यं चिरकालनिष्पाद्यं तदर्थं याचितः यदि वा मासादिकालावधि दीयतामित्येवं नियम्य याचितः तत्कार्यमध्ये नियतकालमध्ये वा प्रतियाचितो याचितकं यो न ददाति मासौ सोदयं दाप्यः, किन्तु कृते कार्ये नियतकालान्ते वा याचितस्याप्यमेव दद्यादिति । इदं च 'याच्यमानो न चेद्दद्याद्दाप्यस्तत्सोदयं भवेदि'त्यस्यापवादरूपं द्रष्टव्यम् । कृतसमया-दाप्यदाने स एव

प्राप्तकाले कृते कार्ये न दद्याद्याचितोऽपि सन्।
तस्मिन्नष्टे हृते वाऽपि ग्रहीता मूल्यमाप्नुयात् ॥

तत्कार्यमुद्दिश्ये'त्यस्यापवादमाह स एव

अथ कार्योपक्षयस्तु तस्यैव स्वामिनो भवेत्।
अप्राप्ते चैव काले तु दाप्यस्त्वर्धकृतेऽपि तत् ॥

इति निक्षेपादिप्रकरणम्



## अथास्वामिविक्रयाख्यं व्यवहारपदं निरूप्यते

तत्र तत्स्वरूपमाह नारदः

निक्षिप्तं वा परद्रव्यं नष्टं लब्ध्वाऽपहृत्य वा।
विक्रीयतेऽसमक्षं यत्स ज्ञेयोऽस्वामिविक्रयः ॥

असमक्षं स्वामिन इति शेषः।

व्यासः

याचितान्वाहितन्यासं हृत्वा वाऽन्यस्य यद्धनम्।
विक्रीयते स्वाम्यभावे स ज्ञेयोऽस्वामिविक्रयः ॥

स्वाम्यभावे स्वाम्यसन्निधाने।

नारदः

द्रव्यमस्वामिविक्रीतं प्राप्य स्वामी तदाप्नुयात्।

प्राप्य दृष्ट्वा इदं च स्वाम्यननुमतौ

अस्वामी च बृहस्पतिना दर्शितः

निक्षेपान्वाहितं न्यासं हृतं याचितबन्धकम्।
उपांशु येन विक्रीतमस्वामी सोऽभिधीयते ॥

निक्षेपादिग्रहणं परद्रव्यतया प्रसिद्धनष्टाधिगमादेरप्युपलक्षणार्थम्। उपांशु रहसि। इदं च प्रायिकाभिप्रायम्। तेन प्रकाशमपि निक्षेपादिविक्रेतुरस्वामित्वमवगन्तव्यम्।

अस्वामिना च कृतमकृतमित्याह मनुः

अस्वामिना कृतो यस्तु दायो विक्रय एव वा।
अकृतः स तु विज्ञेयो व्यवहार इति स्थितिः ॥

कात्यायनोऽपि

अस्वामिविक्रयं दानमाधिं च विनिवर्तयेत् । इति ।

**विष्णुः**

अज्ञानतः प्रकाशं यः परद्रव्यं क्रीणीयात् तत्र तस्यादोषः स्वामी द्रव्यं समवाप्नुयात् ।

अज्ञानतः विक्रयिकास्वामित्वावोधात् । तस्य क्रेतुरदोषः चौर्यदोषाभावः ।

**बृहस्पतिः**

येन क्रीतं तु मूल्येन प्रागध्यक्षनिवेदितम् ।
न तत्र विद्यते दोषस्तेन स्यादपविक्रयात् ॥

मूल्येन अहीनमूल्येन ।

उपक्रयस्वरूपमाह स एव

अन्तर्गृहे बहिर्ग्रामाभिस्युपांथसतो जनात् ।
हीनमूल्यं च यत्क्रीतं ज्ञेयोऽसावपविक्रयः ॥

असतश्चण्डालादेः । असद्ग्रहणं दासाद्युपलक्षणम् ।

तथा च नारदः

अस्वाम्यनुमताद्दासादसतश्च जनाद्रहः ।
हीनमूल्यमवेलायां क्रीणंस्तद्दोषभाग्भवेत् ॥

तद्दोषस्तस्करदोषः, तेन तस्करवद्दण्डभाग्भवतीत्यर्थः ।

तथा च याज्ञवल्क्यः

स्वं लभेतान्यविक्रीतं क्रेतुर्दोषोऽप्रकाशिते ।
हीनाद्रहो हीनमूल्ये वेलाहीने च तस्करः ॥

अन्यः स्वामी । अप्रकाशिते गोपिते क्रये क्रेतुर्दोषो भवति । हीनात् क्रीतद्रव्यागमोपायहीनात् । तस्करस्तस्करवद्दण्डनीय इत्यर्थः ।

नारदोऽपि

प्रकाशं क्रयतः शुद्धिः क्रेतुः स्तेयं रहः क्रयात् ॥ इति ।

नाष्टिकं प्रत्याह याज्ञवल्क्यः

नष्टापहृतमासाद्य हर्तारं ग्राहयेन्नरम् ।
देशकालातिपत्तौ च गृहीत्वा स्वयमर्पयेत् ॥

अयमर्थः—विनष्टमपहृतं वा स्वीयं द्रव्यमासाद्याधिगन्तुरपहर्तुर्वा हस्ते दृष्ट्वान्तं अपहर्तारमधिगन्तारं वा ग्राहयेद्राजपुरुषादिभिर्धारयेत् । देशकालातिपत्तौ राजपुरुषाद्यानयनार्थं देशान्तरगमने कालक्षेपे च क्रियमाणे पलायनशङ्कया स्वयमेव वाही गृहीत्वा राजपुरुषेभ्यो राज्ञे वा

समर्पयेत् । ततो राजपुरुषादिभिः सामाद्युपायैः स्वामिने तद्धनं दापयित्वा दण्डयित्वा च स समुत्स्रष्टव्य इति ।

विप्रतिपन्नास्वामिविषये नाष्टिकस्य साधनोपायमाह **कात्यायनः**

अभियोक्ता धनं कुर्यात्प्रथमं ज्ञातिभिः स्वकम् । इति ।

अभियोक्ताऽत्र नाष्टिकः । ज्ञातिभिः स्वज्ञातिभिः साक्षिभूतैः स्वकं कुर्यात् यथा स्वकीयं भवति तथा साधयेत् । क्वचित्तु ज्ञातृभिरिति पाठः ।

तत्रैव प्रकारमाह **याज्ञवल्क्यः**

आगमेनोपभोगेन नष्टं भाव्यम् (अतोऽन्यथा ।) इति ।

आगमः ऋक्थक्रयप्रतिग्रहादिः ।

तथा च **नारदः**

पितृलब्धं क्रयप्राप्तं शौर्यं वैवाहिकं तथा ।
बान्धवादप्रजेज्यातः षड्विधस्तु धनागमः ॥ इति ।

तेन उपभोगेन च ।

**कात्यायनः**

नाष्टिकस्तु प्रकुर्वीत तद्धनं ज्ञातृभिः स्वकम् ।
अदत्तत्यक्तविक्रीतं कृत्वा स्वं लभते धनम् ॥

दत्तत्यक्तविक्रीतविपरीतं प्रमाणसिद्धं विधाय नाष्टिको विक्रेत्रादिभ्यो धनं लभत इत्यर्थः ।

क्रेतृविषये **बृहस्पतिः**

पूर्वस्वामी तु तद्द्रव्यं यदागत्य विचारयेत् ।
तत्र मूलं दर्शनीयं क्रेतुः शुद्धिस्ततो भवेत् ॥

मूलं विक्रेत्रादि ।

मूलानयनानन्तरं **व्यासः**

मूले समाहृते क्रेता नाभियोज्यः कथञ्चन ।
मूलेन सह वादस्तु नाष्टिकस्य तदा भवेत् ॥

मूलत्वेन प्रदर्शितस्य स्वत्वहेत्वसाधने **बृहस्पतिः**

विक्रेता दर्शितो यत्र हीयते व्यवहारतः ।
क्रेतृराज्ञोर्मूल्यदमौ प्रदद्यात्स्वामिने धनम् ॥

**याज्ञवल्क्योऽपि**

विक्रेतुर्दर्शनाच्छुद्धिः स्वामी द्रव्यं नृपो दमम् ।
क्रेता मूल्यमवाप्नोति तस्माद्यस्तस्य विक्रयी ॥

विक्रेतृदर्शनात् क्रेतुः शुद्धिर्भवतीत्यर्थः । दमं अपराधानुरूपम् ।

**नारदो**ऽपि

विक्रेता स्वामिने त्वर्थं क्रेत्रे मूल्यं च तत्कृतम् ।
दद्याद्दण्डं तथा राज्ञे विधिरस्वामिविक्रये ॥

विक्रेतुर्देशान्तरावस्थाने समयदानमाह **कात्यायनः**

मूलानयनकालश्च देयो योजनसङ्ख्यया ।

चिरेणापि मूलदर्शनाशक्तौ स एव

प्रकाशं वा क्रयं कुर्यात् ॥ इति ।

प्रकाशं क्रयं कुर्यात् क्रयं प्रकाशयेदित्यर्थः ।

प्रकाशं च क्रयं कुर्यात्साधुभिर्ज्ञातिभिः स्वकैः ।
न तत्रान्या क्रिया प्रोक्ता दैविकी न च मानुषी ॥

तथा

विशोधिते क्रये राज्ञा वक्तव्यः स न किञ्चन ।

किञ्चन न वक्तव्यः न दण्डनीय इत्यर्थः ।

**मनु**रपि

अथ मूलमनाहार्यं प्रकाशक्रयशोधितम् ।
अदण्ड्यो मुच्यते राज्ञा नाष्टिको लभते धनम् ॥

मूलाहरणासम्भवे तु देशकालससाक्षिकक्रयेण शोधितं धनं क्रेतुः सकाशात् मूल्यमदत्त्वैव नाष्टिको लभते । क्रेता च अदण्ड्यो भूत्वा राजनिरोधान्मुच्यत इत्यर्थः ।

**कात्यायनः**

यदा मूलमुपन्यस्य पुनर्वादी क्रयं वदेत् ।
आहरेन्मूलमेवासौ न क्रयेण प्रयोजनम् ॥

क्रयोऽत्र प्रकाशक्रयः । यदा पुनः साक्ष्यादिभिर्दिव्येन वा क्रयं न साधयति मूलं च न प्रदर्शयति तदा स एव दण्डादिभाग्भवति ।

तथा च **कात्यायनः**

अनुपस्थापयन्मूलं क्रयं वाऽप्यविशोधयन् ।
यथाभियोगं धनिने धनं दाप्यो दमं च सः ॥

यत्र तु नाष्टिको न स्वत्वं साधयति तत्र तस्य दण्डः । तथा **स एव**

यदि स्वं नैव कुरुते नाष्टिको ज्ञातृभिर्धनम् ।
प्रसङ्गविनिवृत्त्यर्थं चोरवद्दण्डमर्हति ॥

प्रसङ्गोऽतिप्रसङ्गः ।

याज्ञवल्क्योऽप्याह

आगमेनोपभोगेन नष्टं भाव्यमतोऽन्यथा ।
पञ्चबन्धो दमस्तस्य राज्ञे तेनाविभाविते ॥

अविभावेन विवादस्य द्रव्यस्य पञ्चमांशो दण्डो नाष्टिकेन राज्ञे देय इत्यर्थः । द्रव्यं तु क्रेतुरेव । इदं चाल्पापराधविषयम् ।

महापराधे त्वाह व्यासः

वादी चेन्मार्गितं द्रव्यं साक्षिभिर्नैव भावयेत् ।
दाप्यः स्याद्द्विगुणं दण्डं क्रेता तद्धनमर्हति ॥

मनुः

विक्रयाद्यो धनं किञ्चिद्गृह्णीयात्कुलसन्निधौ ।
क्रयेण स विशुद्धं हि न्यायतो लभते धनम् ॥

कुलं विपणिवीथीसञ्चारी जनसमूहः । स क्रेता ।

मरीचिरपि

वणिग्वीथीपरिगतं विज्ञातं राजपूरुषैः ।
दिवा गृहीतं यत्क्रेत्रा स शुद्धो लभते धनम् ॥

इदं च वचनद्वयं मार्गितद्रव्यविभावनाविषयम्, अतः 'अथ मूलमनाहार्य'मित्यादि-प्रागुदाहृतवचने न विरोधः ।

यत्र क्रेतृनाष्टिकयोः क्रयस्वत्वविभावनाभावस्तत्राह बृहस्पतिः

प्रमाणहीनवादे तु पुरुषापेक्षया नृपः ।
समन्यूनाधिकत्वेन स्वयं कुर्याद्विनिर्णयम् ॥

पुरुषापेक्षया क्रेतृनाष्टिकयोः साधुत्वाद्यपेक्षया । समेति विवादास्पदीभूतं धनं समन्यूनाधिकभावेन विभज्यैतावत्तवैतावच्च तवेति स्वयमेव राजा दद्यादित्यर्थः ।

स्मृ।

वणिग्वीथीपरिगतं विज्ञातं राजपुरुषैः ।
अविज्ञाताश्रयात्क्रीतं विक्रेता यत्र वा मृतः ॥
स्वामी दत्वाऽर्धमूल्यं तु प्रगृह्णीयात्स्वकं धनम् ।
अर्धं द्वयोरपि हृतं तत्र स्याद्व्यवहारतः ॥
अविज्ञातक्रयो दोषस्तथा चापरिपालनम् ।
एतद्द्वयं समाख्यातं द्रव्यहानिकरं बुधैः ॥

अविज्ञाताश्रयादज्ञातस्थानस्थाद्विक्रेतुरित्यर्थः । व्यवहारतः स्वकृतापचारतः । स च विज्ञातेत्यादिना दर्शितः ।

मरीचिरपि

अविज्ञातनिवेशत्वाद्यत्र मूलं न लभ्यते ।
हानिस्तत्र समा कल्प्या क्रेतृनाष्टिकयोर्द्वयोः ॥

निवेशस्थानम् ।

तस्करप्रच्छादकं प्रत्याह याज्ञवल्क्यः

हृतं प्रनष्टं यो द्रव्यं परहस्तादवाप्नुयात् ।
अनिवेद्य नृपे दण्ड्यः स तु षण्णवतिं पणान् ॥

हृतं प्रनष्टं वा चोरादिहस्तस्थं द्रव्यं मदीयमनेनापहृतमिति नृपस्यानिवेद्यैव दर्पादिना यो गृह्णाति स षण्णवतिम् नवतिं पणान् दण्डनीयः । तस्करप्रच्छादकत्वेन दुष्टत्वात् ।

मनुः

विक्रीणीते परस्य स्वं योऽस्वामी स्वाम्यसम्मतः ।
न तं नयेत साक्ष्यं तु स्तेनमस्तेनमानिनम् ॥
अवहार्यो भवेच्चैव सान्वयः षट्शतं दमम् ।
निरन्वयोऽनपसरः प्राप्तः स्याच्चौरकिल्बिषम् ॥

साक्ष्यनिषेधः सर्वव्यवहारायोग्यताप्रतिपादनार्थः ।

अथ प्रसङ्गात् राजपुरुषानीतविषये किञ्चिल्लिख्यते ।

याज्ञवल्क्यः

शौल्किकैः स्थानपालैर्वा नष्टापहृतमाहृतम् ।
अर्वाक्संवत्सरात्स्वामी हरेत परतो नृपः ॥

यदा तु शुल्काधिकारिभिः स्थानरक्षकैर्वा नष्टमपहृतं वस्तु नृपसमीपमानीतं तदा संवत्सरादर्वाक् प्राप्तश्चेन्नाष्टिकस्तद्वस्तु प्राप्नुयात् । संवत्सरादूर्ध्वं तु नृपो गृह्णीयात् । अत्र राजग्राह्यस्य पुरस्ताद्वक्ष्यते । राजपुरुषानीतं च द्रव्यं जनसमूहेषूद्घोष्य यावद्वर्षं नृपेण संरक्षणीयम् ।

यदाह गौतमः

प्रनष्टस्वामिकमधिगम्य राज्ञे प्रब्रूयुर्विख्याप्य संवत्सरं राज्ञा रक्ष्यम् । इति ।

यत्तु मनुनोक्तम्

प्रनष्टस्वामिकं द्रव्यं राजा त्र्यब्दं निधापयेत् ॥

इति, तदत्यन्तदूरे देशे स्वामिसम्भावनाविषयम् । निधापनं च स्वधनामिश्रभावेन नृपेण कर्तव्यम् ।

यतः स एवाह

प्रनष्टाधिगतं द्रव्यं तिष्ठेद्युक्तैरधिष्ठितम् ।
यांस्तत्र चोरान्गृह्णीयात्तान्राजेभेन घातयेत् ॥

स्वामिनः प्रनष्टं अन्येन च लब्धं प्रनष्टाधिगतम् । इभेन गजेन ।

प्रनष्टाधिगतस्य प्रत्यर्पणमाह **याज्ञवल्क्यः**

प्रनष्टाधिगतं देयं नृपेण धनिने धनम् । इति ।

धनी च तद्धनस्वामित्वं प्रकाश्य गृह्णीयात् ।

तथा **मनुः**

ममेदमिति यो ब्रूयात्सोऽनुयोज्यो यथाविधि ।
संवाद्य रूपसंख्यादीन्स्वामी तद्द्रव्यमर्हति ॥ इति ।

यो ममेदमिति ब्रूयात् स स्वामित्वज्ञानाय राजपुरुषैः कस्मिन्देशे कुत्र वा काले कीदृग्वर्णं कीदृक्संस्थानं किंसंख्याकं किंपरिमाणकं प्रनष्टमिति पृष्टो यादृशं प्रनष्टस्य संस्थानादिकं तादृशमेव वदन् तद्द्रव्यं ग्रहीतुमर्हतीत्यर्थः । विसंवादित्वस्वामित्वात्स्वीकर्तुं न योग्य इत्याशयः ।

प्रत्युतान्यवस्त्वपहरणप्रवृत्तत्वाद्दण्डनीय इत्याह **स एव**

अवेदयन्प्रनष्टस्य देशकालं च तत्त्वतः ।
वर्णं रूपं प्रमाणं च तत्समं दण्डमर्हति ॥ इति ।

तत्त्वतोऽवेदयन् विसंवादं कुर्वन् तत्समं प्रनष्टाधिगतसमम् । संवादं कुर्वाणस्तु सर्वं प्रनष्टाधिगतं संवत्सरादर्वागेव प्राप्नोति ।

अर्वाक्संवत्सरात्स्वामी हरेत परतो नृपः ।

इति वचनात् ।

अत्यन्तदूरदेशस्थस्वामिविषये तु **मनुराह**

अर्वाक् त्र्यब्दाद्धरेत्स्वामी परतो नृपतिर्हरेत् । इति ।

हरेत् रक्षकभागमिति शेषः ।

स च भागस्तेनैव दर्शितः

आददीताथ षड्भागं प्रनष्टाधिगतान्नृपः ।
दशमं द्वादशं वाऽपि सतां धर्ममनुस्मरन् ॥ इति ।

अथेति । अतिक्रान्तावधेः स्वामिनः समागमनानंतर्यं प्रतिपाद्यते । समागमनस्यात्यन्तविलम्बे षष्ठो भागः । अनतिविलम्बे तु दशमो भागः, विलम्बाभावे तु द्वादशो भागः, विलम्बाभावे तु द्वादशो भाग इत्यतिनिर्गुणगुणवदतिगुणापेक्षया वा व्यवस्था वेदितव्या । सतां धर्ममिलनेन पक्षान्तरं दर्शितम् । तच्च व्यवहारसिद्धं यावत्तावदिति ।

यत्तु **गौतमेनोक्तम्**

ऊर्ध्वमधिगन्तुश्चतुर्थो राज्ञः शेषः ।

इति, तदतिक्रान्तावधिकस्य स्वामिनो नाशे निश्चिते वेदितव्यम् ।

मनूक्तपञ्चाशादिग्रहणस्य द्रव्यविशेषे अपवादमाह **याज्ञवल्क्यः**

पणानेकशफे दद्याच्चतुरः पञ्च मानुषे ।
महिषोष्ट्रगवां द्वौ द्वौ पादं पादमजाविके ॥

एकशफोऽश्वादिः । मानुषं मनुष्यजातीयं द्रव्यम् । अन्यत्स्पष्टम् । अजाविकमिति समासनिर्देशेऽपि पादं पादमिति वीप्साबलात् प्रत्येकं सम्बध्यते । इदं च प्रनष्टाधिगतस्वामिना राज्ञे चतुरादिपणदानं वस्तुसंरक्षणनिमित्तम् ।

अथ प्रसङ्गात् स्वाम्यनर्पितवस्तुभोक्तृविषयाणि कानिचिन्नारदीयादिवचनानि लिख्यन्ते

उद्दिष्टमेव भोक्तव्यं स्त्री पशुर्वाश्वगोऽपि वा ।
अनर्पितं तु यो भुंक्ते भुक्तभागं प्रदापयेत् ॥
अनुद्दिष्टं तु यद्द्रव्यं पण्येनैव विशोधयेत् ।
दिवसे द्विपणं दासीं धेनुमष्टपणं तथा ॥
त्रयोदशमनड्वाहमर्धं भूमिं च षोडश ।
बलात्कारेण यो भुंक्ते दाप्यश्चाष्टगुणं दिने ॥
उलूखलं पणार्धं तु मुशलस्य पणद्वयम् ।
शूर्पस्य च पणार्धं तु जैमिनिर्मुनिरब्रवीत् ॥ इति ।

इत्यस्वामिविक्रयः

---

## अथ सम्भूयसमुत्थानम्

तत्र तत्स्वरूपभेदावाह **नारदः**

वणिक्प्रभृतयो यत्र कर्म सम्भूय कुर्वते ।
तत्सम्भूयसमुत्थानं व्यवहारपदं स्मृतम् ॥

वणिजो वाणिज्यम्, ऋत्विजो यज्ञम्, कृषीवलाः कृषिं हेमकारादयः शिल्पिनः शिल्पम्, नर्तकादयो नृत्यादिकम्, ते यत् सम्भूय सहत्य कुर्वते तत्सम्भूय क्रियमाणं वाणिज्यादिकं सम्भूय समुत्तिष्ठन्ते समेधन्ते अनेनेति व्युत्पत्त्या सम्भूयसमुत्थानाख्यं व्यवहारपदमित्यर्थः । वणिक्प्रभृतय इत्यनेन तद्भेदो दर्शितः ।

तत्र **बृहस्पतिः**

कुलीनदक्षानलसैः प्राज्ञैरानकवेदिभिः ।
आयव्ययज्ञैः शुचिभिः शूरैः कुर्यात्सह क्रियाम् ॥

कुलीनैः प्राज्ञैः शुचिभिः सह क्रतुक्रियां, प्राज्ञैः सह शिल्पक्रियां, प्राज्ञैरानकवेदिभिर्वाद्यवेदिभिश्च सह सङ्गीतक्रिया, आयव्ययज्ञैर्वणिक्क्रियां शूरैः सह चौर्यक्रियां कुर्यादित्यर्थः। दक्षैरनलसैरिति सर्वशेषभूतम्। वाहकर्षकबीजादिना समैः सह कृषिं कुर्यादिति वक्ष्यते।

अशक्तादिभिः सह क्रिया निषेधति स एव

अशक्तालसरोगार्तमन्दभाग्यनिराश्रयैः ॥
वाणिज्याद्याः सहैतैस्तु न कर्तव्या बुधैः क्रिया।

निराश्रयो मूलधनरहितः। मूलधनं चांशक्षेपार्थम्।

यथा च **नारदः**

फलहेतोरुपायेन कर्म सम्भूय कुर्वताम्।
आधारभूतः प्रक्षेप उत्तिष्ठेरंस्ततोंऽशतः ॥

आधारभूत आश्रयभूतः प्रक्षेपो मूलधनप्रक्षेपः। तदनुसारेण उत्तिष्ठेरन्। लाभभाजो भवेयुरित्यर्थः।

तथा

समोऽतिरिक्तो हीनो वा तत्रांशो यस्य यादृशः।
क्षयव्ययौ तथा वृद्धिस्तत्र तस्य तथाविधा ॥

क्षयादयः प्रक्षिप्तांशानुसारिण इत्यर्थः।

**बृहस्पतिः**

प्रयोगं कुर्वते ये तु हेमधान्यरसादिना।
समन्यूनाधिकैरंशैर्लाभस्तेषां तथाविधः ॥

तथा

समो न्यूनोऽधिको वांऽशो येन क्षिप्तस्तथैव सः।
व्ययं दद्यात्कर्म कुर्याल्लाभं गृह्णीत चैव हि ॥

**याज्ञवल्क्योऽपि**

समवायेन वणिजां लाभार्थं कर्म कुर्वताम्।
लाभालाभौ यथाद्रव्यं यथा वा संविदा कृतौ ॥

सर्वे वयमिदं कर्म मिलिताः कुर्म इत्येवंरूपा सम्प्रतिपत्तिः समवायस्तेन ये वणिग्नटनर्तकप्रभृतयो लाभलिप्सवः प्रातिस्विकं कर्म कुर्वते तेषां लाभालाभावुपचयापचयौ यथाद्रव्यं येन यावद्धनं पण्यग्रहणाद्यर्थं दत्तं तदनुसारेणावगन्तव्यौ। यद्वा प्रधानगुणपर्यालोचनया संविदा समयेन कृतौ कल्पितौ लाभालाभौ ज्ञेयौ।

सम्भूयकारिणां कार्यमाह व्यासः

समक्षमसमक्षं वाऽवञ्चयन्तः परस्परम् ।
नानापण्यानुसारेण प्रकुर्युः क्रयविक्रयौ ॥

नारदः

भाण्डपिण्डव्ययोद्धारभारसारान्ववेक्षणम् ।
कुर्युस्तेऽव्यभिचारेण समये ते व्यवस्थिताः ॥

भाण्डं विक्रयद्रव्यम् । पिण्डः पाथेयम् । अथवा सर्वानुमत्या एक एव कार्यं कुर्यात् । तदाह बृहस्पतिः

बहूनां संमतो यस्तु दद्यादेको धनं नरः ।
करणं कारयेद्वाऽपि सर्वैरेव कृतं भवेत् ॥

करणं लेख्यादिकम् ।

सम्भूयकारिणां मिथो विवादेऽप्याह स एव

परीक्षकाः साक्षिणश्च त एवोक्ताः परस्परम् ।
सन्दिग्धेऽर्थे वञ्चकानां न चेद्विद्वेषसंयुताः ॥

विद्वेषयोगेऽप्याह स एव

यः कश्चिद्वञ्चकस्तेषां विज्ञातः क्रयविक्रये ।
शपथैः स विशोध्यः स्यात्सर्ववादेष्वयं विधिः ॥

शपथपदं प्रमाणमात्रोपलक्षणम् । विशोध्यः सर्वैरिति शेषः । एवं च वञ्चकत्वे ज्ञाते याज्ञवल्क्यः

जिह्मं त्यजेयुर्निर्लाभमशक्तोऽन्येन कारयेत् ।

जिह्मं वञ्चकम् । निर्लाभं निर्गतलाभमपहृतलाभं मूलमात्रं दत्वा निष्कासयेदित्यर्थः । यश्च सम्भूयकारिणां मध्ये भाण्डप्रत्यवेक्षणादिकरणे अशक्तोऽसावन्येन शक्तेन स्वीयं भाण्डभारवाहनतदायव्ययपरीक्षणादिकं कर्म कारयेत् ।

बृहस्पतिः

क्षयो हानिर्यदा तत्र दैवराजकृता भवेत् ।
सर्वेषामेव सा प्रोक्ता कल्पनीया यथांशतः ॥

क्षयो मूलस्य । हानिर्लाभस्य । दैवराजग्रहणं साधारणदोषोपलक्षणार्थम् ।

प्रातिस्विकदोषे तु स एवाह

अनिर्दिष्टो वार्यमाणः प्रमादाद्यस्तु नाशयेत् ।
तेनैव तद्भवेद्देयं सर्वेषां समवायिनाम् ॥

अनिर्दिष्टोऽननुज्ञातः । वार्यमाण इति पक्षान्तरम्, अन्यथा अनिर्दिष्टपदस्य वैयर्थ्यापत्तेः । प्रमादः प्रज्ञाराहित्यं, तच्च अर्थनाशनिमित्तभूतकामक्रोधलोभादिप्रातिस्विकदोषोपलक्षणतया प्रोक्तम् ।

पालनेऽप्याह स एव

दैवराजभयाद्यस्तु स्वशक्त्या परिपालयेत् ।
तस्यांशं दशमं दत्त्वा गृह्णीयुस्ते परस्परम् ॥

परिपालयेदिति । समवायिधनमिति शेषः । तस्य तस्मै परिपालकाय ।

**नारदः**

दैवतस्कर राजाग्निव्यसने समुपस्थिते ।
स्वशक्त्या रक्षयेद्यस्तु तस्यांशो दशमः स्मृतः ॥

**कात्यायनः**

चौरतः सलिलादग्नेर्द्रव्यं यस्तु समाहरेत् ।
तस्यांशो दशमो देयः सर्वद्रव्येष्वयं विधिः ॥

असमवायिद्रव्यपालनेऽप्येष विधिरिति सर्वद्रव्यशब्दार्थः ।

**बृहस्पतिः**

समवेतैस्तु यद्दत्तं प्रार्थनीयं तथैव तत् ।
तत्र याचेत यः कश्चिल्लाभात्स परिहीयते ॥

तथैव समवेतैरेव । याचनग्रहणमंशानुसारेण करणीयकर्मणः प्रदर्शनार्थम् । तेन कर्मान्तराकरणेऽप्यकरणानुसारेण लाभहानिः ।

समवायिनां मध्ये यदि कश्चिद्विदेशे उपरतस्तत्राह **याज्ञवल्क्यः**

देशान्तरगते प्रेते द्रव्यं दायादबान्धवाः ।
ज्ञातयो वा हरेयुस्तदागतास्तैर्विना नृपः ॥

दायादाः पुत्राद्यपत्यवर्गाः । बान्धवा मातुलाद्या मातृपक्ष्याः । ज्ञातयः अपत्यवर्गव्यतिरिक्ताः सपिण्डा गृह्णीयुः । आगता इति । आगता देशान्तरादागताः सम्भूयव्यवहारिणो वणिजस्ते वा । तैर्विना दायाद्यभावे । वाशब्दश्चात्र दायादानामधिकारस्य विकल्पप्रदर्शनार्थः । क्रमस्तु 'पत्नीदुहितरः' इत्यनेन विभागप्रकरणे वक्ष्यते । इदं च वचनं शिष्यसब्रह्मचारिब्राह्मणनिषेधो वणिक्प्राप्तिश्चेति त्रयं दर्शयितुम् । वणिजामपि मध्ये यः शक्तस्तदीयपिण्डदानर्णापाकरणसमर्थः स गृह्णीयात्, सामर्थ्याविशेषे तु सर्वेऽपि वणिजः संसृष्टिनो विभज्य गृह्णीयुस्तदभावे नृप इति ।

इदमेव स्पष्टमाह **नारदः**

एकस्य चेत्स्याद् व्यसनं दायादोऽस्य तदाप्नुयात् ।
अन्यो वाऽसति दायादे शक्ताश्चेत्सर्व एव वा ॥

कश्चिच्चेत्संसरन्देशात् प्रेयादस्यागतो वणिक् ।
राजाऽस्य भाण्डं संरक्षेद्यावद्दायाददर्शनम् ॥

व्यसनमत्र मरणमेव ।

**बृहस्पतिः**

यदा तत्र वणिक्कश्चित्प्रमीयेत प्रमादतः ।
तस्य भाण्डं दर्शनीयं नियुक्तं राजपूरुषैः ॥

राज्ञेति शेषः ।

यदा कश्चित् समागच्छेत्तत्र ऋक्थहरो नरः ।
स्वाम्यं विभावयेदन्यैः स तदा लब्धुमर्हति ॥

अत्र दायादागमने प्रतीक्ष्यकालावधिमाह **नारदः**

तदभावे तु गुप्तं तत् कारयेद्दशवत्सरान् ।
अस्वामिकमदायादं दशवर्षस्थितं ततः ।
राजा तदात्मसात्कुर्यादेवं धर्मो न हीयते ॥ इति ।

तदभावे पूर्वोक्तदायादादिशक्तसंसृष्टिवणिगन्तानामभावे ।

अवधिमध्ये आयाततद्दायादात् यद्राज्ञा ग्राह्यं तदाह **बृहस्पतिः**

राजाऽऽददीत षड्भागं नवमं द्वादशं तथा ।
क्षत्रविट्शूद्रजातीनां विप्राद् गृह्णीत विंशकम् ॥
अब्दादूर्ध्वं तु नागच्छेद्यत्र स्वामी कथञ्चन ।
तदा गृह्णीत तद्राजा ब्रह्मस्वं ब्राह्मणं श्रयेत् ॥

**बौधायनोऽपि**

अब्राह्मणस्य प्रनष्टस्वामिकमृक्थं संवत्सरं परिपाल्य राजा हरेत् । इति ।

अत्रापि कालविकल्पो दूरदूरतराद्यपेक्षया ब्राह्मणाद्युत्कृष्टवर्णापेक्षया वा बोद्धव्यः ।

सम्भूयकारिकृषिबलविषये **बृहस्पतिः**

श्रूयतां कर्षकादीनां विधानमिदमुच्यते ।
वाह्यकर्षकबीजाद्यैः क्षेत्रोपकरणेन च ।
ये समानास्तु तैः सार्धं कृषिः कार्या विजानता ।

वाह्या बलीवर्दादयः । कर्षकः कृष्यर्थमुपकल्पितो जनः । आद्यशब्दः कृषिनिमित्तद्रव्यादिवचनः । उपकरणं लाङ्गलादि ।

वर्ज्यवाह्यानाह स एव

कृशातिवृद्धं क्रुद्धं च रोगिणं प्रपलायिनम् ।
काणं खञ्जं च नादद्याद् वाह्यं प्राज्ञः कृषीबलः ॥

वर्ज्यक्षेत्रमप्याह स एव

पर्वते नगराभ्याशे तथा राजपथस्य च।
ऊषरं मूषकव्याप्तं क्षेत्रं यत्नेन वर्जयेत् ॥

राजपथस्येत्यत्राप्यभ्याश इति सम्बन्धः। ऊषरं पर्वताद्यनासन्नमपि। लाभविभागादिकं सम्भूयवाणिज्यादिकर्मकारिणां साधारणं यत्पूर्वत्रोक्तं तदत्राप्यनुसंधातव्यम्।

प्रातिस्विकदोषेण नाशेऽपि स एव

वाह्यबीजात्ययाद्यस्य क्षेत्रहानिः प्रजायते।
तेनैव सा प्रदातव्या सर्वेषां कृषिजीविनाम् ॥

वाह्यबीजपदं तदुपयुक्तसाधनान्तरस्याप्युपलक्षणार्थम्।

सम्भूयकारिशिल्पिविषयेऽपि बृहस्पतिः

हिरण्यकुप्यसूत्राणां काष्ठपाषाणचर्मणाम्।
संस्कर्ता तत्कलाभिज्ञः शिल्पी प्रोक्तो मनीषिभिः ॥

तेषां लाभविभागमाह स एव

हेमकारादयो यत्र शिल्पं सम्भूय कुर्वते।
कर्मानुरूपं निर्वेशं लभेरंस्ते यथांशतः ॥

निर्वेशो भृतिः, 'निर्वेशो भोगयो'रित्यभिधानात्।

कात्यायनोऽपि

शिक्षकाभिज्ञकुशला आचार्याश्चेति शिल्पिनः।
एकद्वित्रिचतुर्भागान् हरेयुस्ते यथोत्तरम् ॥

अत्रोत्तरोत्तरस्य भागाधिक्ये ज्ञानोत्कर्षो हेतुः।

काष्ठादिमयहर्म्यादिनिर्मातॄणां मुख्यस्य चांशक्लृप्तिमाह बृहस्पतिः

हर्म्यं देवगृहं वापीं चार्मिकोपस्कराणि च।
सम्भूय कुर्वतां चैषां प्रमुखो द्व्यंशमर्हति ॥

सम्भूयकारिनर्तकस्तेनविषये स एव

नर्तकानामेष एव धर्मः सद्भिरुदाहृतः।
तालज्ञो लभतेऽध्यर्धं गायनास्तु समांशिनः ॥

एष धर्मो यः शिल्पिमुख्यस्य द्व्यंशभागित्वरूपः सः।

तथा

स्वाम्याज्ञया तु यच्चौरैः परदेशादपाहृतम्।
राज्ञे दत्त्वा तु षड्भागं लभेयुस्ते यथांशतः ॥

यथांशत इत्यमुमंशं स्वयमेव विवृणोति

चतुरोऽंशांस्तु तन्मुख्यः शूरस्त्र्यंशमवाप्नुयात् ।
समर्थस्तु हरेद्‌द्व्यंशं शेषास्त्वन्ये समांशिनः ॥

इदं च राज्ञोऽप्यष्टांशवचनं प्रबलपरिपन्थिराष्ट्रसमाहृतधनविभागपरम् । तत्र राज्ञस्तद्रक्षणादिना साहाय्यकाचरणात् ।

परिपन्थिमात्रदेशापहृतधने त्वाह **कात्यायनः**

परराष्ट्राद्धनं यत्स्याच्चौरैः स्वाम्याज्ञया हृतम् ।
राज्ञे दशांशमुद्धृत्य विभजेरन् यथाविधि ॥
चोराणां मुख्यभूतस्तु चतुरंशांस्ततो हरेत् ।
शूरोऽंशांस्त्रीन् समर्थो द्वौ शेषास्त्वेकैकमेव च ॥

एतेषां च हानिरप्येवमेवेत्याह स एव

तेषां चेत्प्रसृतानां यो ग्रहणं समवाप्नुयात् ।
तन्मोक्षणार्थं तद्दत्तं वहेयुस्ते यथांशतः ॥

अयं च शिल्पिप्रभृतिस्तेनान्तानामंशविभागोऽकृतसमयांशविषयः । समयकरणे तु 'यथा वा संविदा कृता'विति पूर्वोक्तयाज्ञवल्क्यवचनोक्तोऽनुसन्धेयः ।

वणिजां कर्षकाणां च चौराणां शिल्पिनां तथा ।
अनियम्यांशकर्तॄणां सर्वेषामेष निर्णयः ॥

इति **बृहस्पति**नैवाभिहितत्वात् ।

ऋत्विग्विषये **मनुः**

ऋत्विजः समवेतास्तु यथा सत्रे निमन्त्रिताः ।
कुर्युर्यथार्हं यत्कर्म गृह्णीयुर्दक्षिणां तथा ॥

अत्र सत्रशब्दो ऋत्विगन्वितयागपरः, न तु गवामयनादिपरः । तत्र ये यजमानास्त ऋत्विज इति यजमानानामेव ऋत्विक्कार्ये विधानात् ।

ऋत्विजां दक्षिणाविभागमाह स एव

सर्वेषामर्धिनो मुख्यास्तदर्धेनार्धिनोऽपरे ।
तृतीयिनस्तृतीयांशाश्चतुर्थांशाश्च पादिनः ॥

मुख्या गणाद्याः । तृतीयिनः गणिनां तृतीयाः । पादिनो गणिनां चतुर्थाः । शतं गावोऽग्निष्टोमे दक्षिणाः । तदर्धभागिनः सर्वेषां मुख्याः होत्रध्वर्युब्रह्मोद्गातारः । अर्धमिति । भागपरिपूर्णोपपत्तये द्वाभ्यां न्यूनं माह्यम् । तेनाष्टाचत्वारिंशद्गावो भवन्ति । अपरे चत्वारो मैत्रावरुणप्रतिप्रस्थातृब्राह्मणाच्छंसिप्रस्तोतारस्तदर्धेन तस्य मुख्यांशस्यार्धेन चतुर्विंशतिरूपेणार्धभाजः । तृती-

यिनोऽच्छावाड्नेष्ट्रग्नीध्रप्रतिहर्तारः। तृतीयांशः मुख्यांशस्य षोडशगवीरूपतृतीयांशेनांशभाजः। पादिनो ग्रावस्तुदुन्नेतृपोतृसुब्रह्मण्याः। मुख्यभागस्य चतुर्थांशेन द्वादशगवीरूपेणांशभाजः। मुख्यानां चतुर्णां मिथो विभागः समत्वेनैव। एवं तदर्धिप्रभृतीनामपि।

*द्वादश द्वादशाद्येभ्यः षट्षट् द्वितीयेभ्यश्चतस्रश्चतस्रस्तृतीयेभ्यस्तिस्रस्तिस्र इतरेभ्यः।*
इति **कात्यायन**वचनात्।

**मनुः**

सम्भूय स्वानि कर्माणि कुर्वद्भिरिह मानवैः।
अनेन क्रमयोगेन कर्तव्यांशप्रकल्पना॥
यस्य कर्मणि यास्तु स्युरुक्ताः प्रत्यंशदक्षिणः।
स एव ता आददीत भजेरन्सर्व एव वा॥

प्रत्यंशदक्षिणाः। असमं सम्प्रति। ऋत्विग्विशेषसंबद्धितया समाम्नाता दक्षिणास्ताः। किं यस्य कर्मणि यत्संयन्धेन समाम्नाता। यथाभिषेचनीयं "हिरण्मयौ प्रकाशावध्वर्यवे" इति। तेन अध्वर्युणा ग्रहीतव्या उताध्वर्युध्वनिमात्रं(त्रेण?) सर्वे विभज्य गृह्णीरन्निति संशयः।

**मनुबृहस्पती**

रथं हरेदथाध्वर्युर्ब्रह्माधाने च वाजिनम्।
होता चापि हरेदश्वमुद्गाता चाप्यनः क्रये॥

पूर्वोक्तसंशये अयं निर्णयः—केषांचिच्छाखिनामध्वर्यवे रथमाम्नायते ब्रह्मणे वेगवानश्वः होत्रे वाऽश्व उद्गात्रे सोमक्रये सोमवहनः शकटं; एवं व्यवस्थायां ददातिर्मुख्यार्थो भवति पुरुषसंयोगश्च नादृष्टार्थः।

**पुनर्मनुः**

ऋत्विग्यदि वृतो यज्ञे स्वकर्म परिहापयेत्।
तस्य कर्मानुरूपेण देयोंऽशः सहकर्तृभिः॥

परिहापयेद्व्याध्यादिना न समापयेत्। सहकर्तृभिरन्यैस्तत्स्थानपूरणाय स्थितैः।

तथा

दक्षिणासु तु दत्तासु स्वकर्म परिहापयन्।
कृत्स्नमेव लभेतांशमन्येनैव च कारयेत्॥

कारयेत् स्वकार्यशेषं ऋत्विगित्यर्थः।

**नारदः**

ऋत्विजां व्यसनेऽप्येवमन्यस्तत्कर्म निस्तरेत्।
लभते दक्षिणाभागं स तस्मात्संप्रकल्पितम्॥

बृहस्पतिः

एवंक्रियाप्रवृत्तानां यदा कश्चिद्विपद्यते ।
तद्बन्धुना क्रिया कार्या सर्वैर्वा सहकारिभिः ॥

शङ्खलिखितौ

अथ चेदनुप्राप्ते सवने ऋत्विक् म्रियेत तत्र किं कार्यमिति जिज्ञासा तस्य सगोत्रोऽथ शिष्यो वा तत् कार्यमनुपूरयेत् । अथ चेद्यान्धस्ततोऽन्यमृत्विजं वृणुयात् ॥ इति ।

जीवत्येवर्त्विजि यजमानेनर्त्विगन्तरकरणे कस्य दक्षिणेति विवादापनोदार्थमाह शङ्खः

अथर्त्विजि वृते पश्चादन्यं वृणुयात्पूर्वाह्णे तस्यैव दक्षिणा पश्चादह्नः किञ्चिल्लभेत । इति ।

इति सम्भूयसमुत्थानम्

---

## दत्ताप्रदानिकम्

अथ विहिताऽविहितमार्गाश्रयतया दत्ताप्रदानिक दत्तानपकर्मेति लब्धानिर्वचनद्वयं दानाख्य व्यवहारपदमभिधीयते । तत्र स्वरूपमाह नारदः

दत्त्वा द्रव्यमसम्यग् यः पुनरादातुमिच्छति ।
दत्ताप्रदानिकं नाम तद् विवादपदं स्मृतम् ॥

असम्यगविहितमार्गेण । स च ज्येष्ठपुत्राद्यदेयद्रव्यदानाद् अयथावानतो वा अपात्रादौ पात्राविभ्रान्त्या वा पित्राद्यसम्मत्या वा दातुरवस्थाभेदाद्वा भिद्यते । दत्ताप्रदानिकमिति । दत्तस्याप्रदान पुनर्हरण यस्मिन्दानाख्ये तद्दत्ताप्रतिदानिक नाम व्यवहारपद विहितमार्गाश्रयत्वेन दत्तस्यानपकर्म अपुनरादान यस्मिन्निति व्युत्पत्त्या दत्ताप्रदानिकप्रतिपक्षभूत दानाख्यमेव व्यवहारपद दत्तानपकर्मेत्यर्थादुक्त भवति । अनेनैवाभिप्रायेण मनुना 'दत्तस्यानपकर्म चे'त्युक्तम् । अस्मिन्मानवेऽपि वचने अविहितमार्गाश्रयत्वेन दत्तस्याप्रदान पुनर्हरण यस्मिन्दानाख्ये विवादपदे तद्दत्ताप्रदानिकमित्यार्थिकोऽर्थोऽवगन्तव्य । अथवा अपगत कर्म यस्मात् तदपकर्म । अपहारलक्षणक्रियान्तरशून्य, न अपकर्म अनपकर्म, पुनरपहारक्रियासहितमित्यर्थ । तेन दत्तस्य अनपकर्म पुनरादान यत्र तत्तथेति व्युत्पत्त्या दत्तानपकर्मपदेनैव दत्ताप्रतिदानिकमामुच्यते । तस्यैव चातुर्विध्यमाह स एव

अदेयमथ देयं च दत्तं वाऽदत्तमेव च ।
व्यवहारेषु विज्ञेयो दानमार्गश्चतुर्विधः ॥

अदेयं अस्वतया निषिद्धतया वा दानानर्हम्। देयं अनिषिद्धं दानक्रियाया निर्वर्तकम्। दत्तदाने सति सम्प्रदानादनपहार्यम्। एतद्विपरीतमदत्तम्।

**बृहस्पतिः**

एषाऽखिलेनाभिहिता सम्भूयोत्थाननिष्कृतिः।
अदेयदेयदत्तानामदत्तस्य च कथ्यते॥

भेदस्वरूपादिकमधुना कथ्यत इत्यर्थः। तत्सङ्ख्यामाह स एव

तत्र ह्यष्टावदेयानि देयमेकविधं स्मृतम्।
दत्तं सप्तविधं विद्याददत्तं षोडशात्मकम्॥

अदेयभेदान्विविनक्ति बृहस्पतिः स्वयमेव।

सामान्यं पुत्रदारादि सर्वस्वं न्यासयाचितम्।
प्रतिश्रुतं तथाऽन्यस्य न देयं त्वष्टधा स्मृतम्॥

सामान्यः स्वतन्त्रानेकस्वामिकम्।

**नारदः**

अन्वाहितं याचितकमाधिः साधारणं च यत्।
निक्षेपः पुत्रदारं च सर्वस्वं चान्वये सति॥
आपत्स्वपि हि कष्टासु वर्तमानेन देहिना।
अदेयान्याहुराचार्या यच्चान्यस्मै प्रतिश्रुतम्॥ इति।

अन्वये सति पुत्रपुत्रादौ विद्यमाने।

पुत्रानुत्पाद्य संस्कृत्य वृत्तिं तेषां प्रकल्पयेत्।

इति स्मरणात्। नेयं परिसङ्ख्या, किन्तु प्रदर्शनपरमिदम्। अत एव दक्षः

सामान्ययाचितं न्यास आधिर्दाराश्च तद्धनम्।
अन्वाहितं च निक्षेपः सर्वस्वं चान्वये सति॥
आपत्स्वपि न देयानि नव वस्तूनि पण्डितैः।
यो ददाति स मूढात्मा प्रायश्चित्तीयते नरः॥

एतच्चादेयत्वं पुत्रदारस्त्रीधनसर्वस्वप्रतिश्रुतेषु स्वत्वसद्भावेऽपि वाचनिकम्, न्यासादौ तु न्यायसिद्धं तत्र स्वत्वस्यैवाभावात्।

इति दत्ताप्रदानिकम्

---

## अथ देयम्

तत्र कात्यायनः

सर्वस्वं गृहवर्जं तु कुटुम्बभरणाधिकम् ।
यद्द्रव्यं तत्स्वकं देयमदेयं स्यादतोऽन्यथा ॥

अत्र स्वकं देयमिति वदता देयस्यैकविधत्वमर्थादुक्तं भवति ।

याज्ञवल्क्योऽपि

स्वकुटुम्बाविरोधेन देयं दारसुतादृते । इति ।

कुटुम्बाविरोधेन कुटुम्बानुपरोधेन कुटुम्बपोषणावशिष्टमिति यावत् कुटुम्बपदेनात्रावश्यभरणीयाः पित्रादय उक्तास्तद्विरोधेन दानस्य निषिद्धत्वात् ।

तथा च मनुः

भृत्यानामुपरोधेन यत्करोत्यौर्ध्वदैहिकम् ।
न तत्फलमवाप्नोति प्रेत्य चेह च दुर्मतिः ॥

भृत्याः प्रेष्याः, ते च दक्षस्मृतौ प्रथमे **गरुडपुराणे** च दर्शिताः

माता पिता गुरुर्भार्या प्रजा दीनः समाश्रितः ।
अभ्यागतोऽतिथिश्चाग्निः पोष्यवर्ग उदाहृतः ॥
ज्ञातिर्बन्धुजनः क्षीणस्तथाऽनाथः समाश्रितः ।
अन्योऽपि धनयुक्तस्य पोष्यवर्ग उदाहृतः ॥
भरणं पोष्यवर्गस्य प्रशस्तं स्वर्गसाधनम् ।
नरकः पीडने यस्मात्तस्माद्यत्नेन तं भरेत् ॥ इति ।

नारदोऽपि

कुटुम्बभरणाद् द्रव्यं यत्किञ्चिदतिरिच्यते ।
तद्देयमुपहृत्यान्यद्ददद्दोषमवाप्नुयात् ॥

अन्यदुपहृत्य । भर्तव्यं कुटुम्बमुपरुध्येत्यर्थः । उपरोधश्चात्राशनवसनच्छेदनिबन्धनोऽवसेयः, न तु नानाभोगसाधनताम्बूलादिच्छेदनिबन्धनः ।

अत एव बृहस्पतिः

कुटुम्बभक्तवसनाद्देयं यदतिरिच्यते ।
मध्वास्वादे विषं पश्चाद्दातुर्धर्मोऽन्यथा भवेत् ॥ इति ।

स्थावरविषयेऽपि स एव

सप्तागमाद्गृहक्षेत्राद्यद्यत्क्षेत्र प्रचीयते ।
पित्र्यं वाऽथ स्वयं प्राप्तं तद्दातव्यं विवक्षितम् ॥
स्वेच्छादेयं स्वयं प्राप्तं बन्धाचारेण बन्धकम् ॥

सप्तागमादिति। सप्तविधशौर्याद्यागमनप्रकारलब्धाद् गृहक्षेत्रादेरुद्धृत्य देयम्, न त्वनागममित्यर्थः। यन्धाचारः पूर्वमाधिप्रकरणे 'पूर्णावधावि'त्याद्युक्तस्तदाचारेण देयमिति। केचित्तु 'सप्तारामाद्गृहक्षेत्रादि'ति पठित्वा सप्तसङ्ख्यावच्छिन्नारामादिभ्यो यदधिकं स्यात्तद्दातव्यमित्याहुः। तन्मते यत् 'सर्वस्वगृहवर्ज'मित्यादिप्रागुक्तकात्यायनवचने गृहस्यादेयत्वमुक्तं, तत्सप्तगृहानधिकगृहविषयम्।

पुत्रस्य देयत्वादिकमाह **वसिष्ठः**

**शुक्रशोणितसम्भवः पुरुषो मातापितृनिमित्तकस्तस्य प्रदानविक्रयपरित्यागेषु मातापितरौ प्रभवतः॥** इति।

शुक्रशोणितसम्भव इति

**मज्जास्थिस्नायवः शुक्राद्रक्तात्त्वङ्मांसशोणिताः।**
**इति पाङ्कोपिकं नाम देहे भवति देहिनाम्॥**

इति वचनात्पुरुषदेहः शुक्रशोणितसम्भवः, तेन मातापितृभ्यामर्जितत्वात्पुत्रोऽपि देयो भवतीत्यर्थः। एवं च यत्

**सुतस्य सुतदाराणां वशित्वं त्वनुशासने।**
**विक्रये चैव दाने च वशित्वं न सुते पितुः॥**

इति वचनम्, यानि च सुतदारनिषेधकादियाज्ञवल्क्यादिवचनानि तान्येकपुत्रविषयाणि; तद्दाने सन्तत्युच्छेदप्रसङ्गात्।

तथा च **वसिष्ठः**

**न त्वेकं पुत्रं दद्यात्प्रतिगृह्णीयाद्वा स हि सन्तानाय पूर्वेषाम्।** इति।

एवं चानेकपुत्रसद्भावे पुत्रदानमभ्यनुज्ञातमिति गम्यते। एतदप्यनिच्छुपुत्रातिरिक्तपुत्रविषयम्;

**विक्रयं चैव दानं च न नेयाः स्युरनिच्छवः।**
**दाराः पुत्राश्च सर्वस्वमात्मन्येव तु योजयेत्॥**

इति **कात्यायन**वचनात्। अनिच्छोरदानादिकमनापदीति मन्तव्यम्।

**आपत्काले तु कर्तव्यं दानं विक्रय एव वा॥**
**अन्यथा न प्रवर्तेत इति शास्त्रविनिश्चयः।**

इति **कात्यायने**नैवानन्तरमुक्तत्वात्। यत्तु प्रागुक्त**नारद**वचने आपद्यपि पुत्रस्यादेयत्वमुक्तं, तदेकपुत्रविषयमिति सर्ववचनानामविरोधः। ननु 'स्वातन्त्र्यं न क्वचित् स्त्रियाः' इत्यादिना स्त्रीणामस्वातन्त्र्यान्मातुः पुत्रदानमयुक्तमिति। सत्यम्, न स्वतन्त्रत्वेनैव स्त्रीपुत्रं दद्यात् किन्तु भर्त्रनुज्ञया।

तथा च **वसिष्ठः**

**न स्त्री पुत्रं दद्यात् प्रतिगृह्णीयाद्वा अन्यत्रानुज्ञानाद्भर्तुः।** इति।

बृहस्पतिः

सौदायिकं क्रमायातं शौर्यप्राप्तं च यद्भवेत् ।
स्त्रीज्ञातिस्वाम्यनुज्ञातं दत्तं सिद्धिमवाप्नुयात् ॥

सौदायिकं स्त्रियाऽनुज्ञातं भर्त्रा देयम् । पितामहादिक्रमायातमपि ज्ञातिभिरनुज्ञातं देयम् ।

आरुह्य संशयं यत्र प्रसभं कर्म कुर्वते ।
तस्मिन्कर्मणि तुष्टेन प्रसादः स्वामिना कृतः ।
तत्र लब्धं तु यत्किञ्चिद्धनं शौर्येण तद्भवेत् ॥

इति कात्यायनोक्तं शौर्यधनं स्वार्जितमपि दासेन स्वाम्यनुज्ञातमेव देयमित्यर्थः ।

यत्तु

विभक्ता वाऽविभक्ता वा दायादाः स्थावरे समाः ।
एको ह्यनीशः सर्वत्र दानाधमनविक्रये ॥

इति बृहस्पतिवचनं, तदविभक्तदायादानुज्ञाविषयम् । विभक्तग्रहणं तु यत्र विभक्ता अपि स्थावरविषये समाः किं पुनरविभक्ता इति कैमुतिकन्यायेनावगन्तव्यम् । केचित्तु विभक्तानामपि यत्रांशपरिच्छेदो न वृत्तस्तन्मध्यकमेव तिष्ठति तेन तत्र साधारणत्वमेव 'तत्रैकोऽनीशः स्वतन्त्रोऽपी'त्यस्यार्थमाहुः ।

प्रतिश्रुतविषये याज्ञवल्क्यः

देयं प्रतिश्रुतं चैव दत्त्वा नापहरेत्पुनः ।

प्रतिश्रुतं धर्मार्थमिति शेषः । दत्त्वा न्यायमार्गेण ।

यः पुनः प्रतिश्रुतं न ददाति, दत्तं वाऽपहरति तस्य दोषमाह हारीतः

प्रतिश्रुतार्थादानेन दत्तस्याच्छेदनेन च ।
विविधान्नरकान् याति तिर्यग्योनौ च जायते ॥

प्रतिश्रुत्य प्रतिबन्धं विनैवादाने ऋणवत्त्वापैति ।

तदाह स एव

वाचा च यत्प्रतिज्ञातं कर्मणा नोपपादितम् ।
ऋणं तद्धर्मसंयुक्तमिहलोके परत्र च ॥

प्रतिश्रुत्याऽप्रदाता राज्ञा दाप्यो दण्ड्यश्चेत्याह कात्यायनः

स्वेच्छया यः प्रतिश्रुत्य ब्राह्मणाय प्रतिग्रहम् ।
न दद्यादृणवद्दाप्यः प्राप्नुयात्पूर्वसाहसम् ॥

मत्स्यपुराणे तु 'प्रतिश्रुत्याप्रदातारं सुवर्णं दण्डयेन्नृपः' इति पाठः ।

एतदपवादमाह गौतमः

प्रतिश्रुत्याप्यधर्मसंयुक्ताय न दद्यात् ॥ इति ।

**मनुः**

धर्मार्थं येन दत्तं स्यात्कस्मैचिद्याचते धनम् ।
पश्चाच्च न तथा तत्स्यान्न देयं तेन तद्भवेत् ॥
यदि संसाधयेत्तत्तु दर्पाल्लोभेन वा पुनः ।
राज्ञा दाप्यः सुवर्णं स्यात्तस्य स्तेयस्य निष्कृतिः ॥

धर्मार्थं स्वधर्मसिद्ध्यर्थम्, न तथा धर्मार्थं न भवति । अपरे तु यागादिधर्मार्थं याचमानाय दत्तम् । तथा न भवति यदि तेन धनेन यागादि न करोतीति व्याचक्षते ।

प्रतिग्रहे प्रकारविशेषमाह **याज्ञवल्क्यः**

प्रतिग्रहः प्रकाशः स्यात्स्थावरस्य विशेषतः । इति ।

प्रतिग्रहणमत्र प्रतिग्रहः । प्रकाशः प्रकटः, ससाक्षिक इति यावत् ।



## अथ दत्तम्

तत्र दत्तस्य भेदानाह **नारदः**

पण्यमूल्यं भृतिस्तुष्ट्या स्नेहात्प्रत्युपकारतः ।
स्त्रीशुल्कानुग्रहार्थं च दत्तं दानविदो विदुः ॥

पण्यस्य क्रीतद्रव्यस्य यन्मूल्यं दत्तम् । भृतिर्वेतनम् । तुष्ट्या स्तावकादिभ्यो दत्तम् । स्नेहात् दुहित्रादिभ्यो दत्तम् । प्रत्युपकारतः कृतोपकाराय प्रत्युपकाररूपेण दत्तम् । स्त्रीशुल्कं विवाहार्थं कन्यादातृभ्यो दत्तम् । अनुग्रहार्थं परोपकारः कर्तव्य इत्यादिविधिबलाददृष्टार्थं दत्तम् । एतत्सप्तविधमपि दत्तमेव न प्रत्याहरणीयम् ।

**बृहस्पतिः**

भृतिस्तुष्ट्या पण्यमूल्यं स्त्रीशुल्कमुपकारिणे ।
श्रद्धानुग्रहसम्प्रीत्या दत्तमष्टविधं स्मृतम् ॥

उपकारिविषये क्वचिदपवादमाह **कात्यायनः**

प्राणसंशयमापन्नं यो मामुत्तारयेदितः ।
सर्वस्वं तस्य दास्यामीत्युक्तेऽपि न तथा भवेत् ॥ इति ।

—o—

## अथादत्तम्

तत्र नारदः

अदत्तं तु भयक्रोधशोकवेगरुगन्वितैः ।
तथोत्कोचपरीहासव्यत्यासच्छलयोगतः ॥
बालमूढास्वतन्त्रार्तमत्तोन्मत्तापवर्जितम् ।
कर्ता ममायं कर्मेति प्रतिलाभेच्छया तु यत् ॥
अपात्रे पात्रमित्युक्ते कार्ये चाधर्मसंहिते ।
यद्दत्तं स्यादविज्ञानाददत्तमिति तत्स्मृतम् ॥

भयेन बंदिमल्लादिभ्यो दत्तम् । क्रोधेन एकधनानामपचयं चिकीर्षतेतरेभ्यो दत्तम् । शोकवेगरुजा पुत्रकलत्रादिविरहावेगपीडया किं स्थितेन धनेनेति तात्कालिकबुद्ध्या दत्तम् । उत्कोचेन राजकीयादिकार्यप्रतिबन्धनिरासार्थं दत्तम् । परीहासेन दत्तम् । व्यत्यासेन दानव्यत्यासेन दत्तम् । यथा कश्चिदन्यस्मै ददात्यन्योऽपि तस्मै ददातीति । छलयोगतः प्रमादाभिधानात् । शतदानमभिसंधाय प्रमादाभिधानात् शतदानमभिसंधाय प्रमादात्सहस्रमित्युक्त्वा प्रयच्छति । यद्वा परप्रतारणार्थं जनसमक्षं दत्तम् । बालेनाप्राप्तव्यवहारेण दत्तम् । मूढेन लोकवेदानभिज्ञेन दत्तम् । अस्वतन्त्रेण दासादिना दत्तम् । आर्तेन रोगोपहतेन दत्तम् । मत्तेन मदनीयधत्तूरादिभक्षणमत्तेन दत्तम् । उन्मत्तेनोन्माददोषेण स्खलितधियाऽपवर्जितं दत्तम् । प्रतिलाभेच्छया कर्मकाराय मदीयमयं कर्म कर्तेति प्रतिलाभमकुर्वाणाय दत्तम् । अपात्रे पात्रमित्युक्ते अवेदविदे वेदविदहमित्युक्तवते दत्तम् । कार्ये वा धर्मसंहिते अयागकारिणे यागं करिष्यामीत्युक्तवते दत्तम् । एवं षोडशप्रकारमपि अदत्तं प्रत्याहरणीयमित्यर्थः । अत्रार्तदत्तस्यादत्तता धर्मकार्यार्थदत्तातिरिक्तविषयाऽवगन्तव्या ।

तथा च कात्यायनः

स्वस्थेनार्तेन वा दत्तं श्रावितं धर्मकारणात् ।
अदत्त्वा तु मृते दाप्यस्तत्सुतो नात्र संशयः ॥ इति ।

बृहस्पतिरपि

क्रुद्धहृष्टप्रमत्तार्तबालोन्मत्तभयातुरैः ।
मत्तातिवृद्धनिर्धूतैः संमूढैः शोकरोगिभिः ॥
नर्मदत्तं तथैतैर्यद्दत्तं परिकीर्तितम् ।

अतिवृद्धो गलितेन्द्रियः ।

कात्यायनः

कामक्रोधास्वतन्त्रार्तक्लीबोन्मत्तप्रमोहितैः ।
व्यत्यासात्परिहासाच्च यद्दत्तं तत्पुनर्हरेत् ॥

**बृहस्पतिः**

प्रतिलाभेच्छया दत्तमपात्रे पात्रशङ्कया ।
कार्ये वाऽधर्मसंयुक्ते स्वामी तत्पुनराप्नुयात् ॥

**मनुः**

धर्मार्थं येन दत्तं स्यात्कस्मैचिद्याचते धनम् ।
पश्चाच्च न तथा तत्स्याददेयं तेन तद्भवेत् ॥
यदिदं साधयेत्तत्तु दर्पाल्लोभेन वा पुनः ।
राज्ञा दाप्यः सुवर्णं स्यात्तस्य स्तेयस्य निष्कृतिः ॥

**कात्यायनः**

यदि कार्यप्रसिद्ध्यर्थमुत्कोचः स्यात्प्रतिश्रुतः ।
तस्मिन्नपि प्रसिद्धेऽर्थे न देयः स्यात्कथञ्चन ॥
अथ प्रागेव दत्तः स्यात्प्रतिदाप्यः सतां बलात् ।
दण्डं चैकादशगुणं प्राहुर्गार्गीयमानवाः ॥

उत्कोचस्वरूपमपि स एवाह

स्तेयसाहसिकोद्वृत्तपारदारिकशासनात् ।
दर्शनाद्वृत्तनष्टस्य तथाऽसत्यप्रवर्तनात् ॥
प्राप्तमेतेषु यत्किञ्चित्तदुत्कोचाख्यमुच्यते ।
न दाता तत्र दण्ड्यः स्यान्मध्यस्थस्तत्र दोषभाक् ॥

अयमाशयः—यदि त्वं मह्यमिदमदाता तदा त्वत्कृतं कीर्तयिष्यामीति भीतिमुत्पाद्य स्तेनादिभ्यो यद्धनमादत्ते तथा पलायमानादपि धारकस्य प्रदर्शयिष्यामीति भापनेनादत्ते । तथा सम्यक्कृतमसम्यगिति स्वामिने निवेदयिष्यामीति यद्दासादिभ्यो धनमादत्ते तदुत्कोचाख्यमिति ।

अदत्तग्रहणे अदेयदाने च दण्डमाह **नारदः**

गृह्णात्यदत्तं यो मोहाद्यश्चादेयं प्रयच्छति ।
दण्डनीयावुभावेतौ धर्मज्ञेन महीक्षिता ॥

दण्डोऽत्र विषयानुसारेण द्रष्टव्यः ।

**मनुस्तु** सर्वविवादसमं संक्षिप्तार्थमाह

योगाधमनविक्रीतं योगदानप्रतिग्रहम् ।
यत्र वाप्युपधिं पश्येत्तत्सर्वं विनिवर्तयेत् ॥

योगोऽत्रोपधिः । तेन येनागामिनोपाधिविशेषेणाधिक्रयदानप्रतिग्रहाख्याः कृतास्तदुपाधिविगमे ते सर्वेऽपि निवर्तनीया इत्यर्थः ।

## इति दत्ताप्रदानिकम्

इति श्रीमन्महीमण्डलाखण्डलश्रीनागमल्लमल्लविषमप्रतिज्ञापरिपूरणपरायण-
कलिकालकर्णप्रतापलङ्केश्वरशरणागतराजवज्रपञ्जरपरमवैष्णवरिपुगजसिंहे-
त्यादिनिखिलविरुदराजीविराजमानमानोन्नतमहाराजाधिराजश्रीपृथ्वी
चन्द्रदेवविरचिते धर्मतत्त्वकलानिधौ महानिबन्धे व्यवहार-
प्रकाशे निक्षेपादिनिरूपण नामाष्टम उल्लास ।

—o—

## अथ भृतकविधिः

### तत्राभ्युपेत्याशुश्रूषा

तत्र बृहस्पतिः

अदेयादिकमाख्यातं भृतानामुच्यते विधिः ।
अशुश्रूषाभ्युपेत्यैतत्पदमादौ निगद्यते ॥
वेतनस्यानपाकर्म तदनु स्वामिपालयोः ।
क्रमशः कथ्यते वादो भृतभेदत्रयं त्विदम् ॥

अभ्युपेत्याशुश्रूषास्वरूपं निरूपयति स्म नारदः

अभ्युपेत्य तु शुश्रूषां यस्तां न प्रतिपद्यते ।
अशुश्रूषाऽभ्युपेत्यैतद्विवादपदमुच्यते ॥

अङ्गीकृताया आज्ञासम्पादनरूपायाः पश्चादकरणमभ्युपेत्याशुश्रूषाख्यं विवादपदमुच्यत इत्यर्थः ।

तत्र शुश्रूषकभेदानाह स एव

शुश्रूषकः पञ्चविधः शास्त्रदृष्टो मनीषिभिः ।
चतुर्विधः कर्मकरस्तेषां दासास्त्रिपञ्चकाः ॥

पञ्चविधः शिष्यान्तेवासिभृतकाधिकर्मकृद्दासभेदेन । तत्राद्याश्चत्वारः कर्मकराः । दासास्तु गृहजातादिभेदेन त्रिपञ्चकाः पञ्चकत्रययुक्ताः, पञ्चदशसङ्ख्याका इत्यर्थः ।

अत एव नारदः

शिष्यान्तेवासिभृतकाश्चतुर्थस्त्वधिकर्मकृत् ।
एते कर्मकरा ज्ञेया दासास्तु गृहजादयः ॥
सामान्यमस्वतन्त्रत्वमेषामाहुर्मनीषिणः ।
जातिकर्मकृतस्तूक्तो विशेषो वृत्तितस्तथा ॥ इति ।

शिष्यो वेदविद्यार्थी । अन्तेवासी शिल्पशिक्षार्थी । मूल्ये कर्मकर्ता भृतकः । कर्म कुर्वतामधिष्ठाता अधिकर्मकृत् । गृहजादयो वक्ष्यमाणाः । एवं शिष्यादिकर्मकराणां गृहजादिदासानां च । अस्वतन्त्रत्वं पराधीनत्वम् । सामान्यं साधारणम् ।

भृत इत्यत्र बृहस्पतिः

अनेकधातो विहितो जातिकर्मानुरूपतः ।
विद्याविज्ञानकामार्थनिमित्तेन चतुर्विधः ।
एकैकः पुनरेतेषां क्रियाभेदात्प्रभिद्यते ॥

शिष्यविषये बृहस्पतिः

विद्या त्रयी समाख्याता ऋग्यजुःसामलक्षणा ।
तदर्थं गुरुशुश्रूषां प्रकुर्याच्छास्त्रचोदिताम् ॥

नारदोऽपि

आ विद्याग्रहणाच्छिष्यः शुश्रूषेत्प्रयतो गुरुम् ।
तद्वृत्तिर्गुरुदारेषु गुरुपुत्रे तथैव च ॥ इति ।

तथा

समावृत्तश्च गुरवे प्रदाय गुरुदक्षिणाम् ।
प्रतीयात्स्वगृहानेषा शिष्यवृत्तिरुदाहृता ॥ इति ।

प्रतीयादिति । गृहान्प्रति इयात् गच्छेदित्यर्थः । अत्र पूर्वश्लोकेषु शिष्याणां त्रैवर्णिकानां कर्मकृतो विशेषो दर्शितः । अन्योऽपि भिक्षान्नभोजनादिरूपो ब्रह्मचारिप्रकाशोक्तोऽनुसन्धेयः । अन्तिमश्लोके तु वृत्तिकृतो विशेषो दर्शितः । जातिकृतस्तु 'वसन्ते ब्राह्मणमुपनीयेते'-त्यादिशास्त्रसिद्धोऽध्यवसेयः ।

अन्तेवासिविषये बृहस्पतिः

विज्ञानमुच्यते शिल्पं हेमकुप्यादिसंस्कृतिः ।
नृत्यादिकं च तत्प्राप्तं कुर्यात्कर्म गुरोर्गृहे ॥

कङ्कणकटकादिनिर्माणविषयं नृत्यगीतादिकरणविषयम् । चकाराच्छुभकुम्भादिरचनाविषयं च विज्ञानं शिल्पमुच्यते । तत्प्राप्त्यर्थमन्तेवासी गुरोर्गृहे कङ्कणमुकुटादिकं कुर्यादित्यर्थः । अनेन सुवर्णकारादिजातिकृतकङ्कणमुकुटादिकर्मकृतश्च विशेषोऽन्तेवासिनां दर्शितः ।

नारदः

स्वं शिल्पमिच्छन्नाहर्तुं बान्धवानामनुज्ञया ।
आचार्यस्य वसेदन्ते कालं कृत्वा सुनिश्चितम् ॥

अन्ते समीपे । कालं कृत्वा सुनिश्चितमिति । आचार्येणैतावन्तं कालं मत्समीपे स्थातव्यमित्युक्तं कालं सुनिश्चित्य कृत्वेत्यर्थः । अनेनान्तेवासिनः कर्माभ्यासोपक्रमकाले कर्तव्यमुक्तम् ।

आचार्यकर्तव्यमाह

आचार्यः शिक्षयेदेनं स्वगृहे दत्तभोजनम् ।
न चान्यत्कारयेत्कर्म पुत्रवच्चैनमाचरेत् ॥

अन्यत् शिक्षणीयशिल्पव्यतिरिक्तम् । स्वगृहे दत्तभोजनमित्यनेनान्तेवासिनः शिष्याद्विशेषो दर्शितः ।

**कात्यायनः**

यस्तु न ग्राहयेच्छिल्पं कर्माण्यन्यानि कारयेत् ।
प्राप्नुयात्साहसं पूर्वं तस्माच्छिष्यो निवर्तते ॥

दुष्टो गुरुः वक्ष्यमाणलक्षणं पूर्वं साहसं प्राप्नुयात् ।

शिष्यदौष्ट्ये तु **नारदः**

शिक्षयन्तमदुष्टं च य आचार्यं परित्यजेत् ।
बलाद्वासयितव्यः स्याद्वधबन्धौ च सोऽर्हति ॥

वधोऽत्र ऋजुरज्ज्वादिना ताडनम्, न प्राणवियोजनम्; अपराधस्याल्पत्वात् ।

तथा

शिक्षितोऽपि कृतं कालमन्तेवासी समापयेत् ।
तत्र कर्म च यत्कुर्यादाचार्यस्यैव तत्फलम् ॥ इति ।

शिक्षितोऽपि कृतविद्योऽपि । कृतं स्थित्यवधित्वेन परिभाषितम् । तत्फलं कर्मफलं प्रतिरूपम् । आचार्योऽत्र शिल्पशिक्षकः । कृतशिल्पस्यापि समापनीयकालशेषे भोजनं गुरुगृह एव ।

तथा च **याज्ञवल्क्यः**

कृतशिल्पोऽपि निवसेत् कृतकालं गुरोर्गृहे ।
अन्तेवासी गुरुप्राप्तभोजनस्तत्फलप्रदः ॥

शिल्पशिक्षानन्तरमन्तेवासिनः कृत्यमाह **नारदः**

गृहीतशिल्पः समये कृत्वाचार्यं प्रदक्षिणम् ।
शक्तितश्चानुमन्यैनमन्तेवासी निवर्तते ॥

भृतकविषये **बृहस्पतिः**

यो भुङ्क्ते परदासीं तु स ज्ञेयो वनिताभृतः ।
कर्म तत्स्वामिनः कुर्याद्यथान्योऽर्थभृतो नरः ॥
बहुधाऽर्थभृतः प्रोक्तस्तथा भागभृतोऽपरः ।
हीनमध्योत्तमत्वं च सर्वेषामेव चोदितम् ॥
दिनमासार्धषण्मासत्रिमासर्तुभृतस्तथा ।
कर्म कुर्यात्प्रतिज्ञातं लभते परिभाषितम् ॥ इति ।

अयमभिप्रायः—भृतकानां तु न जातिकृतो वृत्तिकृतो वा विशेषः । किन्तु कर्मार्थरूपभृतिकृतः कालकृतश्च विशेष इति । तत्स्वामिनो दासीस्वामिनः । अर्थभृत्यस्यानेकविधत्वमर्थास्यत्वमहत्त्वतारतम्येन ज्ञेयम् ।

भृतकानामुत्तमादिभेदेन त्रैविध्यकथनपुरःसरं शक्त्यादितारतम्येन भृतिं तल्लक्षणं चाह

**नारदः**

भृतकस्त्रिविधो ज्ञेय उत्तमो मध्यमोऽधमः ।
शक्तिभक्त्यनुरूपा स्यादेषां कर्माश्रया भृतिः ॥
उत्तमस्त्वायुधीयोऽत्र मध्यमस्तु कृषीवलः ।
अधमो भारवाहः स्यादित्येष त्रिविधो भृतः ॥

आयुधीयः आयुधजीवी । खड्गफलकादिहस्तस्य च स्वामिरक्षणं प्रयोजनम् ।

**बृहस्पतिः**

आयुधी चोत्तमस्तेषां मध्यमः सीरवाहकः ।
भारवाहोऽधमः प्रोक्तस्तथैव गृहकर्मकृत् ॥

गृहकर्म गृहव्यापारः ।

भागभृतविषये विशेषमाह **स एव**

द्विप्रकारो भागभृतः कृषिगोजीविनां स्मृतः ।
जातसस्यात्तथा क्षीरात्स लभेत न संशयः ॥

अधिकर्मकृद्विषये **नारदः**

अर्थेष्वधिकृतो यः स्यात्कुटुम्बस्य तथोपरि ।
सोऽधिकर्मकरो ज्ञेयः स च कौटुम्बिकः स्मृतः ॥ इति ।

अर्थेषु गृहक्षेत्रहिरण्यादिषु । अधिकृतः अवेक्षकत्वेन नियुक्तः । कुटुम्बस्येति अधिकृत इत्यनुषङ्गः । तत्राधिकृतत्वमायव्ययकर्तृत्वेन गृहस्वामिना नियुक्तत्वम् ।

शिष्यादीनामधिकर्मकृदन्ताना शुभकर्मकारितामाह **स एव**

**शुभकर्मकरा** ह्येते चत्वारः समुदाहृताः । इति ।

दासानां त्वशुभकर्मकारित्वम् ।

तथा च **स एव**

जघन्यकर्मभाजस्तु शेषा दासास्त्रिपञ्चकाः । इति ।

शुभाशुभकर्मणी च **तेनैव** दर्शिते

कर्मापि द्विविधं प्रोक्तमशुभं शुभमेव च ।
अशुभं दासकर्मोक्तं शुभं कर्मकृतः स्मृतम् ॥
गृहद्वाराशुचिस्थानरथ्यावस्करशोधनम् ।
गुह्याङ्गस्पर्शनोच्छिष्टविण्मूत्रग्रहणोज्झनम् ॥
इच्छतः स्वामिनः स्वाङ्गैरुपस्थानमथान्ततः ।
अशुभं कर्म विज्ञेयं शुभमन्यदतः परम् ॥ इति ।

अशुचिस्थानमुच्छिष्टप्रक्षेपार्थं गर्तादिकम् । अवस्करः गृहमार्जितपांस्वादिनिचयस्थानम् । तेषां शोधनं उज्झनं त्यागः । अन्ततः मूत्रपुरीषविरामे । स्वाङ्गे रुपस्थानं लेपनिर्माजनार्थं स्वामीच्छया हस्ताघर्षणम् ।

'शेषा दासास्त्रिपञ्चकाः' इत्यनेन यत्पञ्चदशत्वं प्रतिज्ञातं तदाह **नारदः**

गृहजातस्तथा क्रीतो लब्धो दायादुपागतः ।
अनाकालभृतस्तद्वदाहितः स्वामिना च यः ॥
मोक्षितो महतश्चर्णाद्युद्धे प्राप्तः पणे जितः ।
तवाहमित्युपगतः प्रव्रज्यावसितः कृतः ॥
भक्तदासश्च विज्ञेयस्तथैव वडवाहृतः ।
विक्रेता चात्मनः शास्त्रे दासाः पञ्चदश स्मृताः ॥ इति ।

गृहजातः स्वगृहदास्यां जातः । क्रीतः मूल्येन स्वाम्यन्तरात् प्राप्तः । लब्धः स्वाम्यन्तरात्प्रतिग्रहादिना प्राप्तः । दायादुपागतः विभागसमये स्वांशतया प्राप्तः । अनाकालभृतः अनाकाले दुर्भिक्षे दासत्वाय भृतः पोषितः । मोक्षित इति । ऋणमोचनेनाभ्युपगतदासत्वः, ऋणदास इत्यर्थः । युद्धप्राप्तः संगरे विजित्य गृहीतः । पणे जितः दासत्वपणके द्यूतादौ जितः । तवाहमित्युपगतः तवाहं दास इति स्वयमेव सम्प्रतिपन्नः । प्रव्रज्यावसितः संन्यासात्प्रच्युतः । कृतः एतावन्तं कालत्वं दास इत्यभ्युपगमितः । भक्तदासः सर्वकालं भक्तार्थमेव दासत्वमभ्युपगम्य यः प्रविष्टः । वडवाहृतः दासीसम्बन्धाद्दास्यं प्राप्तः । विक्रेता चात्मन इति । यथास्वातं विक्रीणीते असावात्मविक्रेतेति ।

**मनुः**

ध्वजाहृतो भक्तदासो गृहजः क्रीतदत्रिमौ ।
पैतृको दण्डदासश्च सप्तैते दासयोनयः ॥

ध्वजाहृतो युद्धजित इति कश्चित् । ध्वजं लिङ्गं तेनाहृतो वडवाहृतापरनामा । दासीसम्बन्धाद्दास्यं प्राप्त इत्यपरे । दत्रिमो दत्तः येनकेनचित् । दण्डदासः दण्डस्य देयस्य शोधनार्थं दास्यं गतः । अथवा प्रव्रज्यावसितो राज्ञो दास आमरणान्तिक इत्येवंरूपः । स हि दण्डार्थं दास्या दण्डदास इत्युच्यते । दासयोनयो दासजातयः । एतच्च **मनु**वचनमेतेषां दासत्वप्रतिपादनपरम् ।

अत्र 'गृहजातस्तथा क्रीतो लब्धो दायादुपागतः' इत्युक्तानां चतुर्णां स्वामिप्रसादव्यतिरेकेण न दासत्वापगम इत्याह **नारदः**

तत्र पूर्वश्चतुर्वर्गो दासत्वान्न विमुच्यते ।
प्रसादात्स्वामिनोऽन्यत्र दास्यमेषां क्रमागतम् ॥

तथैवात्मविक्रेतुरपीत्याह स एव

विक्रीणीतेऽस्वतन्त्रः सन् यश्चात्मानं नराधमः ।
स जघन्यतमस्तेषां सोऽपि दास्यान्न मुच्यते ॥

अत्र प्रसादात्स्वामिनोऽन्यत्रेति सम्बध्यते । एवं चायमर्थः संपद्यते—आत्मविक्रेताऽपि गृहजातादिवत्स्वामिप्रसादाद्विना दास्यान्न मुच्यत इति ।

अत एव **मार्कण्डेयपुराणे** चाण्डालदासतां गतस्य पुत्रशोकार्तस्य हरिश्चन्द्रस्य वाक्यम्

चाण्डालेनाभ्यनुज्ञातः प्रवेक्ष्ये ज्वलनं यदि ।
चाण्डालदासतां प्राप्स्ये पुनरन्यत्र जन्मनि ॥ इति ।

अत्र विशेषमाह **मनुः**

न स्वामिना निसृष्टोऽपि शूद्रो दास्यात्प्रमुच्यते ।
निसर्गजं हि तत्तस्य कस्तस्मात्तं व्यपोहति ॥

निसृष्टः दासत्वान्मोचितः । दास्याद्दासकर्मकरणात् न मुक्तो भवतीत्यर्थः ।

**नारदः**

यश्चैषां स्वामिनं कश्चिन्मोचयेत्प्राणसंशयात् ।
दासत्वात्स विमुच्येत पुत्रभागं लभेत च ॥

एषां पञ्चानां दासानां मध्य इत्यर्थः । एतच्च प्रव्रज्यावसितेतरेषु दासेषु द्रष्टव्यम् । तस्य दासत्वनिवृत्तेरसम्भवात् ।

अत एव **याज्ञवल्क्यः**

प्रव्रज्यावसितो राज्ञो दास आमरणान्तिकम् । इति ।

**नारदोऽपि**

राज्ञ एव तु दासः स्यात्प्रव्रज्यावसितो नरः ।
न तस्य प्रतिमोक्षोऽस्ति न विशुद्धिः कथञ्चन ॥ इति ।

स च विप्रव्यतिरिक्तोऽभिमतः । विप्रस्य हि निर्वासनं, न दासत्वम् ।

तथा च **कात्यायनः**

प्रव्रज्यावसिता यत्र त्रयो वर्णा द्विजातयः ।
निर्वासं कारयेद्विप्रं दासत्वं क्षत्रविण्नृपः ॥

क्षत्रविडिति द्वन्द्वैकत्वम् ।

निर्वासने विशेषमाह **नारदः**

पारिव्राज्यं गृहीत्वा तु यः स्वधर्मे न तिष्ठति ।
श्वपदेनाङ्कयित्वा तं राजा शीघ्रं प्रवासयेत् ॥

श्वपदेन श्वपदसदृशतप्तायसेन क्षत्रियवैश्ययोरपि । राजदास्यमकुर्वतोरुक्तविधिना निर्वासनं कार्यम्; 'यः स्वधर्मे न तिष्ठती'ति सामान्येनाभिधानात् ।

तथा

द्वावेव कर्मचाण्डालौ लोके दूरबहिष्कृतौ ।
प्रव्रज्योपनिवृत्तश्च वृथा प्रव्रजितश्च यः ॥ इति ।

एवं च प्रव्रज्यावसितव्यतिरिक्तानां स्वामिनः प्रसादेन प्राणरक्षणेन वा साधारणकारणेनैव दासत्वापगमो भवति, न प्रातिस्विकेन, तदनुपदेशात् । प्रव्रज्यावसितस्य तु साधारणादसाधारणाद्वा कारणान्नान्तरा मोक्षः, किन्तु मरणपर्यन्तं राजदासत्वमेव सिद्धम् ।

अनाकालभृतादीनां वडवाहृतान्तानां नवानां प्रातिस्विकमपि दासत्वविमोचकमुपायमाह **नारद** एव

अनाकालभृतो दास्यान्मुच्यते गोयुगं ददन् ।
भक्षितं चापि यद्दुर्गे ददच्छुद्ध्यति कर्मणा ॥
आहितोऽपि धनं दत्त्वा स्वामी यथेनमुद्धरेत् ।
अथोपगमयेदेनं सोऽपि क्रीतादनन्तरः ॥
ऋणं तु सोदयं दत्त्वा ऋणी दास्यात्प्रमुच्यते ।
तवाहमित्युपगतो युद्धे प्राप्तः पणे जितः ॥
प्रतिशीर्षप्रदानेन मुच्यते तुल्यकर्मणा ।
कृतकालव्यपगमात् कृतकोऽपि विमुच्यते ॥
भक्तस्योत्क्षेपणात्सद्यो भक्तदासः प्रमुच्यते ।
निग्रहाद्वडवायास्तु मुच्यते वडवाहृतः ॥ इति ।

अनाकालेति । दुर्गे दुर्भिक्षे यद्भक्षितं तद्गोयुगं च ददन् दत्त्वा मुच्यत इत्यर्थः । आहितेति । आहितदासस्तु गृहीतधनस्य प्रत्यर्पणे कृते सत्युत्तमर्णदास्यान्मुच्यत इत्यर्थः । उपगमयेदित्यादि । यस्मिन्नाहितो दासस्तेनैव यदि ग्राहयेत्, तदा तस्यैवासौ क्रीतादनन्तरः क्रीततुल्य इत्यर्थः । क्रीतादनन्तरो लब्ध इति **हलायुधः** । 'गृहजातस्तथा क्रीतो लब्धो दायादुपागतः' इति दासभेदगणनायां क्रीतानन्तरमेव तस्य निर्देशात् । बन्धकीकृतं यद्युपगमयेदुन्मोचयेत्तदा मोचयितुः क्रीततुल्यो दास इति कश्चित् । सोदयं सवृद्धिकम् । तवाहमित्याद्युक्तं दासत्रयं स्वनिर्वर्त्यनिर्वाहकदासान्तरप्रदानेन दासत्वान्मुच्यत इत्यर्थः । कृतकालव्यपगमः अवधिकृतकालातिक्रमः । उत्क्षेपणं दासाभावात् प्रभृति स्वामिद्रव्यं यावदुपभुक्तं तावतः प्रत्यर्पणम् । निग्रहः स्वामिकृतो दाससम्भोगनिरोधः ।

दासाभासानां दासनिवृत्तिमाह **याज्ञवल्क्यः**

बलाद्दासीकृतश्चौरैर्विक्रीतश्चापि मुच्यते । इति ।

बलात् बलावष्टम्भेन यो दासीकृतः यश्च चौरैरपहृत्य विक्रीतः अपिशब्दात्तैरेवाहितो

दत्तश्च ते सर्वे दास्यान्मुच्यन्ते, प्रागुक्तसाधारणासाधारणदासत्वमोचकहेतुव्यतिरेकेणापीत्यर्थः। यदि लोभादिवशात्स्वामी न मुञ्चति तदा राज्ञा मोचयितव्यः।

अत एव नारदः

चौरापहृतविक्रीता ये च दासीकृता बलात्।
राज्ञा मोचयितव्यास्ते दासत्वं तेषु नेष्यते॥

अन्यदास एव सन् यः स्वात्मानं दासत्वेनान्यस्मै समर्पयति तवाहं दास इति, सोऽपि तेन मोक्तव्य इति भङ्ग्यन्तरेणाह स एव

तवाहमिति चात्मानं योऽस्वतन्त्रः प्रयच्छति।
न स तं प्राप्नुयात्कामं पूर्वस्वामी लभेत तम्॥

य एते दासत्वस्य तद्विमोचकस्य च हेतवो दर्शिताः ते स्त्रीपुंससाधारणाः।

दासीविषये विशेषमाह कात्यायनः

स्वां दासीं यस्तु सञ्जच्छेत्प्रसूता च ततो भवेत्।
अवेक्ष्य बीजं कार्या स्याददासी सान्वया तु सा॥

अयमर्थः—स्वकृतगर्भस्यादासत्वाय सन्तानसहिता दासी अदासीत्वेन कार्या।

दासत्वविमोचकविधिमाह नारदः

स्वं दासमिच्छेद्यः कर्तुमदासं प्रीतमानसः।
स्कन्धादादाय तस्यासौ भिन्द्यात्कुम्भं सहाम्भसा॥
साक्ष(?)ताभिः सपुष्पाभिर्मूर्धन्यद्भिरवाकिरन्।
अदास इति चोक्त्वा त्रिः प्राङ्मुखं तमथोत्सृजेत्॥
ततः प्रभृति वक्तव्यः स्वाम्यनुग्रहपालितः।
भोज्यान्नोऽथ प्रतिग्राह्यो भवत्यभिमतः सताम्॥

दासमिति। लिङ्गवचने अविवक्षिते ब्राह्मणो न हन्तव्य इत्यादिवदुद्देश्यविशेषणत्वात्। तेन दास्या अदासीत्वकरणेऽपि समानोऽयं विधिरित्यवगन्तव्यम्।

मनुः

भार्या पुत्रश्च दासश्च त्रय एवाधनाः स्मृताः।
यत्ते समधिगच्छन्ति यस्य ते तस्य तद्धनम्॥

अधिगच्छन्ति परकर्मकरणादिनापि प्राप्नुवन्ति।

देवलः

पितर्युपरते पुत्रा विभजेरन्पितुर्धनम्।
अस्वाम्यं हि भवेत्तेषां निर्दोषे पितरि स्थिते॥
पत्यौ जीवति नारीणां दासानां स्वामिनि स्थिते।
तदा न नियतं स्वाम्यं सर्वार्थेष्वब्रवीन्मनुः॥

मनुः

विश्रब्धं ब्राह्मणः शूद्राद् द्रव्योपादानमाचरेत् ।
नहि तस्यास्ति किञ्चित्स्वं भर्तृहार्यधनो हि सः ॥

विश्रब्धं निःशङ्कं द्रव्योपादानमाचरेत्, न पुनः शूद्रधनबुद्ध्याऽवधीरयेदित्यर्थः ।

कात्यायनः

दासस्य तु धनं यत्स्यात्स्वामी तस्य प्रभुः स्मृतः ।
प्रसादाद्विक्रयाद्यत्तु न स्वामी धनमर्हति ॥
दासेनोढाऽप्यदासी या सापि दासत्वमाप्नुयात् ।
यस्माद्भर्ता प्रभुस्तस्याः स्वाम्यधीनः पतिर्यतः ॥

दासस्येत्यलिङ्गमेव विवक्षितम् । तेन दास्या अपि धनं स्वामिन एव । प्रसादेति । स्वामिप्रसादादात्मविक्रयाच यल्लब्धं तत्स्वामी नार्हतीत्यर्थः ।

तत्र दासशब्दार्थमाह कात्यायनः

स्वतन्त्रस्यात्मनो दानाद्दासत्वं दारवद्भृगुः ।

दानं परस्वत्वापादनम् । दारवदिति । यथा भर्त्रे सम्भोगशेषतया स्वशरीरदानात् स्त्रिया दारत्वं तद्वदित्यर्थः । भृगुर्मन्यत इति शेषः ।

तथा

त्रिषु वर्णेषु विज्ञेयं दास्यं विप्रस्य न क्वचित् ।
वर्णानामानुलोम्येन दास्यं न प्रतिलोमतः ।
राजन्यवैश्यशूद्राणां त्यजतां हि स्वतन्त्रताम् ॥ इति ।

वर्णानामानुलोम्येनेति । ब्राह्मणस्य क्षत्रियादयः, क्षत्रियस्य वैश्यशूद्रौ, वैश्यस्य शूद्र इत्येवंरूपेण वर्णानां दास्यमित्यर्थः । स्वतन्त्रता त्यजतां परतन्त्रतां भजताम् । एतच आनुलोम्येनैव दासत्वं प्रव्रज्यावसितव्यतिरिक्तविषयम् । प्रव्रज्यावसितस्य पुनः प्रातिलोम्येनापि दासत्वं भवत्येव ।

तथा च नारदः

वर्णानां प्रातिलोम्येन दासत्वं न विधीयते ।
स्वधर्मत्यागिनोऽन्यत्र दारवद्दासता मता ॥ इति ।

यथाऽऽनुलोम्येन दारत्वं न प्रातिलोम्येन तद्वदित्यर्थः ।

कात्यायनः

समवर्णेऽपि विप्रं तु दासत्वं नैव कारयेत् ।
शीलाध्ययनसम्पन्ने तदूनं कर्म कामतः ॥
तत्रापि नाशुभं किञ्चित्प्रकुर्वीत द्विजोत्तमः ।
ब्राह्मणस्य हि दासत्वान्नृपतेजो विहन्यते ॥

क्षत्रविट्शूद्रधर्मस्तु समवर्णे कदाचन ।
कारयेद्दासकर्माणि ब्राह्मणे न बृहस्पतिः ॥ इति ।

अत्र 'दारयद्दासते'ति वचनाद्ब्राह्मण कामतस्तदिच्छया कर्म कारयेदिति शीलाध्ययनेत्यादेरर्थः । तत्रापीति । अशुभं विण्मूत्रशोधनादि ब्राह्मणः कदापि न कुर्यादित्यर्थः । प्रातिलोम्येन दासत्वे कारिते कारयतस्तेजोहानिर्भवतीति ब्राह्मणस्य हि दासत्वादित्यादेरर्थः । क्षत्रविट्शूद्रधर्म इत्यादि । क्षत्रादि ब्राह्मणे ब्राह्मण दासकर्माणि न कारयेदित्यर्थः । बृहस्पतिर्मन्यत इत्यर्थः ।

**मनुः**

क्षत्रियं चैव वैश्यं च ब्राह्मणो वृत्तिकर्शितौ ।
बिभृयादानृशंस्येन स्वानि कर्माणि कारयेत् ॥

वृत्तिकर्शिताविति पद क्षत्रियवैश्ययोर्दासत्वाङ्गीकरणमापत्तिरिति सूचयति । स्वानि कर्माणि शस्त्रधारणकृष्यादीनि । यस्तु प्रभुत्वमाश्रित्य क्षत्रियवैश्याभ्या दास्य कारयति, तस्य दण्डमाह स एव

दास्यं तु कारयेन्मोहाद्ब्राह्मणः संस्कृतान् द्विजान् ।
अनिच्छतः प्राभवित्वाद्राज्ञा दाप्यः शतानि षट् ॥

प्रभावित्वात् प्रभुत्वात् ।
शूद्रं तु यथाकथचिदपि दास्य कारयेदित्याह स एव

शूद्रं तु कारयेद्दास्यं क्रीतमक्रीतमेव वा ।
दास्यायैव हि सृष्टोऽसौ स्वयमेव स्वयम्भुवा ॥ इति ।

**विष्णुः**

यस्तूत्तमवर्णं दास्ये नियोजयेत् तस्योत्तमसाहस्रो दण्डः । इति ।

**कात्यायनः**

आदद्याद् ब्राह्मणीं यस्तु विक्रीणीयात्तथैव च ।
राज्ञा तदकृतं कार्यं दण्ड्याः स्युः सर्व एव ते ॥
कामात्तु संश्रितां यस्तु दासीं कुर्यात्कुलस्त्रियम् ।
संक्रामयति चान्यत्र दण्ड्यस्तच्चाकृतं भवेत् ॥
बालां धात्रीमदासीं च दासीमिव भुनक्ति यः ।
परिचारकपत्नीं च प्राप्नुयात्पूर्वसाहसम् ॥
विक्रोशमानां यो भर्ता दासीं विक्रेतुमिच्छति ।
अनापदिस्थः शक्तः सन् प्राप्नुयाद्द्विशतं दमम् ॥

इत्यभ्युपेत्याशुश्रूषाख्यविवादपदम्

---

## अथ वेतनस्यानपाकर्म

तत्र नारदः

भृतानां वेतनस्योक्तो दानादानविधिक्रमः ।
वेतनस्यानपाकर्म तद्विवादपदं स्मृतम् ॥
भृताय वेतनं दद्यात्कर्मस्वामी यथाक्रमम् ।
आदौ मध्येऽवसाने वा कर्मणो यद्विनिश्चितम् ॥
भृतावनिश्चितायां तु दशभागमवाप्नुयुः ।
लाभगोवीर्यसस्यानां वणिग्गोपकृषीवलाः ॥

भृतानामिति । यस्मिन्विवादपदे भृतानां वेतनस्य दानादानविधिक्रमो निरूपितः, तद्विवादपदं वेतनस्यानपाकर्मेत्युच्यत इत्यर्थः । भृतायेति । तुभ्यमिदं दास्यामीति यद्वेतनं परिमाणतो विनिश्चितं तत् त्रिधा विभज्य कर्मण आदिमध्यान्तेषु दद्यादित्यर्थः । एतच्च आदिमध्यावसानेषु विभज्य दानमादावेव मध्य एवावसान एवेत्येवंविधसमयबन्धाभावे वेदितव्यम् । भृतावित्यादि । गोवीर्यं गवां सारभूतं क्षीरमित्यर्थः । अपरिमापितवेतना वणिग्गोपकृषीवलाः । धनादिस्वामिभ्यो लाभक्षीरसस्येभ्यो दशमं भागं वेतनत्वेन लभेरन्नित्यर्थः । एवंविधां भृतिना(ऽम)ददानस्तु धनादिस्वामी राज्ञा दापनीयः ।

तथा च याज्ञवल्क्यः

दाप्यस्तु दशमं भागं वाणिज्यपशुसस्यतः ।
अनिश्चित्य भृतिं यस्तु कारयेत्स महीक्षिता ॥

इदं च दशमभागरूपा भृतिः अल्पायाससाध्ये क्षेत्रकर्षणादौ ।

बहुप्रयाससाध्ये तु बृहस्पतिः

त्रिभागं पञ्चभागं वा गृह्णीयात् क्षीरवाहकः ।
भक्ताच्छादभृतः क्षीराद्भागं गृह्णीत पञ्चमम् ।
आवसस्यास्त्रिभागं तु गृह्णीयादुपधाभृतः ॥

अत्र त्रिभागं पञ्चभागं वेति विकल्पो व्यवस्थया । सा च व्यवस्था भक्ताच्छादेत्यादिना प्रतिपाद्यते । भक्ताच्छादभृतः अशनाच्छादनाभ्यां पोषितः । उपधाभृतः उपधा उपधिः यद्प्रीतस्त्वत्ते तत्र ते तृतीयभाग इति, न वस्त्रादि किञ्चिद्दीयत इत्येवं कृतसमय उच्यते । तस्य त्रिभागः । भक्तादिदाने तु पञ्चम इति ।

आपस्तम्बः

उद्गसतः क्षीनाशस्य कर्मनाशे दण्डताडनम् ।
तथा पशुपस्य, अवरोधनं चास्य पशूनाम् ॥

उद्वसत' पलायमानस्य कीनाशस्य कर्षकस्य। 'कीनाश कर्षके क्षुद्रे कृतान्ते पशुघातिनि' इत्यभिधानात्। दण्डताडने। तथा गोपालस्य पशूनामवरोधनमधिकमिति।

यत्रेद दास्यामीति वेतनपरिभाषाभाव तत्र वृद्धमनुः

समुद्रयानकुशला देशकालार्थदर्शिनः।
नियच्छेयुर्भृर्ति या तु सा स्यात् प्रागकृता यदि ॥

परिभाषितविषयेऽपि क्वचित्स्वामीच्छया स्वल्प देय क्वचिदधिक देयमित्याह याज्ञवल्क्यः

देशं काल च योऽतीयाल्लाभं कुर्याच्च योऽन्यथा।
तत्र स्यात्स्वामिनश्छन्दोऽधिकं देयं कृतेऽधिके ॥

यस्तु भृत्य पण्यविक्रयाद्युचित देश काल च पण्यविक्रयादि कर्म कुर्वन् दर्पाद्विनाऽतिक्रामेत्तत्रैव वा देशे काले च बहुतरद्रव्यव्ययेन लाभं हीन करोति तत्र स्वामी स्वेच्छया भृतिं दद्यात् नतु सर्वा, यदा पुनर्देशकालपरिज्ञानेनाधिक लाभ करोति तदा पूर्वपरिच्छिन्नभृत्यपेक्षया अधिकमपि धन धनस्वामिना भृत्याय देयम्।

अनेकभृतकसम्पादनीये कर्मणि भृतिदानप्रकारमाह स एव

यो यावत्कुरुते कर्म तावत्तस्य तु वेतनम्।
उभयोरप्यसाध्यं चेत्साध्ये कुर्याद्यथाश्रुतम् ॥

अयमर्थ —यदा त्वेकमेव कर्म नियतवेतनमुभाभ्या बहुभिर्वाऽऽरब्ध विघ्नवशाच्च न समापित तदा यो भृतको यावत्कर्म करोति तस्मै तत्कृतकर्मानुसारेण मध्यस्थपरिकल्पित वेतन दातव्य, न तु समम्। साध्ये तु निर्वर्तिते सति यथाश्रुत यावत्परिभाषित तावदुभाभ्या बहुभ्यो वा देय, न पुन प्रत्येक कृत्स्न वेतनम्। न वा कर्मानुसारेण परिकल्प्य देयम्।

भृत्यविषये नारदः

कर्मोपकरण चैषा क्रिया प्रति यदाहितम्।
आप्तभावेन तद्रक्ष्य न जैह्म्येन कदाचन ॥

एषा कर्मस्वामिना कर्मोपकरण सीरयुगयोक्त्रादिकम्। क्रिया प्रति कृष्यादिक्रियामुद्दिश्य यद्भृतकपार्श्वे आहित स्थापित तत्तेन अशाठ्येन सर्वदा रक्षणीयम्।

बृहस्पतिः

भृतकस्तु न कुर्वीत स्वामिन' शाठ्यमण्वपि।
भृतिहानिमवाप्नोति ततो वादः प्रवर्तते ॥

तत' शाठ्यकरणात्। वाद स्वामिना सह भृतकस्य तत्र पराजितो भृतक शाठ्यानुरूपा भृतिहानिं लभत इत्यर्थ । कर्माकरणे विशेषमाह स एव

गृहीतवेतनः कर्म न करोति यदा भृतः।
समर्थश्चेद्दमं दाप्यो द्विगुण तच्च वेतनम् ॥

गृहीतं वेतनं येनासौ स्वांगीकृतं कर्म यदि न करोति तर्हि गृहीतं वेतनं द्विगुणीकृत्य स्वामिने दद्यात्। शक्त्यपराधानुसारेण राज्ञे च दण्डमित्यर्थः।

वेतनाग्रहणे तु **याज्ञवल्क्यः**

अगृहीते समं दाप्यो भृत्यै रक्ष्य उपस्करः। इति।

समं परिभाषितवेतनतुल्यम्। उपस्करो लाङ्गलादीनां प्रग्रहयोक्त्रादिकं यथाशक्ति रक्षणीयः। अन्यथा कृषिभङ्गप्रसङ्गादित्यर्थः।

**नारदः**

कर्माकुर्वन् प्रतिश्रुत्य कार्यो दत्त्वा भृतिं बलात्। इति।

एवं च गृहीतवेतनस्य प्रतिश्रुतकर्माकरणे स्वामिना परिपणितवेतनसमं धनं ग्राह्यम्। भृतिं दत्त्वा बलात्कर्म वा कारणीयमिति **नारद-याज्ञवल्क्य**वचनार्थः।

प्रारब्धकर्मापरिसमापने **कात्यायनः**

कर्मारम्भं तु यः कृत्वा सिद्धिं नैव तु कारयेत्।
बलात्कारयितव्योऽसावकुर्वन् दण्डमर्हति॥

दण्डोऽत्र द्विशतकार्षापणपरिमितो विज्ञेयः।

अत एव **वृद्धमनुः**

प्रतिश्रुतं न कुर्याद्यः स कार्यः स्याद्बलादपि।
स चेन्न कुर्यात्तत्कर्म प्राप्नुयाद्द्विशतं दमम्॥ इति।

**मनुः**

भृतो नार्तो न कुर्याद्यो दर्पात्कर्म यथोदितम्।
स दण्ड्यः कृष्णलान्यष्टौ न देयं चास्य वेतनम्॥

भृतः सन्नार्तः पीडारहितोऽपि यः कर्म न करोति तस्य वेतनं न देयम्। 'न देय'मिति वचनात्प्राग्दत्तमप्यादेयमित्यर्थः। अयं च दण्डोऽल्पस्याद्भागासमापने बोद्धव्यः। यस्त्वनपगतव्याधिः स्वस्थ एव वा आलस्यादिना स्वारब्धं कर्म न करोति अन्येन वा न कारयति तस्मै अल्पावशिष्टस्यापि कर्मणो भृतिर्न दातव्या। तदाह स एव

यथोक्तमार्तः स्वस्थो वा यस्तत्कर्म न कारयेत्।
न तस्य वेतनं देयमल्पोनस्यापि कर्मणः॥ इति।

अत्र स्वस्थो वा न कारयेदित्यभिधानात्स्वास्थ्येऽपि स्वयंकरणनियमो नास्तीति द्योत्यते। यस्तु व्याधेरपगमेऽपि अन्तरितदिनानि गणयित्वा पूरयति स लभत एव भृतिम्।

तथा स एव

आर्तस्तु कुर्यात्स्वस्थः सन् यथाभाषितमादितः।
सुदीर्घस्यापि कालस्य स लभेतैव वेतनम्॥

यः पुनः कालविशेषावधिकं कर्म प्रतिज्ञाय प्रतिज्ञातकालापूर्तावेर्व कर्म त्यजति यश्च स्वामिदोषादपक्रामति तदुभयविषये **नारदः**

कालेऽपूर्णे त्यजन् कर्म भृतिनाशमवाप्नुयात् ।
स्वामिदोषादपक्रामन्यावत्कृतमवाप्नुयात् ॥ इति ।

स्वदोषेणापक्रामतस्तु विशेषमाह **विष्णुः**

पणशतं च राज्ञे दद्यात् । इति ।

पुनः **स** एव

तद्दोषेण यद्विनश्येत् तत्स्वामिने देयमन्यत्र दैवराजोपघातात् । इति ।

नष्टस्य यन्मूल्यं तद्दातव्यमित्यर्थः ।

**नारदः**

भाण्डं व्यसनमागच्छेद्यदि वाहकदोषतः ।
दाप्यो यत्तत्र नष्टं स्याद्दैवराजकृताद्दते ॥

वाहकदोषः प्रमादालस्यादिः । तेन यदा भाण्डं गोण्यादिनिहितं क्रमुकादिकं व्यसनमागच्छेन्नाशं प्राप्नुयात्तदा वाहकस्तद्दाप्य इत्यर्थः ।

**वृद्धमनुः**

प्रमादान्नाशितं दाप्यः समं द्विर्द्रोहनाशितम् ।
न तु दाप्यो हृतं चौरैर्दग्धमूढं जलेन वा ॥ इति ।

प्रमादोऽनवधानता । तत्र यावन्नाशितं तत्समं दद्यात् । द्रोहेण तीव्रप्रहारादिना नाशितं तु द्विः द्विगुणं दद्यात् । जलेनोढं वेगवशान्तरं प्रापितम् ।

**कात्यायनः**

विघ्नकृद्वाहको दाप्यः प्रस्थाने द्विगुणां भृतिम् । इति ।

वाहक इत्यायुधीयादेरुपलक्षणम् ।

अत एव **याज्ञवल्क्यः**

अराजदैविकं नष्टं भाण्डं दाप्यस्तु वाहकः ।
प्रस्थानविघ्नकृच्चैव प्रदाप्यो द्विगुणां भृतिम् ॥

प्रस्थानेति । विवाहादिकर्मणि सुमुहूर्ते प्रतिष्ठमानस्य प्रस्थानानुकूलं भारवाहनादिकमङ्गीकृत्य तदानीं न करिष्यामीति प्रस्थानविघ्नमाचरतो द्विगुणा भृतिः स्वामिने दातव्येत्यर्थः ।

**नारदो**ऽपि

द्विगुणां तु भृतिं दाप्यः प्रस्थाने विघ्नमाचरन् । इति ।

वृद्धमनुः

कर्मकाले तु संप्राप्ते न कुर्याद्विघ्नमाचरेत् ।
तद्भृत्यान्यस्तु कार्यः स्यात्स दाप्यो द्विगुणां भृतिम् ॥

याज्ञवल्क्यः

प्रक्रान्ते सप्तमं भागं चतुर्थं पथि सन्त्यजन् ।
भृतिमर्धपथे सर्वां प्रदाप्यस्त्याजकोऽपि वा ॥ इति ।

प्रक्रान्ते निश्चिते प्रस्थाने स्वाङ्गीकृतं कर्म त्यजन् भृत्यो भृतेः सप्तभागं पथि त्यजन् चतुर्थं भागं दाप्यः । अर्धपथे तु सर्वां भृतिमित्यर्थः । एतच्च प्रस्थानाध्यवसाये प्रस्थानविघ्नमाचरतः भृतिसप्तमभागदापनं सेवकान्तरसम्पादनसमयस्य सम्भवे, असम्भवे तु कात्यायनाद्युक्त-द्विगुणभृतिदापनमिति न कश्चिद्विरोधः ।

विद्याद्यर्थं गृहीतवेतनस्य तददाने दण्डो मत्स्यपुराणे

मूल्यमादाय यो विद्यां शिल्पं वा न प्रयच्छति ।
दण्ड्यः स मूल्यं सकलं धर्मज्ञेन महीक्षिता ॥
प्रभुणा विनियुक्तः सन् भृतको विदधाति यत् ।
तदर्थमशुभं कर्म स्वामी तत्र पराप्नुयात् ॥

तदर्थं स्वाम्यर्थम् । अशुभं चौर्यादि ।

वृद्धमनुः

पथि विक्रीय तद्भाण्डं वणिग्भृत्यं त्यजेद्यदि ।
आगतस्यापि देयं स्याद्भृतेरर्धं लभेत सः ॥

शौल्किकादिना भाण्डावरोधनादौ कात्यायनः

यदा च पथि तद्भाण्डमासिध्येत ह्रियेत वा ।
यावानध्यागतस्तेन प्राप्नुयात्तावतो भृतिम् ॥ इति ।

आसिध्येतावरुध्येत ।

नारदः

भृतिपद्भागमाभाष्य पथि युग्यभृतं त्यजन् ।
अदत्त्कारयित्वा तु सोदयां भृतिमावहेत् ॥

भृतिपद्भागमित्यादि । यो भृतकः आभाष्य गच्छामीति सम्प्रतिपद्य गमनोपक्रमे पथि स्थितं प्रभुमादि त्यजति असावुक्तभृतेः पद्भागं दाप्यः । स्वामी चेत्कर्म कारयित्वा भृतिं न प्रयच्छति तदा सवृद्धिकं वेतनं दाप्य इत्यर्थः ।

बृहस्पतिः

कृते कर्मणि यः स्वामी न दद्याद्वेतनं भृते ।
राज्ञा दापयितव्यः स्याद्विनयं चानुरूपतः ॥

भृते भृत्ये ।

**विष्णुः**

स्वामी चेद्भृतमपूर्णे काले जह्यात् तस्य सर्वमेव मूल्यं दद्यात् पणशतं च राज्ञेऽन्यत्र भृतकदोषात् ॥ इति ।

तस्येति चतुर्थ्यर्थे षष्ठी ।

**कात्यायनः**

त्यजेत्पथि सहायं यः श्रान्तं रोगार्तमेव वा ।
प्राप्नुयात् साहसं पूर्वं ग्रामे त्र्यहमपालयन् ॥

सहायं भृत्यम् ।

**याज्ञवल्क्यः**

प्रक्रान्ते सप्तमं भागं चतुर्थं पथि संत्यजन् ।
भृतिमर्धपथे सर्वां प्रदाप्यस्त्याजकोऽपि यः ॥

यस्तु स्वामी प्रस्थानकर्मणि प्रक्रान्ते गन्तव्यभागाधिके पथि अर्धपथे वा कर्म कुर्वाणं भृत्यं त्याजयति सोऽपि पूर्वोक्तप्रदेशेषु भृत्याय यथाक्रमं सप्तमादिभागं दाप्य इत्यर्थः । इदं च वचनमविक्रीतभाण्डविषयम् । 'पथि विक्रीये'त्यादि वृद्धमनुवचनं तु विक्रीतभाण्डविषय-मिति न विरोधः ।

---

## अथ पण्यस्त्रीविधिः

**नारदः**

शुल्कं गृहीत्वा पण्यस्त्री नेच्छन्ती द्विगुणं वहेत् ।
अनिच्छन् शुल्कदाताऽपि शुल्कहानिमवाप्नुयात् ॥

नेच्छन्ती शुल्कदातारं सम्भोगजन्तुमिति शेषः । द्विगुणं शुल्कम् । राजकार्यादिवैयग्र्ये-णानागमने नापराधः ।

तथा च स्मृतिः

व्याधिता सश्रमा व्यग्रा राजकार्यपरायणा ।
आमन्त्रिता च नागच्छेदवाच्या वडवा स्मृता ॥

व्याध्यादिग्रहणं कारणान्तरोपलक्षणम् । वडवा वारवनिता । वडवाग्रहणं च गन्तुर-प्युपलक्षणम् । तेन सोऽपि व्याध्याद्याकुलत्वेनागच्छन्न वाच्य एव ।

मत्स्यपुराणे

गृहीत्वा वेतनं वेश्या लोभादन्यत्र गच्छति ।
तां दमं दापयेद्द्याद्दितरस्यापि भाटकम् ॥

भाटकं शुल्कम् ।

भोक्तारं प्रत्याह नारदः

अप्रयच्छंस्तथा शुल्कमनुभूय पुमान्स्त्रियम् ।
अक्रमेण तु संगच्छेद् घातदन्तनखादिभिः ॥
अयोनौ यः समाक्रामेद्बहुभिर्वा विभावयेत् ।
शुल्कं सोऽष्टगुणं दाप्यो विनयं तावदेव तु ॥

मत्स्यपुराणे

अन्यमुद्दिश्य वेश्यां यो नयेदन्यस्य कारणात् ।
तस्य दण्डो भवेद्राज्ञः सुवर्णस्य च माषकम् ॥

यः शम्भलः । अत्र लिङ्गमविवक्षितं तेन शम्भल्या अपीदृश्या अयमेव दण्डोऽनुसन्धेयः ।

तथा

नीत्वा भोगं न यो दद्याद्दाप्यो द्विगुणवेतनम् ।
राज्ञश्च द्विगुणं दण्डं तथा धर्मो न हीयते ॥
बहूनां व्रजतामेकां सर्वे ते द्विगुणं दमम् ।
तस्यै दद्युः पृथग्राज्ञे दण्डं च द्विगुणं परम् ॥

विटवेश्याविवादनिर्णयकानाह नारदः

वेश्याः प्रधाना यास्तत्र कामुकास्तद्गृहोषिताः ।
तत्समुत्थेषु कार्येषु निर्णयं संशये विदुः ॥

भाटकविषये स एव

परभूमौ गृहं कृत्वा स्तोमं दत्त्वा वसेत्तु यः ।
स तद्गृहीत्वा निर्गच्छेत्तृणकाष्ठेष्टकादिकम् ॥

स्तोमं भाटकम् ।

स्तोमाप्रदानेऽपि स एवाह

स्तोमाद्विना वसित्वा तु परभूमावनिश्चितः ।
निर्गच्छंस्तृणकाष्ठानि न गृह्णीयात्कथञ्चन ॥
यान्यैर तृणकाष्ठानि त्विष्टका विनिवेशिताः ।
विनिर्गच्छंस्तु तत्सर्वं भूमिस्वामिनि वेदयेत् ॥ इति ।

अनिश्चित इत्यभिधानात्तृणकाष्ठादिग्रहणाग्रहणपरिभाषारहितमेतदित्यवगम्यते । परि-भाषायां तु सत्यां यथापरिभाष्यं व्यवहर्तव्यम् । स्वामिने स्वामिविषये । वेदयेन्निवेदयेत् ।

व्यासः

> स्नेहेन तु चिरं लब्ध्वा मन्दिरं कुरुते तु यः ।
> निर्गच्छतस्तस्य दारु दत्तस्तोमस्य नान्यथा ॥

तस्य परभूमौ मन्दिरकर्तुर्निर्गच्छतः स्थानान्तरं गच्छतो यद्दार्वादिकं मन्दिररूपेणाव-स्थितं भाटके दत्ते भाटकदातुरेव, अन्यथा भूमिस्वामिन एव भवतीत्यर्थः ।

कात्यायनः

> गृहवार्यापणादीनि गृहीत्वा भाटकेन यः ।
> स्वामिने नार्पयेद्यावत्तावद्दाप्यः स भाटकम् ॥

वारिशब्देनात्र तदाधारभूत कूपादिकं गृह्यते ।

> हस्त्यश्वगोखरोष्ट्रादीन् गृहीत्वा भाटकेन यः ।
> नार्पयेत्कृतकृत्यः सन् तावद्दाप्यः स भाटकम् ॥

वृद्धमनुः

> यो भाटयित्वा शकटं नीत्वा चान्यत्र गच्छति ।
> भाटं न दद्याद्दाप्यः स्यादनूढस्यापि भाटकम् ॥

अनूढस्यापि अकृतोपकारस्यापि ।

नारदः

> स्तोमवाहीनि भाण्डानि पूर्णकालान्युपानयेत् ।
> ग्रहीतुराभवेद्भग्नं नष्टं वाऽन्यत्र संप्लवात् ॥ इति ।

स्तोमवाहीनि स्तोमेन भाटकेन वा द्रव्य वहन्ति तच्छीलानि स्तोमवाहीनि भाण्डानि पूर्णकालानि परिपूर्णावधिकालानि स्वामिन प्रापयेत् । यत्तु भाण्ड देशविप्लवादेरन्यत्र भग्नं नष्ट वा भाटकेन भाण्डग्रहीतुरेव भवति । ततश्च तेन तन्मूल्य तत्सदृश भाण्डान्तर वा देयम् । देशविप्लवादौ तु भग्नं नष्टं वा भाण्डस्वामिन एव गच्छति, न तत्र भाण्डग्रहीत्रा किञ्चिद्देय-मित्यर्थः ।

इति वेतनानपाकर्म

---

## अथ स्वामिपालविवादः

तत्र मनुः

पशुषु स्वामिनां चैव पालानां च व्यतिक्रमे ।
विवादं संप्रवक्ष्यामि यथावद्धर्मतत्त्वतः ॥
गोपः क्षीरभृतो यस्तु स दुह्याद्दशतो वराम् ।
गोस्वाम्यनुमते भृत्यः सा स्यात्पालेऽभृते भृतिः ॥

पशुषु विषयेषु विवादं विवादापनोदकं विधिं । क्षीरभृतः क्षीरमात्रवेतनो यो गोपालः स दुह्यादात्मार्थं दशतः दशसु गोषु रक्षितासु तन्मध्यतो वरामुत्तमाम् । 'गोस्वाम्यनुमते' इति वचनात्तदनुमतिव्यतिरेकेण दोहे दण्ड्य इति सूचितम् । क्षीरं दुह्यादिति च तत्तत्पशुविकारोपयोगोपलक्षणम् । तेन मेषादायूर्णादिग्रहणेऽपि तत्पालकस्यायं भागक्रम इति दर्शितम् । पाले पशुपालके । अभृते ग्रासाच्छादनादिना । क्षीरशून्यपशूनां गोमहिष्यादीनां तु भृतिः क्षीरमूल्यतः कल्पनीया ।

नारदः

गवां शताद्वत्सतरी धेनुः स्याद्विशता भृतिः ।
प्रतिसंवत्सरं गोपे सन्दोहश्चाष्टमेऽहनि ॥

वत्सतरी समतिक्रान्तवत्सत्वावस्था । सन्दोहः सर्वदोहः । अत्र धेनुमात्ररक्षणे क्षीरदशमांशो भृतिः, धेन्वधेनुसाधारणगवीरक्षणे इयं भृतिविधेति तात्पर्यम् ।

बृहस्पतिः

तथा धेनुभृतः क्षीरं लभेत ह्यष्टमेऽखिलम् । इति ।

भृतस्य पशुपालस्य पलायने दण्डताडनपूर्वकं तदीयपश्वावरोधनं कार्यमिति तु प्रागेवोक्तं स्वामिपालकर्तव्यमाह नारदः

उपानयेद्वा गोपाय प्रत्यहं रजनीक्षये ।
चीर्णाः पीताश्च ता गोपाः सायाह्ने प्रत्युपानयेत् ॥

उपानयेत् अर्पयेत् । गोगोपग्रहणं पशुतत्पालकोपलक्षणार्थम् ।

याज्ञवल्क्यः

यथार्पितान्पशून्गोपः सायं प्रत्यर्पयेत्तथा । इति ।

अतथार्पणे तु स एव

प्रमादहृतनष्टांश्च प्रदाप्यः कृतवेतनः । इति ।

कृतवेतनः कल्पितवेतनः ।

मनुः

दिवा वक्तव्यता पाले रात्रौ स्वामिनि तद्गृहे ।
योगक्षेमेऽन्यथा चेत्तु पालो वक्तव्यतामियात् ॥

वक्तव्यता पशूनामक्षेमे तत्कृतापचयवत्ता वक्ता(वक्तव्यता?)। तद्गृहे स्वामिगृहावस्थाने पशूनां योगक्षेमः। अप्राप्तप्रापणप्राप्तरक्षणरूपश्चेत् तदा स्वामिनि वक्तव्यता स्यात्। यदि त्वन्यथा दिवा रात्रौ च पाल एवार्पिताः पशवस्तदा पालस्यैव दोषः।

**मनुनारदौ**

विघुष्य तु हृतं चौरैर्न पालो दातुमर्हति।
यदि देशे च काले च स्वामिनः स्वस्य शंसति॥

विघुष्य प्रकाश्य। बलात्कारेणेति यावत्। देशे समीपदेशे। काले दिवसादौ। यद्वा विघुष्य पशूनामनुभावनार्थं शृङ्गकाहलवेण्वादिभिर्घोषं कृत्वा देशे स्वामिसन्निहिते काले अपहरणादविलम्बिते। शंसति तदा गोपालो नापराध्यति। अन्यथा त्वपराध्नुयादित्युक्तं भवतीति।

क्वचित्पालकस्य निर्दोषतामाह **व्यासः**

पालग्रहे ग्रामघाते तथा राष्ट्रस्य विभ्रमे।
यत्प्रनष्टं हृतं वा स्यान्न पालस्तत्र किल्बिषी॥

पौरुषाकरणे तु किल्बिषी भवेदेव।

तथा च **मनुः**

नष्टं विनष्टं क्रिमिभिः श्वहतं विषमे मृतम्।
हीनं पुरुषकारेण प्रदद्यात्पाल एव तु॥

नष्टमदर्शनं गतम्। क्रिमिभिर्विनष्टं विनाशितम्। श्वहतं शुना हतम्। विषमे मृतं निम्नादिना। यत्र तु पुरुषकारः सम्भवेदकरणं तत्पुरुषकारहीनं तद्गोपालो दद्यात्।

पुरुषकारमाह **बृहस्पतिः**

क्रिमिचोरव्याघ्रभयाद्दरीश्वभ्राच्च पालयेत्।
व्यायच्छेच्छक्तितः क्रोशेत्स्वामिने वा निवेदयेत्॥

दरी कन्दरा। श्वभ्रं गर्तः। व्यायच्छेत् व्यसननिवारणायोद्योगं कुर्यात्। क्रोशेत् उच्चैः शब्दं कुर्यात्। एतच्च स्वामिने निवेदनमशक्तविषयम्।

अत एव **नारदः**

स्याचेद्गोव्यसनं गोपो व्यायच्छेत्तत्र शक्तितः।
अशक्तस्तूर्णमागम्य स्वामिने वा निवेदयेत्॥

पुरुषकारमकुर्वाणो गोपालः स्वामिने द्रव्यं राज्ञे च दण्डं दद्यात्।

तथा च **बृहस्पतिः**

अव्यायच्छन्नविक्रोशन्स्वामिने वाऽनिवेदयेत्।
वोढुमर्हति गोपस्तां विनयं चैव राजनि॥

दण्डस्येयत्ता च याज्ञवल्क्येन दर्शिता

पालदोषविनाशे तु पाले दण्डो विधीयते ।
अर्धत्रयोदशपणः स्वामिनो द्रव्यमेव च ॥

अर्धत्रयोदशपणः सार्धद्वादशकार्षापणकः ।

विष्णुः

दिवा पशूनां वृकाद्युपघाते पाले त्वनायति पालदोषः ।

विनष्टमूल्यं स्वामिने दद्यात् ।

अननुज्ञातो दुहन् पञ्चविंशतिकार्षापणान् ।

अनायति उपघातनिवारणार्थमनागच्छतीत्यर्थः ।

ब्रह्मपुराणे

गृहीतमूल्यो गोपालस्तास्त्यक्त्वा निर्जने वने ।
ग्रामचारी नृपैर्वध्यः शलाकीव वनेचरः ॥
गोपालहस्तन्यस्ता गौस्तद्दोषान्म्रियते यदि ।
तदा स एव दण्ड्यस्तु शुल्कं दाप्यस्तु गोपतेः ॥
यदा रोगादिदोषेण म्रियते गौर्गृहे क्वचित् ।
तदा स गोपतिर्दण्ड्यो दत्त्वा गोपालवेतनम् ॥

शलाकी नापितः । रोगादिदोषेणेत्यत्र स्वामिनः प्रतिकारकरणव्यतिरेकेणेति शेषः ।

मनुनारदौ

अजाविके तु संरुद्धे वृकैः पाले त्वनायति ।
यां प्रसह्य वृको हन्यात्पाले तत्किल्बिषं भवेत् ॥

वृकैः अजाविके संरुद्धे आवृते सति तस्यैव वृकघातयोग्यत्वात् । गवादेस्तु व्याघ्रादेरेव भयम् । तत्र च पालस्य रक्षणाशक्तेर्न दोषः । तदा पाले अनायति तत्रागत्य क्षेममकुर्वति । यामजाविकजातीयां व्यक्तिम् । वृकः प्रसह्य बलात्कारेण हन्यात् । तत्र पाले किल्बिषापराधः । एतच्च सुगमस्थलस्थितिविषयम् । दुर्गमस्थलस्थितिविषये तु पुरुषकारकरणाशक्तेः पालः किल्बिषी न भवति ।

तथा च स एव

तासां चेदवरुद्धानां चरन्तीनां मिथो वने ।
यामुत्प्लुत्य वृको हन्यान्न पालस्तत्र किल्बिषी ॥

तासामजाविरूपाणां अवरुद्धानाम् । एकत्रानीकृत्य पालेन रक्ष्यमाणानाम् । मिथः रहसि ।

**नारदः**

अनेन सर्वपालानां विवादः समुदाहृतः ।
मृतेषु च विशुद्धिः स्याद्वालशृङ्गादिदर्शनात् ॥

कालवशादप्यरण्ये मृतेषु पशुषु स्वापहारशङ्कापरिहारार्थं मृतपशूनां वालादिकं दर्शयेदित्यर्थः । आदिशब्दार्थमाह **मनुः**

कर्णौ चर्म च वालांश्च बस्तिं स्नायुं च रोचनाम् ।
पशुषु स्वामिनां दद्यान्मृतेष्वङ्गानि दर्शयेत् ॥
एतद्विधानमातिष्ठेद्धार्मिकः पृथिवीपतिः ।
स्वामिनां च पशूनां च पालानां च व्यतिक्रमे ॥

## इति पशुस्वामिपालविवादः

---

## अथ क्षेत्रस्वामिपालविवादः

तत्र **कात्यायनः**

क्षेत्रारामविवीतेषु गृहेष्वपशुवाहिषु ।
ग्रहणं तत्प्रविष्टानां ताडनं वा बृहस्पतिः ॥

आराम उपवनम् । विवीतः प्रचुरतृणकाष्ठो रक्ष्यमाणः परपरिगृहीतो भूप्रदेशः । अपशुवाहिग्रहणं गोष्ठादिनिवारणार्थम् । अत्र ग्रहणं वत्सादीनाम् । स्थूलवृषादीनां ताडनमिति व्यवस्था योग्यतया अनुसन्धेया । ताडनं च यावता निवारणं भवति तावदेव कार्यं नाधिकम् ।

अधिकताडने ॥ दण्डम् इत्याह स एव

अधमोत्तममध्यानां पशूनां चैव ताडने ।
स्वामी तु विवदेद्यत्र दण्डं तत्र प्रकल्पयेत् ॥

यत्र स्वामी स्मृत्याचारव्यपेतमार्गेणाधिकताडने विवदेत् तत्र ताडनानुरूपं दण्डं कल्पयेदित्यर्थः ।

ताडनातिरिक्तमपि पशुनिवारणकारणं तेनैवोक्तम्

अजातेष्वेव सस्येषु कुर्यादावरणं महत् ।
दुःखेन हि निवार्यन्ते लब्धस्वादुरसा मृगाः ॥

**नारदः**

पथि क्षेत्रे वृतिः कार्या यामुष्ट्रो नावलोकयेत् ।
न लङ्घयेत्पशुर्नाश्वो न भिन्द्यात्‌ च सूकरः ॥

पथि क्षेत्रे मार्गासन्नक्षेत्रे । वृतिः कण्टकवृक्षशाखादिभिः परितः क्रियमाणमावरणम् ।

**मनुः**

वृतिं तत्र प्रकुर्वीत यामुष्ट्रो नावलोकयेत् ।
छिद्रं च पूरयेत्सर्वं श्वसूकरमुखानुगम् ॥

प्रकुर्वीत स्वामीति शेषः । यामुष्ट्र इत्युच्चतोक्ता । श्वसूकरमुखं यत्रानुगच्छति तादृक्छिद्रं वारयेत् । एवं क्षेत्रस्वामिकृतावरणस्यापि सस्यस्य पशुभिरुपघाते स एव

पथि क्षेत्रे परिवृते ग्रामान्तीयेऽथवा पुनः ।
सपालः शतदण्डार्हो विपालान्वारयेत्पशून् ॥

परिवृते पथि क्षेत्रे तथा ग्रामान्तीये ग्रामासमीपवर्तिनि क्षेत्रे । ग्रामपदं नगरस्याप्युपलक्षणम् । परिवृत इति विशेषणमिहाप्यनुषञ्जनीयम् । सपालः पशुरित्यत्र वृतिमतिक्रम्य ग्रासादधिकस्य घातीति शेषः । स पशुः शतदण्डार्हः । शतं कार्षापणान् दण्ड्यः । पशोर्दण्डः पालस्यैवार्थाद्भवति । विपालान् देवादिपशून् क्षेत्रस्वामी स्वयमेव वारयेत् ।

गवादीनामयस्थानासनसौकर्यार्थं ग्रामादेः क्षेत्रस्य च अन्तरालमाह **याज्ञवल्क्यः**

धनुःशतं परीणाहो ग्रामक्षेत्रान्तरं भवेत् ।
द्वे शते खर्वटस्य स्यान्नगरस्य चतुःशतम् ॥ इति ।

खर्वटो वनगिरिशृङ्गाद्याश्रयजननिवासः ।

एकतो यत्र तु ग्रामो नगरं चैकतः स्थितम् ।
मिश्रं तु खर्वटं नाम नदीगिरिसमाश्रयम् ॥

इति भृगुप्रोक्तो वा ।

**मनुः**

धनुःशतं परीणाहो ग्रामस्यस्य स्यात्समन्ततः ।
शम्यापातास्त्रयो वाऽपि त्रिगुणो नगरस्य तु ॥
तत्रापरिवृतं धान्यं विहिंस्युः पशवो यदि ।
न तत्र प्रणयेद्दण्डं नृपतिः पशुरक्षिणाम् ॥

धनुर्हस्तचतुष्कं तच्छतं महाग्रामस्य परीणाहो वेष्टनेन त्याज्यभूमिः । शम्या युगकीलकः । तस्यास्त्रयः पाताः परतः क्षेपाः यावद्देशे भवन्ति तावान्देशः क्षुद्रग्रामस्य । एतयोर्द्वयोस्त्रैगुण्यं नगरस्य बृहत्त्वापेक्षया व्यवस्थितं द्रष्टव्यम् । तत्र परीणाहे धान्यमिति पशुभक्ष्योपलक्षणम् । विहिंस्युर्भक्षयेयुः ।

**विष्णुः**

पथि ग्रामविवीतान्ते न दोषोऽनावृते चाल्पकालम् ।

तत्र भक्षणे सति विशेषः । बहुकालभक्षणे तत्रापि दोषः ।

अत एव न दोष इत्यनुवृत्तौ **गौतमः**

पथि क्षेत्रेऽनावृते पालक्षेत्रिकयोरतिदीर्घकालम् । इति ।

पशुनः सस्यपीडन इति शेषः । वृतिमकुर्वतः क्षेत्रिकस्य राजभागविनाशनिबन्धनो दोषः । ततश्च सोऽप्यपराधानुसारेण दण्ड्य इत्यभिप्रायः । सवृतिक्षेत्रे वृतिमुत्क्रामतः पशोः स्वशक्त्या निवारणमकुर्वन् पालो दण्ड्यः ।

तथा च **नारदः**

उत्क्रम्य तु वृतिं यः स्यात्सस्यघातो गवादिभिः ।
पालः शास्यो भवेत्तत्र न चेच्छक्त्या निवारयेत् ॥

यत्र वृतिराहित्येन सस्यघातो न निवारयितुं शक्यः, तत्रापि स एव

ग्रामोपान्ते च यत्क्षेत्रं विवीतान्ते महापथे ।
अनावृतं चेत्तन्नाशे न पालस्य व्यतिक्रमः ॥

महापथे अपरिहार्यमार्गे । अत्र दोषाभावकीर्तनाद्यथादण्डाभावो विनष्टसस्यमूल्यदाना-भावश्च गम्यते ।

**याज्ञवल्क्यः**

पथि ग्रामविवीतान्ते क्षेत्रे दोषो न विद्यते ।
अकामतः कामचारे चोरवद्दण्डमर्हति ॥

अत्रान्तःशब्दः समीपवचनः । स च प्रत्येकं पथ्यादिभिः सम्बध्यते । कामचारे बुद्धि-पूर्वकं गोभिश्चारणे ।

**उशनाः**

गोभिर्विनाशितं धान्यं यो नरः प्रतियाचते ।
पितरस्तस्य नाश्नन्ति नाश्नन्ति च दिवौकसः ॥

एतच्च निर्दोषविषयम् ।

अत एवास्मिन्नेव विषये दण्डमाह स एव

क्षेत्रेष्वन्येषु तु पशुः सपादं पणमर्हति । इति ।

अन्ये पथि क्षेत्रे परिवृत इत्यादिना प्रतिपादितक्षेत्रव्यतिरिक्तेषु । पशुस्वामी पालो वा । पशुमुखेनात्र स्वामिपालयोर्दण्डाभिधानं पशुनेकत्वे प्रतिपशु स्वामिपालयोरेतद्दण्डतात्पर्यम् ।

**गौतमः**

पशुपीडने स्वामिदोषः पालसंयुक्ते तु तस्मिन्नपि । इति ।

पशुपीडने पशुवशात्सस्यपीडने। विपालपशुपीडने स्वामिन एव दोषः, पालसंयुक्ते तु पालेऽपीत्यर्थः। तथा चान्येनेदृशी दण्डव्यवस्था प्रतिपादिता। स्वामिन एव दोषे तस्य सदं दण्डो, पालसहितस्य तु तस्य दोषे स्वामिनः सद एव पालस्य दण्ड एवेति। यत्तु **नारद**वचनं

नष्टा या पालदोषेण गौः क्षेत्रं तु विनाशयेत्।
न तत्र स्वामिनो दोषः पालस्तद्दण्डप्रापकः॥

(इति) तद्दोषाभावप्रतिपादनपरं, न पुनः सददानप्रापकदोषाभावप्रतिपादनपरमपि।

**बृहस्पतिः**

सस्यान्निवारयेद्गास्तु चीर्णे दोषो द्वयोर्भवेत्।
स्वामी सदद्मं दाप्यः पालस्ताडनमर्हति॥

सदं भक्षितक्षेत्रफलं दमम्।

**याज्ञवल्क्यः**

यावत्सस्यं विनाश्येत्तु तावत्स्यात् क्षेत्रिणः फलम्।
गोपस्ताड्यस्तु गोमी तु पूर्वोक्तं दण्डमर्हति॥

अत्र सस्यपदं पलावादेरप्युपलक्षणम्। यस्मिन्‌ क्षेत्रे यावत्पलालधान्यादिकं गवादिभिर्नाशितं तावतो मूल्यं सामन्तैः परिकल्पितं तत्क्षेत्रस्वामिने गोमी दापनीयः। पालापराधे पालस्तु ताड्यः, न फलं दापनीयः इदं च ताडनं धनदण्डसहितम्। गोमिनस्तु स्वदोषेण सस्योपघातकत्वे दण्ड एव, न ताडनम्। फलदानं तु सर्वत्र गोमिन एव। क्षीरादिद्वारेण तस्यैव भक्षितसस्यफलभागित्वात्। भक्षितावशिष्टपलालादिकं गोमिनैव ग्राह्यम्, सामन्तनिर्णीतमूल्यदानेन क्रीतकल्पत्वात्।

तथा च **नारदः**

गोभिस्तु भक्षितं सस्यं यो नरः प्रतियाचते।
सामन्तानुमतं देयं धान्यं यत्तत्र वापितम्॥
गवत्रं गोमिनो देयं धान्यं वै कर्षकस्य तु।
एवं हि विनयः प्रोक्तो गवां सस्यावमर्दने॥

गवत्रं यवसं गोमी गोस्वामी।

दण्डविषये **शङ्खलिखितौ**

रात्रौ चरन्ती गौः पञ्चमाषान् दिवा त्रीन् मुहूर्ते माषं ग्रासे त्वदण्डः।

इत्येतदप्रत्यक्षचारकविषयम्।

प्रत्यक्षचारकविषये तु वक्ष्यते **याज्ञवल्क्यः**

माषानष्टौ तु महिषी सस्यघातस्य कारिणी।
दण्डनीया तदर्धं तु गौस्तदर्धमजाविकम्॥

भक्षयित्वोपविष्टानां यथोक्ताद्द्विगुणो दमः ।
सममेषां विवीतेऽपि खरोष्ट्रं महिषीसमम् ॥ इति ।

अयमर्थः—परसस्यघातिन्या महिष्याः स्वामी अष्टौ माषान् दण्डनीयः । गोस्वामी चतुरो माषान् छागमेषस्वामी द्वौ द्वौ माषौ । एषामेव पशूनां सस्यभक्षणमारभ्य शयनपर्यन्तमनिवारितानां स्वामी पूर्वोक्ताद्द्विगुणं दण्डनीयः । विवीतवति तृणादिभक्षणेऽपि पूर्वोक्तपशुस्वामी सस्यभक्षणवद्दण्डनीयः । खरोष्ट्रस्वामी च महिषीस्वामिवद्दण्डनीय इति । अत्र महिष्यादिस्वामी दण्डनीय इति वक्तव्ये महिष्यादिमुखेन दण्डाभिधानं प्रतिपश्वेवंविधदण्डप्रतिपादनार्थम् । अत्र माषस्ताम्रिको विवक्षितः । स च कार्षापणस्य षोडशांशो भवति ।

संख्यारश्मिरयोमूला मनुना समुदाहृता ।
कार्षापणांता सा दिव्ये नियोज्या विनये तथा ॥

इति बार्हस्पत्यवचनानुरोधात् । ये तु माषः कार्षापणविंशो भाग इति मन्यन्ते, तेषामुदाहृतैतद्बार्हस्पत्यवचनविरोधो दुर्वारः । इदमबुद्धिपूर्वकविषयम् । बुद्धिपूर्वकत्वे तु क्षेत्रेष्वन्येषु तु पशुः सपादं पणमर्हतीति मनूक्तो दण्डः

पणस्य पादौ द्वौ गां तु द्विगुणं महिषीं तथा ।
तथाऽजाविकवत्सानां सदो दण्डः प्रकीर्तितः ॥

इति स्मृत्यन्तरं भक्षयित्वोपविष्टविषयम् ।

यत्पुनर्नारदेनोक्तम्

माषं गां दापयेद्दण्डं द्वौ माषौ महिषीं तथा ।
तथाऽजाविकवत्सानां दण्डः स्यादर्धमाषकः ॥

इति । तन्मुहूर्तमात्रभक्षणविषयम् । दण्डं प्राप्नुयादित्यनुवृत्तौ शङ्खलिखितौ

सर्वेषामेव वत्सो माषं महिषी दश, खरोष्ट्रं षोडश, अजाविकं चतुरः ।

अत्र 'महिषी दशे'ति नारदोक्तमाषाभिप्रायम् । तथात्वे फलतस्ताम्रिकामाषात्मक एव दण्डः सिध्यति । तेन 'माषानष्टौ तु महिषी'ति याज्ञवल्क्यवचनाविरोधः । खरोष्ट्रं षोडशेत्यादि तु भक्षणानन्तरोपविष्टखरादिविषयम् ।

**नारदः**

गावः पादं प्रदण्ड्याः स्युर्महिष्यो द्विगुणं ततः ।
अजाविके सवत्से तु माषो दण्डः परः स्मृतः ॥
सन्नानां द्विगुणो दण्डो वसतां च चतुर्गुणः ।
प्रत्यक्षचारकाणां च चौरदण्डः स्मृतो बुधैः ॥

इत्येतदपि याज्ञवल्कीयवचनसमानविषयम् ।

विष्णुः

महिषी चेत्सस्यनाशं कुर्यात् पालकस्तत्राष्टौ माषान्दण्ड्यः । अपालकायाः स्वामी । अश्व उष्ट्रो गर्दभो वा गौश्चेत्तदर्धम् । तदर्धमजाविकं चेत् । भक्षयित्वोपविष्टेषु द्विगुणम् ।

अश्व इत्यादौ सस्यनाशं कुर्यादित्यनुषञ्जनीयम् ।

—o—

अथादण्ड्याः

राजग्रहगृहीतो वा वज्राशनिहतोऽपि वा ।
अथ सर्पेण वा दष्टो वृक्षाद्वा पतितो भवेत् ॥
व्याघ्रादिभिर्हतो वापि व्याधिभिर्वा ह्युपद्रुतः ।
न तत्र दोषः पालस्य न च दोषोऽस्ति गोमिनाम् ॥

आतुरादीनां पशूनामनिवार्यत्वात् सस्यनाशकत्वेऽपि गोमिनः पालस्य च न दोषः ।

याज्ञवल्क्यः

महोक्षोत्सृष्टपशवः सूतिकागन्तुकादयः ।
पालो येषां तु ते मोच्या दैवराजपरिप्लुताः ॥

उत्सृष्टा देवताद्युद्देशेन त्यक्ताः । सूतिका नवप्रसूता । आगन्तुका ग्रामान्तरादागताः । येषां च पालो विद्यते तेऽपि दैवराजाभिभूताः सस्योपहन्तारो न दण्ड्याः ।

मनुः

अनिर्दशाहां गां सूतां वृषान्देवपशूंस्तथा ।
सपालान्वा विपालान्वा अदण्ड्यान्मनुरब्रवीत् ॥

शङ्खः

देवपशवश्छागलवृषभा अदशाहा गावः सस्यापराधे न दण्डमाप्नुयुः ।

नारदः

गौः प्रसूता दशाहं तु महोक्षो वाजिकुञ्जराः ।
निवार्याः स्युः प्रयत्नेन तेषां स्वामी न दण्डभाक् ॥

दिनदशकपर्यन्तं प्रसूतायाः निरोद्धुमयुक्तत्वात् । महोक्षस्य च गर्भाधायकत्वेन बन्धनायोगाच्च तत्स्वामिनो दण्डः ।

गजवाजिस्वामिनो दण्डाभावे हेतुमाहोशनाः

अदण्ड्या हस्तिनोऽश्वाश्च प्रजापाला हि ते स्मृताः ।
अदण्ड्याः काणकुण्ठाश्च वृषश्च कृतलक्षणः ॥

अदण्ड्याऽऽगन्तुकी गौश्च सूतिका चाभिसारिणी ।
अदण्ड्याश्चोत्सवे गावः श्राद्धकाले तथैव च ॥ इति ।

कुण्ठः खञ्जः । कृतलक्षणः चक्रशूलाद्यङ्कितः । आगन्तुकी अनभ्यस्तस्थाना । अभिसारिणी स्वयूथात्प्रच्युता । अत्रोत्सृष्टपशूनामस्वामिकत्वेन दण्ड्यत्वासम्भवात्तदुपादानं दृष्टान्तार्थम् ।

व्यासः

आक्रम्य यद्द्विजैर्भुक्तं परिक्षीणैश्च बान्धवैः ।
गोभिश्च नरशार्दूल वाजपेयाद्विशिष्यते ॥

मनुः

एतद्विधानमातिष्ठेद्धार्मिकः पृथिवीपतिः ।
स्वामिनां च पशूनां च पालानां च व्यतिक्रमे ॥ इति ।

इति क्षेत्रस्वामिपालविवादः

---

इति श्रीमन्महीमण्डलाखण्डलश्रीनागमल्लाभ्यधिपमप्रतिज्ञापरिपूरणपरायण-
कलिकालकर्णप्रतापलङ्केश्वरशरणागतराजवज्रपञ्जरपरमवैष्णवरिपु-
गजसिंहेत्यादिनिजबिरुदराजीविराजमानमानोन्नतमहाराजाधि
राजश्रीपृथ्वीचन्द्रदेवविरचिते धर्मतत्त्वकलानिधौ
महानिबन्धे व्यवहारप्रकाशे अभ्युपेत्याशुश्रूषादि-
निरूपणं नाम नवम उल्लासः ॥

---

## अथ संविद्व्यतिक्रमः

तत्र तत्स्वरूपमाह **नारदः**

पाषण्डनैगमादीनां स्थितिः समय उच्यते ।
समयस्यानपाकर्म तद्विवादपदं स्मृतम् ॥ इति ।

पाषण्डाः क्षपणकादयः । नैगमाः सार्थिका वणिजः । आदिशब्देन त्रैविद्यब्राह्मणसमूह-श्रेणिपूगव्रातगणगुल्मग्रामदेशादयो गृह्यन्ते । तेषां स्थितिः पारिभाषिकधर्मेण व्यवस्थानं समयः । तस्यानपाकर्म अव्यतिक्रमः परिपालनम् । तद्व्यतिक्रम्यमाणं विवादपदं भवतीत्यर्थः ।

संविद्व्यतिक्रमोपयोगिनमर्थमाह **बृहस्पतिः**

वेदविद्याविदो विप्रान् श्रोत्रियानग्निहोत्रिणः ।
आहृत्य स्थापयेत्तत्र तेषां वृत्तिं प्रकल्पयेत् ॥

तत्र राजधान्यामार्यनिवासोचितस्थाने ।

वृत्तिकल्पनप्रकारश्च **तेनैव** प्रपञ्चितः

अनाच्छेद्यकरास्तेभ्यः प्रदद्याद्गृहभूमयः ।
(मुक्तभाव्याश्च नृपतिर्लेखयित्वा स्वशासने ॥)

अनाच्छेद्यकरा आगामिनृपतिभिरग्राह्यकराः । मुक्तभाव्या मुक्तं स्वेन परित्यक्तं भाव्यं राजभागधेयं यासां ताः प्रदद्यात् ।

**याज्ञवल्क्योऽपि**

राजा कृत्वा पुरे स्थानं ब्राह्मणान्न्यस्य तत्र तु ।
त्रैविद्यं वृत्तिमद्ब्रूयात् स्वधर्मः पाल्यतामिति ॥

राजा स्वपुरे दुर्गादौ स्थानं धवलगृहादिकं कारयित्वा । तत्र ब्राह्मणान्न्यस्य स्थापयित्वा तद्ब्राह्मणजातं त्रैविद्यं वेदत्रयसम्पन्नं वृत्तिमद्भूहिरण्यादिसम्पन्नं च कृत्वा स्वधर्मो वर्णाश्रमनिमित्त इत्यादिविहितो भवद्भिः प्रतिपाल्यतामिति ब्राह्मणान्प्रति वदेत् ।

**बृहस्पतिः**

नित्यं नैमित्तिकं कर्म शान्तिकं पौष्टिकं तथा ।
पौराणां कर्म कुर्युस्ते सन्दिग्धे निर्णयं तथा ॥

अत्र समुदायविशेषस्य कार्यविशेष उक्तः ।

अन्येषां समुदायानां कृत्यमाह **स एव**

ग्रामश्रेणिगणानां च सङ्केतः समयक्रिया ।
बाधाकाले तु सा कार्या धर्मकार्ये तथैव च ॥

चशब्दः पाषण्डादीनां समुच्चयार्थः । बाधाकाले क्षुद्रोपद्रवकाले धर्मकार्ये जीर्णदेवा-

लयोद्धारादौ । यां समयक्रियां विना उपद्रवो न शाम्यति धर्मकार्यं न सिध्यति सा बहुभिर्मिलितैः कार्येत्यर्थः ।

तथा चाह स एव

चाटचोरभये बाधाः सर्वसाधारणाः स्मृताः ।
तत्रोपशमनं कार्यं सर्वैर्नैकेन केनचित् ॥

उपशमनमुपशमोपायः, समय इति यावत् । स चोराद्युपद्रवे प्रतिगृहमेकैकेन शस्त्रपाणिना ग्रामरक्षणार्थमागन्तव्यमित्येवमादिः ।

धर्मकार्ये क्रियमाणे समयमाह स एव

सभाप्रपादेवगृहतडागारामसंस्कृतिः ।
तथाऽन्यच्च दरिद्राणां संस्कारो यजनक्रिया ॥
कुलायनं निरोधं च कार्यमस्माभिरंशतः ।
यत्रैतल्लिख्यते पत्रे धर्म्या सा समयक्रिया ॥
पालनीया समस्तैस्तु (यः समर्थो विसंवदेत् ॥) इति ।

सभा जनाश्रयो मण्डपः । संस्कृतिर्जीर्णोद्धारः । संस्कार उपनयनादिः प्रेतदाहादिश्च । यजनक्रिया सोमयागादिकर्त्रे द्रव्यदानम् । कुलायनं दुर्भिक्षादिपीडितयूथागमनम् । तस्मिन्सति यद्विधेयं सविधानं तदनेन शब्देनोच्यते । निरोधो दुर्भिक्षाद्युपगमपर्यन्त तत्कुलधारणमिति यावत् । एवंविधा समयक्रिया न केवलं ग्रामनिवासिभिरेव, अपि तु राज्ञापि प्रतिपालनीया ।

अत एव नारदः

पाषण्डनैगमश्रेणिपूगव्रातगणादिषु ।
संरक्षेत्समयं राजा दुर्गे जनपदे तथा ॥

याज्ञवल्क्यः

श्रेणिनैगमपाषण्डिगणानामप्ययं विधिः ।
भेदं चैषां नृपो रक्षेत् पूर्ववृत्तिं च पालयेत् ॥

एकपण्यशिल्पोपजीविनः श्रेणयः । पूगाः हस्त्यश्वारोहादयः ।

गणव्रातयोः स्वरूपमाह कात्यायनः

नानायुधधरा व्राताः समवेताः प्रकीर्तिताः ।
कुलानां हि समूहस्तु स गणः परिकीर्तितः ॥ इति ।

तत्र पूगे व्राते वाऽत्र समरे न गन्तव्यमित्यादयः सन्ति समयाः । गणे तु पञ्चमे वाऽब्दे कर्णवेधः कर्तव्य इत्येवमादिरस्ति । गणादिष्वित्यादिशब्देन महापुरीमहाजनपरिग्रहः । तत्र गुरुदक्षिणार्थमागतो माननीय इत्येवमादिः । दुर्गे तृणधान्यादिकं गृहीत्वा रक्षणीयं, न तत्केनापि विक्रेतव्यमित्यादिरस्ति । जनपदे तु क्वचिद्विंशत्हस्ताद्दशवन्यो ग्राह्यः क्वचित्त्रेत्हस्तादित्यादिको-

ऽस्त्यनेकविधः जनपदे । तथेत्यत्र तथाशब्देन ग्रामघोषपुरादिपरिग्रहः । तत्र न गोप्रचारस्थानं रातव्यमित्यादिको ग्रामसमयः । आभीरस्त्रीव्यभिचारे अदण्ड इत्यादिको घोषसमयः । एवं पुरसमयोऽप्यूहनीयः । सोऽयं समयकलापो यथा न नश्यति तथा राजा कुर्यादित्यर्थः ।

बृहस्पतिः

कोशेन लेख्यक्रियया मध्यस्थैर्वा परस्परम् ।
विश्वासं प्रथमं कृत्वा कुर्युः कार्याण्यनन्तरम् ॥

कोशः सूर्यांशुमद्देवताभिषेकजलम् । लेख्यक्रिया समयपत्रम् । मध्यस्थाः प्रतिभुवः । कार्याणि समूहकार्याणि ।

कात्यायनः

समूहानां तु यो धर्मस्तेन धर्मेण ते सदा ।
प्रकुर्युः सर्वकार्याणि स्वधर्मेषु व्यवस्थिताः ॥

स्वधर्मः प्रातिस्विको वर्णाश्रमधर्मः ।

याज्ञवल्क्यः

निजधर्माविरोधेन यस्तु सामयिको भवेत् ।
सोऽपि यत्नेन संरक्ष्यो धर्मो राजकृतश्च यः ॥

श्रौतस्मार्तधर्मानुपमर्देन समयान्निष्पन्नो यो धर्मो गोप्रचारजलरक्षणदेवालयपालनादिरूपः सोऽपि यत्नेन पालनीयः । तथा नृपेण स्वधर्माविरोधेनैव यः सामयिको धर्मो यावत्पथिकं भोजनं देयम् । अस्मदमित्रमण्डले तुरङ्गमातङ्गादयो न प्रस्थापनीया इत्येवंरूपः, सोऽपि यत्नेन रक्षणीयः । निजधर्माविरोधेनेति वदता सन्ध्यावन्दनवेलायां राजभवनं प्रति सर्वैर्द्विजैः स्वव्यापारपरिहारेण समागन्तव्यमित्येवमादिरूपो यः स्वधर्मविरोधी सामयिको धर्मः स न रक्षणीय इत्यर्थादुक्तं भवति ।

कात्यायनोऽपि

अविरोधेन धर्मस्य निर्मितं राजशासनम् ।
तस्यैवाचरणं पूर्वं कर्तव्यं तु नृपाज्ञया ॥

राजशासनं राजानुशिष्टो धर्मः । अत्र तस्यैवेत्येवकारेणास्माभिर्दत्तस्य गृहक्षेत्रारामादेर्दान-विक्रयादिकं न कार्यमित्येवमादिरर्जितद्रव्यस्य यथेष्टविनियोगार्हत्वबोधकश्रुतिस्मृतिविरुद्धो नाद-रणीय इति गम्यते ।

न चैवं सति

राजप्रवर्तितान् धर्मान् यो नरो नानुपालयेत् ।
सत्यं स पापो दण्ड्यश्च लोपयन् राजशासनम् ॥

इति तदीयवचनेनैव निरोध इति वाच्यम् । तस्य श्रुतिस्मृत्यविरुद्धराजप्रवर्तितधर्मविषयत्वात् । समूहिभिर्विचित्रमतिभिः परस्परमैकमत्येन कार्यस्य निश्चेतुमशक्यत्वाद् द्वित्राः पञ्च वा कार्यविचारकाः कार्याः ।

तथा च बृहस्पतिः

द्वौ त्रयः पञ्च वा कार्याः समूहहितवादिनः ।
कर्तव्यं वचनं तेषां ग्रामश्रेणिगणादिभिः ॥
विद्वेषिणो व्यसनिनः शालीनालसभीरवः ।
लुब्धातिबालवृद्धाश्च न कार्याः कार्यचिन्तकाः ॥
शुचयो वेदधर्मज्ञा दान्ता दक्षाः कुलोद्भवाः ।
सर्वकार्यप्रवीणाश्च कर्तव्याश्च महत्तमाः ॥

शालीनाः अप्रगल्भाः । कार्यचिन्तकाः समूहिकार्यसाधकबाधकविचारकाः ।

याज्ञवल्क्यः

कर्तव्यं वचनं सर्वैः समूहहितवादिनाम् ।
यस्तत्र विपरीतः स्यात्स दाप्यः प्रथमं दमम् ॥

गणिनां मध्ये ये समूहहितवादनशीलाः तद्वचनमन्यैर्गणान्तर्गतैरनुसरणीयम् । यश्च गणिनां मध्ये समूहहितवादिवचनप्रतिबन्धकारी स राज्ञा प्रथमं साहसं दण्डनीय इत्यर्थः ।

कात्यायनोऽपि

युक्तियुक्तं च यो हन्याद्वक्तुर्योऽनवकाशदः ।
अयुक्तं चैव यो ब्रूयात्प्राप्नुयात्पूर्वसाहसम् ॥ इति ।

बृहस्पतिरपि

यस्तु साधारणं हिंस्यात्क्षिपेत्त्रैविद्यमेव वा ।
संवित्क्रियां विहन्याच्च स निर्वास्यस्ततः पुरात् ॥

पुरात् समुदायस्थानात् । त्रैविद्याक्षेपे तु दण्डो वाक्पारुष्यपदे वक्ष्यते । समुदायमात्रस्य मर्मोद्घाटनादौ निर्वासनमेव दण्डः ।

यतः स एवाह

अरुन्तुदः सूचकश्च भेदकृत्साहसी तथा ।
श्रेणिपूगनृपद्विष्टः क्षिप्रं निर्वास्यते ततः ॥

ततः समूहस्थानात् । निर्वासनं च समूहेन कार्यम् । यतः स एव

पूगश्रेणिगणाध्यक्षाः पुरदुर्गनिवासिनः ।
वाग्धिग्दण्डं परित्यागं प्रकुर्युः पापकर्मणाम् ॥
तैः कृतं यच्च धर्मेण निग्रहानुग्रहं नृणाम् ।
तद्राज्ञाऽप्यनुमन्तव्यं निसृष्टार्था हि ते स्मृताः ॥

निग्रहानुग्रहमिति । सामान्येनाभिधानादर्थं दण्डमपि ते कुर्युरित्यवगम्यते । निसृष्टार्था अनुज्ञातकार्याः । अधर्मेण तैर्निग्रहादिकरणे राज्ञा निवारणं दण्डश्च कार्यः ।

तथा च **स** एव

बाधां कुर्युर्यदैकस्य सम्भूता द्वेषसंयुताः ।
राज्ञा ज्ञात्वा निवार्यास्तु शास्याश्चैवानुबन्धतः ॥

अनुबन्धतः अपराधानुसारेण ।

**नारदो**ऽपि

पृथग्गणांस्तु ये भिन्द्युस्ते विनेया विशेषतः ।
आवहेयुर्भयं घोरं व्याधिवत्ते ह्युपस्थिताः ॥

गणग्रहणं समूहमात्रोपलक्षणम् । तेन पाषंडादयोऽपि भेदकारिणो राज्ञा दण्डनीयाः विशेषग्रहणं शारीरदण्डस्यापि ज्ञापनार्थम् । पाषंडादीनां धर्मकर्मादिकं राज्ञा प्रतिपालनीयम् ।

तथा च **स** एव

यो धर्मः कर्म यच्चैषामुपस्थानविधिश्च यः ।
यच्चैषां वृत्त्युपादानमनुमन्येत तत्तथा ॥

धर्मो जटाबन्धनादिः । कर्म पर्युषितभिक्षाटनादिकम् । उपस्थानविधिः समुदायकार्यार्थं पटहादिध्वनिमाकर्ण्य एकत्र मण्डपादौ मेलनम् । वृत्त्युपादानं जीवनाय तापसादिवेषपरिग्रहः । एषां पाषण्डादीनाम् ।

अन्यदपि राज्ञः कृत्यं दर्शयति **स** एव

प्रतिकूलं च यद्राज्ञः प्रकृत्याऽवमतं च यत् ।
बाधकं च यदर्थानां तत्तेभ्यो विनिवर्तयेत् ॥

राजा प्रतिकूलं शूद्रकर्तृकधर्मविवेचनादिकम्, तस्य राष्ट्रादिभ्रंशहेतुत्वात् । प्रकृत्या स्वभावेन अवमतं निन्दितम् । पाषण्डादीनां ताम्बूलभक्षणादि । अर्थानां बाधकं रसवादादिकं विनिवर्तयेत्, राजेति शेषः ।

तथा

मिथःसङ्घातकरणमहिते शस्त्रधारणम् ।
परस्परोपतापं च तेषां राजा निवर्तयेत् ॥

अहिते कलहादौ ।

तथा

दोषवत्कारणं यत्स्यादनाम्नायप्रकल्पितम् ।
प्रवृत्तमपि तद्राजा श्रेयस्कामो निवर्तयेत् ॥

लोभादिदुष्टहेतुकं वेदादिविरुद्धं पाषण्डिपरिकल्पितं रण्डायाः वेश्यात्वादिकं चिरप्रवृत्तमपि राजा निवर्तयेदित्यर्थः ।

बृहस्पतिः

मुख्यैः सह समूहानां विसंवादो यदा भवेत् ।
तदा निरारयेद्राजा स्वमार्गे स्थापयेच्च तान् ॥

मुख्यैः समूहिकार्यचिन्तकतया अधिकृतैः समूहिषु क्रियमाणमौद्धत्यं निवर्तयेदित्यर्थः । यत्र मुख्यः स्वमार्गे राज्ञा स्थापयितुं न शक्यते ।

तद्विषये याज्ञवल्क्यः

गणद्रव्यं हरेद्यस्तु संविदं लङ्घयेत्तु यः ।
सर्वस्वहरणं कृत्वा तं राष्ट्राद्विप्रवासयेत् ॥

यः पुनर्गणस्य ग्रामादिजनसमूहस्य सम्बन्धि साधारणं द्रव्यमपहरति । राजकृतं गणकृतं वा समयं योऽतिक्रामेत् तदा तदीयं सर्वं वस्त्वपहृत्य स्वराष्ट्रान्निष्कामयेदित्यर्थः ।

कात्यायनः

साहसी भेदकारी च गणद्रव्यविनाशकः ।
उच्छेद्याः सर्व एवैते विख्याप्यैव नृपे भृगुः ॥

अत्र गणेनेति शेषः । तथा चायमर्थः—साहसित्वगणद्रव्यविनाशकत्वानि नृपे प्रख्याप्य गणेनैवैते समुच्छेद्या इति । कचित्तु नृपैरिति पाठः, तस्मिन्पक्षे नृपाणामेव समुच्छेदनकर्तृत्वम् ।

अत्र मनुः

यो ग्रामदेशसङ्घानां कृत्वा सत्येन संविदम् ।
विसंवदेन्नरो लोभात्तं राजा विप्रवासयेत् ॥
निगृह्य दापयेच्चैनं समयव्यभिचारिणम् ।
चतुःसुवर्णान् षण्निष्कांश्छतमानं च राजतम् ॥
एतद्दण्डविधिं कुर्याद्धार्मिकः पृथिवीपतिः ।
ग्रामजातिसमूहेषु समयव्यभिचारिणाम् ॥

सत्येन शपथेन । चतुःसुवर्णानिति । चतुर्भिः सुवर्णानिति (?) । चतुर्भिः सुवर्णैर्ये निष्कास्तान्षट्पद्पलानीत्यर्थः । इदं च विशेषणं दीनारादिनिष्कव्युदासाय । अयं च दण्डविकल्पो दण्डनीयपुरुषापराधार्थानुसारेण व्यवस्थितो द्रष्टव्यः ।

बृहस्पतिः

संभूयैकमतं कृत्वा राजभाव्यं हरन्ति ये ।
ते तदष्टगुणं दाप्या वणिजश्च पलायिनः ॥

राजभाव्यं राजदेयम् ।

कात्यायनः

एकपात्रेऽथ पङ्क्तौ वा संयोक्ता येन यो भवेत् ।
अकुर्वंस्तत्तदा दण्ड्यस्तस्य दोषमदर्शयन् ॥

राज्ञो गणिषु कर्तव्यमभिदधानः समूहद्रव्यापहारिणं प्रत्याह **याज्ञवल्क्यः**

समूहकार्य आयातान्कृतकार्यान्विसर्जयेत् ।
सदानमानसत्कारैः पूजयित्वा महीपतिः ॥
समूहकार्यप्रहितो यल्लभेत तदर्पयेत् ।
एकादशं गुणं दाप्यो यद्यसौ नार्पयेत्स्वयम् ॥

यल्लभेतेत्यत्र समूहमान्यत्वनिमित्तेनेति शेषः । निजसेवाध्ययनादिनिमित्तेन तु लब्धस्य प्रातिस्विकत्वेन समुदायार्पणानुपपत्तेः । अर्पितं च द्रव्यं सर्वे गणिनः समं विभज्य गृह्णीयुः ।

ततो लभ्येत यत्किञ्चित्सर्वेषामेव तत्समम् ।

इति बृहस्पतिस्मरणात् ।

विभज्यग्रहणं च बहुतरद्रव्यविषयम् । तुच्छद्रव्यं पुनः समूहेन निःस्वादिभ्यो देयम् । यतः स एवाह

षाण्मासिकं मासिकं वा विभक्तव्यं यथांशतः ।
देयं वा निःस्ववृद्धान्धस्त्रीबालातुररोगिषु ॥ इति ।

षाण्मासिकं एकस्य पुरुषस्यैकस्य कुटुम्बस्य वा षण्मासनिर्वाहाय पर्याप्तम् । एवं मासिकमपि । इतोऽल्पं तु तुच्छं दरिद्रादिभ्यो निवेदनीयमित्यर्थः ।

कात्यायनः

गणमुद्दिश्य यैः किंचित्कृत्स्नर्णं भक्षितं भवेत् ।
आत्मार्थं विनियुक्तं च देयं तैरेव तद्भवेत् ॥

समूहकार्यार्थं प्रहितैरेव तदृणं प्रतिदेयं भवतीत्यर्थः । परिपणितपाथेयस्य तत्कालमनर्पणेऽपि तैः कृतं तदधिकमृणं गणेन न देयं, एवशब्दप्रयोगात्, किन्तु पाथेयमात्रमेव ।

तथा

गणानां श्रेणिवर्गाणां गताः स्युर्ये तु मध्यताम् ।
प्राक्तनस्य धनर्णस्य समांशाः सर्व एव ते ॥
तथैव भोज्यवैभाज्यदानधर्मक्रियासु च ।
समूहस्थोंऽशभागी स्यात् प्रगतस्त्वंशभाङ् तु ॥

गणक्षोभप्रसादाभ्यां मध्ये बहिर्भावमन्तर्भावं वा सादयन्तः प्राक्तनमृणं धनं वा समं विभज्य गृह्णीयुरित्यर्थः ।

---o---

## अथ क्रीतानुशयो निरूप्यते

तल्लक्षणं च **नारदेन** दर्शितम्

क्रीत्वा मूल्येन यः पण्यं क्रेता न बहु मन्यते ।
क्रीतानुशय इत्येतद्विवादपदमुच्यते ॥ इति ।

अनुशयः पश्चात्तापः । क्रेयं वाऽनुशयानुत्पत्तये परीक्ष्य विधेयम् ।

यतः **स** एवाह

क्रेता पण्यं परीक्षेत प्राक् स्वयं गुणदोषतः । इति ।

गुणदोषतः अदुष्टत्वदुष्टत्वाभ्याम् ।

**बृहस्पतिर**पि

परीक्षेत स्वयं पण्यमन्येषां च प्रदर्शयेत् । इति ।

अन्येषां पण्यगुणदोषविदां परीक्षणं च चर्मादौ सद्य एव कार्यम् ।

तथा च **व्यासः**

चर्मकाष्ठेष्टकासूत्रधान्यासवरसस्य च ।
वसुकुप्यहिरण्यानां सद्य एव परीक्षणम् ॥

वसुशब्दो गोबलीवर्दन्यायेनाभिहितेतरार्थपरः ।

कुप्यं सुवर्णरजतव्यतिरिक्तं त्रपुसीसादिकम् । अत्यादरेण परीक्षितं चर्मादि न त्याज्यमित्याह **बृहस्पतिः**

परीक्षितं बहुमतं गृहीता न पुनस्त्यजेत् ।

क्रीतमिति शेषः ।

**नारदो**ऽपि

परीक्षाभिमतं क्रीतं विक्रेतुर्न भवेत्पुनः ।

दोषदर्शनेऽपीति शेषः ।

दोह्यादिपरीक्षावधिमाह **याज्ञवल्क्यः**

दशैकपञ्चसप्ताहमासत्र्यहार्धमासिकम् ।
बीजायोवाह्यरत्नस्त्रीदोह्यपुंसां परीक्षणम् ॥

**नारदो**ऽपि

त्र्यहाद्दोह्यं परीक्षेत पञ्चाहाद्वाह्यमेव च ।
मुक्तावज्रप्रवालानां सप्ताहं स्यात्परीक्षणम् ।
द्विपदामर्धमासं [illegible] पुंसां तद्द्विगुणं स्त्रियाः ॥
दशाहः सर्वबीजानामेकाहो लोहवाससाम् ।

अतोऽर्वाक्पण्यदोषस्तु यदि स ज्ञायते क्वचित् ।
विक्रेतुः प्रतिदेयं तत् क्रेता मूल्यमवाप्नुयात् ॥ इति ।

अत्र सर्वत्र त्र्यहपञ्चाहत्वादिकं क्रयदिनमपेक्ष्येति मन्तव्यम् । एतच्च क्रयानन्तरं दोह्यादि-परीक्षणं 'विक्रेतुः प्रतिदेयं तदि'त्यादिवचनादवगम्यते । स ज्ञायत इत्यनेन ज्ञानतः सिद्धिरुक्ता । तेन त्र्यहाद्यभ्यन्तरे पूर्वोत्पन्नदोषपरिज्ञान एव प्रत्यर्पणादि न त्वपूर्वदोषोत्पत्तावित्यवगम्यते ।

अविज्ञातं तु यत्क्रीतं दुष्टं पश्चाद्विभावितम् ।
क्रीतं तत्स्वामिने देयं पण्यं कालेऽन्यथा न तु ॥

अविज्ञातमत्र परीक्षाशैथिल्यप्रयुक्तम् । कालस्त्र्यहादिरूपः । अन्यथा त्र्यहादिकालाति-क्रमे । क्रीतानुशयानुत्पत्त्यर्थं क्रयात्पूर्वं क्षयादिकं ज्ञातव्यम् ।

तदाह **नारदः**

क्रीत्वा नानुशयं कुर्याद्वणिक्पण्यविचक्षणः ।
क्षयं वृद्धिं च जानीयात्पण्यानां यस्य यादृशी ॥

अपचयादिकं विजानतोऽनुशयकरणे दण्डमाह **याज्ञवल्क्यः**

क्षयं वृद्धिं च वणिजा पण्यानामधिजानता ।
क्रीत्वा नानुशयः कार्यः कुर्वन् षड्भागदण्डभाक् ॥

षष्ठो भागश्च मूल्यापेक्षया ।

बीजादिव्यतिरिक्तोपभोगविनश्वरवस्तुप्रत्यर्पणे विशेषमाह **नारदः**

क्रीत्वा मूल्येन यः पण्यं दुष्क्रीतं मन्यते क्रयी ।
विक्रेतुः प्रतिदेयं तत्तस्मिन्नेवाह्न्यविक्षतम् ॥
द्वितीयेऽह्नि ददत्क्रेता मूल्यात्त्रिंशांशमावहेत् ।
द्विगुणं तु तृतीयेऽह्नि परतः क्रेतुरेव तत् ॥ इति ।

यः क्षयादिज्ञानाद्दुष्क्रीतं सम्पन्नमिति दृढमवगच्छति तेन दुष्क्रीतमविक्षतमविकृतं प्रति-देयम् । विकृतं चेद्वैकृत्यपरिहाराय मध्यस्थपरिकल्पितद्रव्यसहितमेव क्रयदिनेऽपि प्रतिदेयम् । द्विगुणं पञ्चदशांशकम् । परतश्चतुर्थाहादौ । यत्र त्र्यहादिपर्यन्तमेव परीक्षणं दोह्यादौ ।

तत्र विशेषमाह **कात्यायनः**

क्रीत्वा चानुशयात्पण्यं त्यजेद्दोह्यादि यो नरः ।
अदुष्टमेव काले तु स मूल्याद्दशमं हरेत् ॥

काले उक्तप्रत्यर्पणकाले ।

क्रीत्वा गच्छन्ननुशयं क्रयी हस्तमुपागतम् ।
षड्भागं तत्र मूल्यस्य दत्त्वा क्रीतं त्यजेद्भृगुः ।

यत्तु पण्यबहुदोषत्वेन ज्ञात्वाऽपि क्रीणाति न तस्य क्रयः परावर्तत इत्याह **नारदः**

परिभुक्तं तु यद्वासः क्लिष्टरूपं मलीमसम् ।
सदोषमपि तत्क्रीतं विक्रेतुर्न भवेत्पुनः ॥ इति ।

वास इत्युपलक्षणम् ।

---

## अथ विक्रीयासम्प्रदानम्

तत्र तत्स्वरूपमाह **नारदः**

विक्रीय पण्यं मूल्येन क्रेतुर्यन्न प्रदीयते ।
विक्रीयासंप्रदानं तद्विवादपदमुच्यते ॥ इति ।

तत्र विक्रेयवस्तुनो जङ्गमस्थावरभेदेन द्वैविध्यमादौ निरूपयति **स एव**

लोकेऽस्मिन्द्विविधं पण्यं जङ्गमं स्थावरं तथा । इति ।

तस्यैव पुनर्गणिमादिभेदेन षड्विधत्वमपि **तेनैवाभ्यधायि**

षड्विधस्तस्य तु बुधैर्दानादानविधिः स्मृतः ।
गणिमं तुलिमं मेयं क्रियया रूपतः श्रिया ॥ इति ।

गणिमं नालिकेरफलादि । तुलिमं कर्पूरादि । मेयं कुडवादिना व्रीह्यादि । क्रियया वाहन-दोहनादिरूपयोपलक्षितमश्वमहिष्यादि । रूपतः पण्याङ्गनादि । श्रिया कान्त्या रत्नादि ।

एवं षड्विधमपि पण्यं विक्रीयासम्प्रयच्छतो दण्डमाह **स एव**

विक्रीय पण्यं मूल्येन क्रेतुर्यो न प्रयच्छति ।
स्थावरस्य क्षयं दाप्यो जङ्गमस्य क्रियाफलम् ॥
अर्घश्चेदवहीयेत सोदयं पण्यमावहेत् ।
स्थायिनामेष नियमो दिग्लाभं दिग्विचारिणाम् ॥ इति ।

यो विक्रेता मूल्यं गृहीत्वा स्थावरात्मकं पण्यं विक्रीय जातानुशयः क्रेत्रे प्रार्थयमानाय (न) प्रयच्छति स तस्य क्षेत्रादेर्यावतः फलस्य क्षयः क्रेतुर्वृत्तस्तावत्फलसहितं क्षेत्रादिकं राज्ञा दाप्यः । एवं जङ्गमं महिष्यादिकमपि दोहनादिक्रियाफलक्षीरादिसहितं दाप्यः । एतच्च काला-पेक्षया दापनकाले अर्घस्य वृद्धौ । यदा त्वर्पणकाले अर्घह्रासवशात् क्रयकालापेक्षया तदेव पण्यं यावतांऽशेनाधिकं लभ्यते तावानंश उदयः तेन सहितं क्रेतारं प्रापयेत् । स्थायिनः दिग्विचारि-व्यतिरिक्ताः । यत्पण्यं यस्मिन्दिगन्तरे विक्रेतुं क्रीतं तत्पण्यं तस्मिन् दिगन्तरे विक्रीणानस्य यो लाभस्तेन सहितं विक्रीयाऽप्रयच्छन्विक्रेता दाप्यः ।

क्रयार्पणकालयोरर्घसाम्ये त्वाह याज्ञवल्क्यः

गृहीतमूल्यं यः पण्यं क्रेतुर्नैव प्रयच्छति ।
सोदयं तस्य दाप्योऽसौ दिग्लाभं वा दिगागते ॥ इति ।

विक्रीयानर्प्यमाणपण्यस्य यावती वृद्धिः ।

निक्षेपं वृद्धिशेषं च क्रयविक्रयमेव च ।
याच्यमानमदत्तं चेद्वर्धते पञ्चकं शतम् ॥

इत्यक्तवृद्धिप्रकारेणोक्तपरिमाणतः कल्प्यते स उदयस्तत्सहितं दाप्यः । अर्घसाम्ये पण्योपचय-रूपोदयासम्भवात् । अर्घसाम्यं च वृद्धिह्रासग्रहणाभावादवगम्यते ।

विष्णुः

गृहीतमूल्यो यः पण्यं क्रेतुर्नैव दद्यात्तस्यासौ सोदयं दाप्यो राज्ञा च पणशतं दण्ड्यः । इति ।

एतेन सर्वमूल्यग्रहणं एकदानेऽप्येतत्सर्वं द्रष्टव्यम् । मूल्यग्रहणार्थं तु धारणे न दोषः ।

तदुक्तं नारदेन

दत्तमूल्यस्य पण्यस्य विधिरेष प्रकीर्तितः ।
अदत्तेऽन्यत्र समयान्न विक्रेतुरतिक्रमः ॥

अदत्ते मूल्य इति । वाङ्मात्रेण क्रीते सतीत्यर्थः । समयो न परावर्तितव्यमित्येवमादिः । यत्र पुनर्वाङ्मात्रक्रयपरिहारार्थं विक्रेतुर्हस्ते क्रेत्रा किंचिद्दत्तं तत्र विक्रेता स्वदोषेण क्रयासिद्धौ तद्द्रव्यमविकृतमेव द्विगुणं क्रेत्रे दद्यात् ।

तथा च याज्ञवल्क्यः

सत्यङ्कारकृतं द्रव्यं द्विगुणं प्रतिपादयेत् ।

यदा क्रेतृदोषात्क्रयासिद्धिस्तदाह व्यासः

सत्यङ्कारं च यो दत्त्वा यथाकालं न दृश्यते ।
पण्यं भवेन्निसृष्टं तद्दीयमानमगृह्णतः ॥

सत्यङ्कारः द्रव्यस्य विक्रेतृगामित्वमेव पण्यस्योत्सर्गः । अन्यथा वाचिकक्रयनेतृतुल्यतेति विक्रेतुः सत्यङ्कारग्राहकता न स्यात् ।

याज्ञवल्क्यः

विक्रीतमपि विक्रेयं पूर्वक्रेतर्यगृह्णति ।
हानिश्चेत्क्रेतृदोषेण क्रेतुरेव हि सा भवेत् ॥

जातानुशये क्रेतरि पण्यमजिघृक्षति तत्पण्यमन्यत्र विक्रेयम् ।

विनैवानुशयमेकत्र विक्रीतस्य पुनरन्यत्र विक्रये सदोषस्य प्रच्छादितदोषतया विक्रये च स एव

अन्यहस्ते च विक्रीतं दुष्टं चादुष्टवद्यदि ।
विक्रीणीते दमस्तत्र मूल्यात्तु द्विगुणो भवेत् ॥

नारदोऽपि

निर्दोषं दर्शयित्वा तु सदोषं यः प्रयच्छति ।
स मूल्याद्द्विगुणं दाप्यो विनयं तावदेव तु ॥

बृहस्पतिरपि

ज्ञात्वा सदोषं यः पण्यं विक्रीणीते विचक्षणः ।
तदेव द्विगुणं दाप्यस्तत्समं विनयं तथा ॥

अकामतस्तु क्रयपरावर्तनमेव ।

तथा अन्यत्रापि क्वचित् क्रयपरावर्तनमाह स एव

मत्तोन्मत्तेन विक्रीतं हीनमूल्यं भयेन वा ।
अस्वतन्त्रेण मूढेन त्याज्यं तस्य पुनर्हरेत् ॥

मनुः

क्रीत्वा विक्रीय वा किञ्चिद्यस्येहानुशयो भवेत् ।
सोऽन्तर्दशाहे तद्द्रव्यं दद्याच्चैवाददीत च ॥
परेण तु दशाहस्य न दद्यान्नापि दापयेत् ।
आददानोऽददच्चैव राज्ञा दण्ड्यः शतानि षट् ॥

शतानीत्यत्र पणानामिति शेषः ।

कात्यायनः

क्रीत्वा प्राप्तं न गृह्णीयाद्यो न दद्याददूषितम् ।
स मूल्याद्दशभागं तु दत्त्वा तद्द्रव्यमाप्नुयात् ॥
अप्राप्तेऽर्थे क्रियाकारे कृते नैव प्रदापयेत् ।
एवं धर्मो दशाहात्तु परतोऽनुशयो न तु ॥

अदूषिते नानुशयः कार्यः, दूषितेऽपि दशात्परतो न कार्य इत्यर्थः ।

याज्ञवल्क्यः

राजदैवोपघातेन पण्ये दोषमुपागते ।
हानिर्विक्रेतुरेवासौ याचितस्याप्रयच्छतः ॥

क्रेत्रा प्रार्थितस्यापि पण्यस्य विक्रेत्राऽसमर्पितस्य दैवराजोपघाते विक्रेतुरेवासौ हानिः, नष्टसदृशं च पण्यं क्रेत्रे देयम् ।

नारदः

उपहन्येत वा पण्यं दह्येतापह्रियेत वा ।
विक्रेतुरेव सोऽनर्थो विक्रीयासंप्रयच्छतः ॥

तथा

दीयमानं न गृह्णाति क्रीतं पण्यं तु यः क्रयी ।
स एवास्य भवेद्दोषो विक्रेतुर्योऽप्रयच्छतः ॥

यत्र विक्रेता न याचितः न च क्रयी दीयमानाऽग्राही उपागतश्च पण्यदोषस्तत्र द्वयोः समा हानिः कल्पनीया, क्रयानन्तरमर्पणग्रहणशैथिल्येन द्वयोरप्यपराधसाम्यात् ।

नारदः

लाभार्थं वणिजां सर्वपण्येषु क्रयविक्रयः ।
स च लाभोऽर्घमासाद्य महान् भवति नैव वा ॥
तस्माद्देशे च काले च प्रक्रमेतार्घविद्वणिक् ।
अजिह्मेन प्रवर्तेत श्रेयानेवं वणिक्पथः ॥

इति विक्रीयासम्प्रदानम्

---

## अथ क्षेत्रजविवादः

तत्र तत्स्वरूपमाह नारदः

सेतुकेदारमर्यादा विकृष्टाकृष्टनिश्चया ।
क्षेत्राधिकारा यत्र स्युर्विवादः क्षेत्रजः स्मृतः ॥

सेतुर्जलप्रवाहबन्धः । केदारः क्षुद्रसेतुपरिकल्पितः प्रदेशः । मर्यादाऽत्र सीमा । विकृष्टो लाङ्गलप्रहतः प्रदेशः । क्षेत्राधिकाराः क्षेत्रविषयाः ।

तद्भेदानाह कात्यायनः

आधिक्यं न्यूनता चांशे अस्तिनास्तित्वमेव च ।
अभोगभुक्तिः सीमा च षड् भूवादस्य हेतवः ॥

ममात्र दशनिवर्तनाया भूमेरधिका भूरस्तीति केनचिदुक्ते दशनिवर्तनैव नाधिकेत्याधिक्यनिबन्धनो विवादः । नैतावती भूस्त्वदीया, किन्तु न्यूनैवेत्युक्ते न्यूनताविषयः । अस्यां भुवि ममांशोऽस्तीत्युक्ते नेत्येवंविधोंऽशोऽस्तित्वनिबन्धनः । अत्र तवांशो नास्तीत्युक्तेऽस्त्येवेत्येवंरूपो

नास्तित्वे निमित्तकः। मदीया भूस्त्वया प्राग्भुक्तैव भुज्यत इत्युक्ते चिरन्तन्येव भुक्तिरित्यभोगभुक्तिकारितः। मदीयाया भूमेरियं मर्यादेत्युक्ते नेत्येवंविधः सीमासम्भ्रमः।

तद्भेदमाह **नारदः**

ध्वजिनी मत्स्यिनी चैव नैधानी भयवर्जिता।
राजशासननीता च सीमा पञ्चविधा स्मृता॥

ध्वजिनी वृक्षादिना लक्षिता। मत्स्यिनी तडागादिना। नैधानी निखाततुषाङ्गारादिना लक्षिता। भयवर्जिता वादिनोर्मिथःसम्प्रतिपत्त्या कृता। राजशासननीता ज्ञातृचिह्नयोरभावे राज्ञा स्वेच्छया प्रवर्तिता।

सीमानियामकश्च ग्रामादिनिवेशकाले कार्य इत्याह **बृहस्पतिः**

निवेशकाले कर्तव्यः सीमाबन्धविनिश्चयः।
प्रकाशोपांशुचिह्नत्वाल्लक्षितः संशयापहः॥

विनिश्चीयते सीमा येनेति विनिश्चयो नियामकः। उपांशु गुप्तम्।

प्रकाशाप्रकाशचिह्नानि च **मनुना** दर्शितानि

सीमावृक्षांस्तु कुर्वीत न्यग्रोधाश्वत्थकिंशुकान्।
शाल्मलीन् शालतालांश्च क्षीरिणश्चैव पादपान्॥
गुल्मान्वेणूंश्च विविधान् शमीवल्लीः स्थलानि च।
शरान्कुब्जकगुल्मांश्च यथा सीमा न नश्यति॥
तडागान्युदपानानि वाप्यः प्रस्रवणानि च।
सीमासन्धिषु कार्याणि देवतायतनानि च॥
उपच्छन्नानि चान्यानि सीमालिङ्गानि कारयेत्।
सीमाज्ञाने नृणां वीक्ष्य नित्यं लोके विपर्ययम्॥
अश्मनोऽस्थीनि गोवालांस्तुषान् भस्म कपालिकाः।
करीषमिष्टकांगारांश्छर्करा वालुकास्तथा॥
यानि चैवंप्रकाराणि कालाद्भूमिर्न भक्षयेत्।
तानि सन्धिषु सीमायामप्रकाशानि कारयेत्॥

सीमावृक्षान् सीमाचिह्नवृक्षान्। गुल्मान् बीजपूरकादीन्। वल्लीः करंजादिलताः। स्थलानि मृत्कूटाः। कुब्जकगुल्मान् कुब्जकरण्डान्। उदपानानि कूपो वाप्यो दीर्घिकाः। (इष्टकाः) पक्वघटादिकर्परान्, शर्कराः पाषाणवत्कठिना मृदः।

**नारदोऽपि**

वापीकूपतडागानि चैत्यारामसुरालयाः।
स्थलनिम्ननदीस्रोतःशरगुल्मनगादयः॥

प्रकाशचिह्नान्येतानि सीमायां कारयेत्तदा ।
करीषास्थितुषाङ्गारशर्कराश्मकपालिकाः ॥
सिकतेष्टकगोवालकार्पासास्थीनि भस्म च ।
प्रक्षिप्य कुम्भेष्वेतानि सीमान्तेषु निधापयेत् ॥

निम्नं परिखा । शरस्तृणविशेषः । नगः पर्वतो वृक्षो वा । आदिशब्दाद्धर्मवल्मीकादिपरिग्रहः । एतानि च साहजिकानि स्वयं कृतानि च लिङ्गानि प्रथमवयसां व्यवहारसौकर्याय स्थविरैः प्रदर्शनीयानि ।

तथा च बृहस्पतिः

ततः पौगण्डबालानां प्रयत्नेन प्रदर्शनात् ।
ते चाप्येवं शिशूनां ते दर्शयेयुस्तथैव च ॥
एवं परम्पराज्ञाने सीमाभ्रान्तिर्न जायते ।

पौगण्डबाला ईषत्प्रबुद्धा बालाः ।

लिङ्गनिरूपणानन्तरं मनुः

एतैर्लिङ्गैर्नयेत्सीमां राजा विवदमानयोः ।
पूर्वभुक्त्या च सततमुदकस्यागमेन च ॥

नयेत् निर्णयेत् । उदकस्यागमेन यत्र ग्रामद्वयोदकं मूर्च्छति तेनेत्यर्थः ।

लिङ्गानामसत्त्वे सतां वा संदिग्धत्वे पुनः स एव

यदि संशय एव स्याल्लिङ्गानामपि दर्शने ।
साक्षिप्रत्यय एव स्यात्सीमावादे विनिर्णयः ॥

लिङ्गानां लिङ्गतयोक्तानां वृक्षादीनां संशयो वृक्षाद्यन्तरदर्शनात् । साक्षिप्रत्ययः साक्षिकारणकः । विनिर्णयो लिङ्गानां सीमाया वा ।

सीमासाक्षिविषये बृहस्पतिः

आगमं च प्रमाणं च भोगं कालं च नाम च ।
भूभागलक्षणं चैव ये विदुस्तेऽत्र साक्षिणः ॥

आगमः सत्त्वापत्तिहेतुः प्रतिग्रहादिः । प्रमाणं निवर्तनादिः । अन्ये चालुब्धत्वपुत्रवत्त्वादयः साक्षिप्रकरणोक्ता अविरुद्धाः साक्षिसाधारणधर्मा अनुसन्धेयाः ।

एतेषां च यानुपन्यस्तानामभावे मनुः

साक्ष्यभावे तु चत्वारो ग्रामाः सीमान्तवासिनः ।
सीमाविनिर्णयं कुर्युः प्रयता राजसन्निधौ ॥

ग्रामाः ग्रामस्था जनाः । सीमान्तवासिनः मध्यभूतविवादास्पदग्रामयोः पर्यन्तेषु निरन्तरवासिनः प्रयता नियमिताः साक्ष्युक्तविधिना ।

सामन्ताभावे कात्यायनः

स्वार्थसिद्धौ प्रदुष्टेषु सामन्तेष्वर्थगौरवात् ।
तत्संसक्तैस्तु कर्तव्य उद्धारो नात्र संशयः ॥
संसक्तसक्तदोषे तु तत्संसक्ताः प्रकीर्तिताः ।
कर्तव्या न प्रदुष्टास्तु राज्ञा धर्मं विजानता ॥

तत्संसक्तैः सामंतानन्तरवासिभिः । उद्धारः समानिर्णयः । संसक्तसक्तदोषे इत्यत्र सक्तपदं सामन्तपरम् ।

तदुक्तं कात्यायनेन

संसक्तकास्तु सामन्तास्तत्संसक्तास्तथोत्तराः ।
संसक्तसक्तसंसक्ताः पद्माकाराः प्रकीर्तिताः ॥

पद्माकारा उत्तरोत्तरमण्डलाकाराः ।

के कुत्र सामन्ता इत्यपेक्षिते स एव

ग्रामो ग्रामस्य सामन्तः क्षेत्रं क्षेत्रस्य कीर्तितः ।
गृहं गृहस्य निर्दिष्टं सामन्तात्परिरभ्य हि ॥

अत्र ग्रामादिशब्दाः स्वस्वसम्बन्धिपुरुषपराः ।

सामन्ताद्यभावेऽपि स एव

तेषामभावे सामन्ता मौलवृद्धोद्धृतादयः ।
स्थावरे षट्प्रकारेऽपि कार्या नात्र विचारणा ॥

तेषां साक्षिणाम् ।

मौलादिस्वरूपं च तेनैव दर्शितम्

ये तत्र पूर्वसामन्ताः पश्चाद्देशान्तरं गताः ।
तन्मूलत्वात्तु ते मौला ऋषिभिः परिकीर्तिताः ॥
निष्पद्यमानं यैर्दृष्टं तत्कार्यं तद्गुणान्वितैः ।
वृद्धा वा यदि वाऽवृद्धास्ते तु वृद्धाः प्रकीर्तिताः ॥
उपश्रवणसम्भोगकार्याख्यानोपचिह्निताः ।
उद्धरन्ति पुनर्यस्मादुद्धृतास्ते पुनर्गताः ॥

एतेषां च सामन्तादीनां पूर्वपूर्वेषां प्रकटदोषसद्भावेऽसन्निधाने वा उत्तरोत्तरेषां निर्णयकत्वम् ।

सामन्तादिषु विशेषमाह स एव

सामन्ताः साधनं पूर्वं निर्दोषाः स्युर्गुणान्विताः ।
द्विगुणास्तूत्तरा ज्ञेयास्ततोऽन्ये त्रिगुणाः स्मृताः ॥

साक्ष्यादीनामुद्धृतान्तानामभावे **मनुः**

सामन्तानामभावे तु मौलानां सीमसाक्षिणाम् ।
इमानप्यनुयुञ्जीत पुरुषान्वनगोचरान् ॥
व्याधान् शाकुनिकान् गोपान् कैवर्तान् मूलखानकान् ।
व्यालग्राहानुञ्छवृत्तीनन्यांश्च वनगोचरान् ॥

अनुयुञ्जीत सीमालिङ्गानि पृच्छेत् । मूलखानकान् वृत्त्यर्थं ये मूलं खनंति तान् । अन्यान् शबरादीन् । एतेषां वचनादिमन्निकृष्टविप्रकृष्टग्रामादिसीमालिङ्गनिर्णायकत्वं यथासम्भवमवगन्तव्यम् । ते च साक्षिसामन्तादयो यथानिर्णयं युः ।

तथा **बृहस्पतिः**

शपथैः शपिताः स्वैः स्वैर्ब्रूयुः सीमाविनिर्णयम् ।
दर्शयेयुश्च लिङ्गानि तत्प्रमाणमिति स्थितिः ॥

स्वैः स्वैः 'सत्येन शापयेद्विप्र'मित्याद्युक्तैः ।

**मनुरपि**

ग्रामेयककुलानां तु समक्षं सीमसाक्षिणः ।
प्रष्टव्याः सीम्नि लिङ्गानि तयोश्चैव च वादिनोः ॥
ते पृष्टास्तु यथा ब्रूयुः समस्ताः सीम्नि निर्णयम् ।
निबध्नीयात्तथा सीमां सर्वांस्तांश्चैव नामतः ॥
शिरोभिस्ते गृहीत्वोर्वीं स्रग्विणो रक्तवाससः ।
सुकृतैः शापिताः स्वैः स्वैर्नयेयुस्ते समञ्जसम् ॥

ग्रामेयककुलानां ग्रामीणसमूहानाम् । वादिनोः समक्षमित्यन्वयः । समस्ता मिलिताः, न तु व्यस्ताः । निबध्नीयादित्यादि । साक्ष्यादिभिर्निश्चितां सीमानं तत्प्रदर्शिताखिलचिह्नयुक्तां साक्ष्यादिनामान्वितां चाविस्मरणार्थं पत्रे समारोपयेत् । उर्वीं मृत्खण्डम् । स्रग्विणः रक्तमाल्या नराः । एतच्च वास्तुपुरुषस्य रूपमिति तद्रूपधारिभिः सीमानयनमुक्तम् । समञ्जसं यथार्थम् ।

**याज्ञवल्क्योऽपि**

सामन्ता वा समग्रामाश्चत्वारोऽष्टौ दशापि वा ।
रक्तस्रग्वसनाः सीमां नयेयुः क्षितिधारिणः ॥

वाशब्दः साक्ष्यभिप्रायेण । समग्रहणं विषमसंख्यानिवृत्त्यर्थम् । चत्वार इत्यादिविशेषोपादानमितरसमसंख्यानिवृत्त्यर्थम् ।

विषमसंख्यास्वप्येकत्वसंख्यां विशिष्य निषेधति **नारदः**

नैकः समुन्नयेत्सीमां नरः प्रत्ययवानपि ।
गुरुत्वादस्य कार्यस्य क्रियैषा बहुषु स्थिता ॥

अत्र प्रतिप्रसवमाह बृहस्पतिः

> ज्ञातृचिह्नविनाशे तु एकोऽप्युभयसंमतः ।
> रक्तमाल्याम्बरधरो मृदमादाय मूर्धनि ॥
> सत्यव्रतः सोपवासः सीमानं दर्शयेन्नरः ।

साक्ष्यादिवनगोचरान्तानां सीमाज्ञातॄणां प्रकाशोपांशुलिङ्गानां चाभावे उक्तविशेषणविशिष्टः सीमाभिज्ञः कश्चिन्नरः पूर्वोक्तविधिना चङ्क्रमाणः सीमानं दर्शयेदित्यर्थः ।

अत्र चङ्क्रमणानन्तरं सार्धमासान्ते निर्णयो नार्वागित्याह कात्यायनः

> सीमाचङ्क्रमणे कोशे पादस्पर्शे तथैव च ।
> त्रिपक्षपक्षसप्ताहं दैवराजिकमिष्यते ॥

स्थलादिचिह्नाभावे साक्षिसामन्तप्रभृतीनां सीमाज्ञाने उपायान्तरमाह नारदः

> निम्नगापहृतोत्सृष्टनष्टचिह्नासु भूमिषु ।
> तत्प्रदेशानुमानाच्च प्रमाणाद्भोगदर्शनात् ॥

निम्नगया अपहृतेनापहरणेनोत्सृष्टानि स्वकीयस्थानाद्भ्रष्टानि नष्टानि वा चिह्नानि यासु तासु भूमिषु । तत्प्रदेशानुमानात् उत्सृष्टनष्टचिह्नानां प्राचीनप्रदेशानुमानात् । ग्रामादारभ्य शतहस्तमितं क्षेत्रमस्य ग्रामस्य प्राच्यां दिशीत्येवंरूपात्प्रमाणाद्वा यादिप्रतिवादिसमक्षमविप्रतिपन्नायाः स्मार्तकालीनभुक्तेर्वा निर्णयं कुर्युः ।

सर्वथा ज्ञातृचिह्नाभावे नारदः

> यदा तु न स्युर्ज्ञातारः सीमाया च न च लक्षणम् ।
> तदा राजा द्वयोः सीमामुन्नयेदिष्टतः स्वयम् ॥

इष्टतः इच्छातः इत्यर्थः ।

एतद्बाधकमाह मनुः

> सीमायामविषह्यायां स्वयं राजैव धर्मवित् ।
> प्रदिशेद्भूमिमेकेषामुपकारादिति स्थितिः ॥

अविषह्यायां सर्वथा निर्णेतुमशक्यायाम् । यत्र विवादविषया भूरेकस्य निरवकाशस्य ग्रामक्षेत्रादेरत्यन्तोपकारिका, इतरस्य तु सावकाशस्य न तथा तत्र महोपकारार्थं निरवकाशग्रामादिशेषतया तां भूमिं प्रवेशयेदिति । एवमुक्तेन प्रकारेण सीमानिर्णयो नावेदनानन्तरमेव ऋणादिनिर्णयवत्सर्वदा शक्यः, वर्षासु कालान्तरे वा जलसस्यादिभिराच्छादितेषु सेत्वादिसीमालिङ्गेषु कर्तुमशक्यत्वात् । तेन यदा जलसस्यादितिरोधापकाभावस्तदा कार्यः ।

तदाह मनुः

> सीमां प्रति समुत्पन्ने विवादे ग्रामयोर्द्वयोः ।
> ज्येष्ठे मासि नयेत्सीमां सुप्रकाशेषु सेतुषु ॥

ग्रामशब्देन ग्रामाधिपती लक्ष्येते । ज्येष्ठे मासीति मासीतरस्याप्युपलक्षणम् । ग्रामग्रहण क्षेत्रादेरुपलक्षण, तत्रापि सीमाविवादसद्भावात् ।

नद्यादिहृतोत्सृष्टभूमिविषये विशेषमाह **बृहस्पतिः**

अन्यग्रामात्समाहृत्य दत्ताऽन्यस्य यदा मही ।
महानद्याऽथवा राज्ञा कथं तत्र विचारणा ॥
नद्युत्सृष्टा राजदत्ता यस्य तस्यैव सा मही ।
अन्यथा न भवेल्लाभो नराणां राजदैविकः ॥
क्षयोदयो जीवनं च दैवराजवशान्नृणाम् ।
तस्मात्सर्वेषु कार्येषु तत्कृतं न विचालयेत् ॥

तत्कृत दैवराजकृतम् । यद्यपि 'दैव दिष्ट भागधेय भाग्य'मिति वचनाद्दैवशब्दो भाग्यपर्यायस्तथा नदीकृतमपि दैवकृतमित्युच्यते ।

तथा च स एव

ग्रामयोरुभयोर्मध्ये मर्यादाकल्पिका नदी ।
कुरुते दानहरणं भाग्याभाग्यवशान्नृणाम् ॥
एकत्र कूलपातं तु भूमेरन्यत्र संस्थितम् ।
नदीतीरे प्रकुरुते तस्य ता न विचालयेत् ॥

तस्य नदीवशात्प्राप्तभूमिकस्य ता नदीकृतभूमिसंस्थितिं पूर्वस्वामी न विचालयेदित्यर्थ । एतदनुप्तसस्यतीरविषयम् ।

क्षेत्रं ससस्यमुल्लङ्घ्य भूमिश्छिन्ना यदा भवेत् ।
नदी स्रोतःप्रवाहेण पूर्वस्वामी लभेत ताम् ॥

इति ससस्यभूतीरविषये **तेनैव** विशेषाभिधानात् । भूमिच्छेदानन्तरमपि यावदुप्तसस्यफललाभस्तावल्लभत इत्यर्थ । फलप्राप्तिसमनन्तरमनन्तरोक्तवचनविषयत्वमेव ।

राजदत्तामपि भुव कचित्पूर्वस्वामी विचालयेत्कचिन्न विचालयेदित्याह **स एव**

या राज्ञा क्रोधलोभेन छलान्यायेन वाऽन्यतः ।
प्रदत्ताऽन्यस्य तुष्टेन न सा सिद्धिमवाप्नुयात् ॥
प्रमाणरहिता भूमिं भुञ्जतो यस्य या कृता ।
गुणाधिका भवेद्दत्ता तस्य ता न विचालयेत् ॥ इति ।

प्रमाणरहिता लिखितादिप्रमाणशून्यामित्यर्थ ।

उक्तसाक्षिसामन्तादिविधिं आरामादिष्वतिदिशति **याज्ञवल्क्यः**

आरामायतनग्रामनिपानोद्यानवेश्मसु ।
एष एव विधिर्ज्ञेयो वर्षाम्बुप्रवहादिषु ॥

आराम उपवनम् । आयतनं देवालयादि । ग्रामग्रहणं पत्तननगराद्युपलक्षणत्वम् । निपानं कूपतडागादिकं जलस्थानम् । उद्यानं राजादिक्रीडार्थो भूभागः । एष विधिः साक्षिसामन्तादि-लक्षणम् । वर्षाम्बुप्रवहः प्रवर्षणोद्भूतजलप्रवाहेषु अनयोर्गृहयोर्मध्ये जलौघः प्रवहत्यनयोर्वेत्येवं प्रकारे विवादे । आदिपदं प्रासादादीनां परिग्रहार्थम् ।

तथा च **कात्यायनः**

क्षेत्रकूपतडागानां केदारारामयोरपि ।
गृहप्रसादावसथनृपदेवगृहेषु च ॥

गृहादिविषये विशेषमाह **बृहस्पतिः**

निवेशकालादारभ्य गृहवार्यापणादिकम् ।
येन यावद्यथा भुक्तं तस्य तं न विचालयेत् ॥

निवेशकालात् गृहादिनिर्माणकालात् ।

तथा

वातायनाः प्रनाड्यश्च तथा निर्यूहवेदिकाः ।
चतुःशालं स्यन्दनिकां प्राङ्निविष्टं न चालयेत् ॥

प्रनाड्यो दार्वादिकृता जलमार्गाः । निर्यूहो गृहद्वारोपान्तनिःसृतो दारुविशेषः । चतुः-शालं चतुर्णां शालानां समाहारः । एतच्च तृणरचितगृहोपलक्षणार्थमुक्तम् । स्यन्दनिका पटलप्रान्तः ।

**कात्यायनः**

मेखलाभ्रमनिष्कासगवाक्षान्नोपरोधयेत् ।
प्रणालीं गृहवास्तुं च पीडयन् दण्डभाग्भवेत् ॥
निवेशसमयादूर्ध्वं नैते योज्याः कदाचन ।
दृष्टिप्रासं प्रणालं च न कुर्यात्परवेश्मनि ॥

मेखला गृहादिमूलबन्धः । भ्रमो जलनिःसरणम् । निष्कासो जननिःसरणमार्गः । नैते योज्या इत्यत्र परानिष्टकरतयेति शेषः । दृष्टिप्रासो गवाक्षः । परवेश्मसु परवेश्माभिमुखत्वेने-त्यर्थः । एवं कृते परानिष्टं भवतीत्यभिप्रायः ।

अनेनैवाभिप्रायेणाह **बृहस्पतिः**

वर्चःस्थानं वह्निचयं गर्तोच्छिष्टांबुसेचनम् ।
अरत्नारात्परकुड्यस्य न कर्तव्यं कदाचन ॥

वर्चःस्थानं विष्ठास्थानम् । अरत्नारादरत्निद्वयमविहायेत्यर्थः ।

अत एव **कात्यायनः**

विण्मूत्रोदकगर्तं च वह्निश्वभ्रनिवेशनम् ।
अरत्निद्वयमुत्सृज्य परकुड्यान्निवेशयेत् ॥

बृहस्पतिः

यान्त्यायान्ति जना येन पशवश्चानिवारिताः ।
तदुच्यते संसरणं न रोद्धव्यं तु केनचित् ॥

न रोद्धव्यमिति । शकटादिस्थापनादिनेति शेषः ।

कात्यायनः

सीमामध्ये तु जातानां वृक्षाणां क्षेत्रयोर्द्वयोः ।
फलं पुष्पं च सामान्यं क्षेत्रस्वामिषु निर्दिशेत् ॥
अन्यक्षेत्रेषु जातानां शाखाश्चान्यत्र संस्थिताः ।
स्वामिनं तं विजानीयाद्यस्य क्षेत्रेषु संस्थिताः ॥

सामान्यं साधारणम् ।

सेतुविषये नारदः

सेतुस्तु द्विविधो ज्ञेयः खेयो बन्ध्यस्तथैव च ।
तोयप्रवर्तनात् खेयो बन्ध्यः स्यात्तन्निवर्तनात् ॥

सेतुबन्धकमपि प्रति स एव

परक्षेत्रस्य मध्ये तु सेतुर्न प्रतिषिध्यते ।
महागुणोऽल्पदोषश्चेद्वृद्धिरिष्टा क्षये सति ॥

स्वक्षेत्रे परेण क्रियमाणः सेतुः स्वक्षेत्रेऽप्यपेक्षितोदकस्थापकत्वादिमहागुणवान् । स्वक्षेत्रनाशकत्वाभावाल्पदोषवान् ।

याज्ञवल्क्योऽपि

न निषेध्योऽल्पबाधस्तु सेतुः कल्याणकारकः ।
परभूमिं हरन् कूपः स्वल्पक्षेत्रो बहूदकः ॥

कूप इत्यत्र न निषेध्य इत्यनुषङ्गः । स्वल्पक्षेत्रः स्वल्पक्षेत्रव्यापी । बहूदको बहूपकारः । कूपग्रहणं वाप्याद्युपलक्षणार्थम् । अत्रोक्तहेतुवैपरीत्ये निषेध्य इत्यर्थादुक्तं भवति । स्वाम्याद्यनिवेदनपूर्वके सेतुप्रवर्तने स एव

स्वामिने यो निवेद्यैव क्षेत्रे सेतुं प्रवर्तयेत् ।
उत्पन्ने स्वामिनो भोगस्तदभावे महीपतेः ॥

क्षेत्रस्वामिनं तदभावे राजानं वाऽनुज्ञाप्यैव परेण परक्षेत्रे सेत्वादिः प्रवर्तनीय इति तात्पर्यम् ।

उत्सन्नसेतुविषये नारदः

पूर्वप्रवृत्तमुत्सन्नमपृष्ट्वा स्वामिनं तु यः ।
सेतुं प्रवर्तयेत्कश्चिन्न स तत्फलभाग्भवेत् ॥

मृते तु स्वामिनि पुनस्तद्वंश्ये वाऽपि मानवे ।
राजानमामन्त्र्य ततः कुर्यात् सेतुप्रवर्तनम् ॥ इति ।

कात्यायनः

अस्वाम्यनुमतेनैव संस्कारं कुरुते तु यः ।
गृहोद्यानतडागानां संस्कर्ता लभते न तु ॥
व्ययं स्वामिनि चापन्ने न निवेद्य नृपे यदि ।
अथावेद्य प्रयोक्ता तु तद्दत्तं लभते व्ययम् ॥

क्षेत्रकर्तृविषये बृहस्पतिः

गृहीत्वा वाहयेत्काले वापगोपनसङ्ग्रहान् ।
अकुर्वन्स्वामिने दाप्यो मध्ये कृष्टे शदं तु सः ॥

यः क्षेत्रस्वामिपार्श्वे अहमिदं क्षेत्रं कृक्ष्यामीति क्षेत्रं स्वीकरोति स ग्रीष्मादिकाले बलीवर्दादिना लाङ्गलादिकं वाहयेत् । वाहयेदित्येतत्तदादिफलसङ्ग्रहणान्तव्यापारोपलक्षणार्थम् । वापो बीजानाम् । गोपनं सस्यादेः । सङ्ग्रहः फलस्य । मध्ये कृष्ट इत्येतत् क्षेत्राङ्गीकारादुपरि कृषिकरणकालेऽर्धेऽतीते ज्ञेयम् ।

याज्ञवल्क्योऽपि

फालाहतमपि क्षेत्रं यो न कुर्यान्न कारयेत् ।
तं प्रदाप्याकृष्टशदं क्षेत्रमन्येन कारयेत् ॥

फालाहतं फालेनेषद्विदारितं सम्यग्बीजवापनायोग्यमपि यः कर्षको न कुर्यात् अङ्गीकारादनूत्सृजति । न चान्येन कर्षयति तं कर्षकं अकृष्टस्य शदं फलं तत्रोत्पत्त्यर्हं यावत्सामन्तादिपरिकल्पितं तावत्प्रदाप्यान्येन कर्षयेदित्यर्थः ।

बृहस्पतिः

क्षेत्रं गृहीत्वा यः कश्चिन्न कुर्यान्न च कारयेत् ।
स्वामिने स शदं दाप्यो राज्ञे दण्डं च तत्समम् ॥

तत्समं स्वामिग्राह्यसस्यसमम् । इदं च वचनं क्षेत्रमङ्गीकृत्य संपूर्णे कृषिकाले उपेक्षाविषये बोद्धव्यम् ।

शदोऽपि कियानित्यपेक्षिते स एव

चिरावसन्ने दशमं कृष्यमाणे तथाऽष्टमम् ।
सुसंस्कृते तु षष्ठं स्यात्परिकल्प्य यथास्थिति ॥

चिरावसन्ने चिरकालमकृष्टे क्षेत्रे । कृक्ष्यामीति स्वीकृत्योपेक्षिते कर्षणे सति यल्लभ्यते तस्य दशमं भागं मूल्यद्वारा दाप्यः । कृष्यमाणेऽचिरावसन्ने । उपेक्षमाण इति सर्वत्र ज्ञेयम् ।

**नारदः**

अशक्तप्रेतनष्टेषु क्षेत्रिकेष्वनिवारितः ।
क्षेत्रं चेद्विकृषेत् कश्चिदश्नुवीत स तत्फलम् ॥

क्षेत्रं खिलम् । अशक्ताः क्षेत्रकारणसामर्थ्यरहिताः । नष्टाः कुत्र वा याता इति बहुसमया-विज्ञाताः । परक्षेत्रेऽप्येवंभूतविषये कर्तुः फलोपभोगो न फलदण्डदापनमर्हतीत्यभिप्रायः ।

प्रसङ्गतः क्षेत्राधिपमपि प्रत्याह **स एव**

विकृष्यमाणे क्षेत्रे तु क्षेत्रिकः पुनरात्रजेत् ।
खिलोपचारं तत्सर्वं दत्वा क्षेत्रमवाप्नुयात् ।

खिलोपचारः खिलखण्डनार्थो व्ययः । तथा

अशक्तितो न दद्याचेत्खिलार्थे यः कृतो व्ययः ।
तदष्टभागहीनं तु कर्षकः फलमाप्नुयात् ॥
वर्षाण्यष्टौ स भोक्ता स्यात्परतः स्वामिनो हि तत् ।

अष्टवर्षपर्यन्तं उत्पन्नफलस्याष्टमांशं भूस्वामिने दत्त्वा, अथ शिष्टं स्वयं कर्षको गृह्णीयादि-त्यर्थः । अतिकृच्छ्रकर्षणीयविषयमेतत् ।

खिलभञ्जनव्ययस्येयत्तावधारणार्थं भूकाठिन्यतारतम्यमाह **नारदः**

संवत्सरेणार्धखिलं खिलं स्याद्वत्सरैस्त्रिभिः ।
पञ्चवर्षावसन्नं तु क्षेत्रं स्यादटवीसमम् ॥

संवत्सरेण संवत्सरोपेक्ष्या अर्धखिलं ईषद् दुष्कर्षं भवति । खिलं दुष्कर्षम्, अटवी-सममत्यन्तदुष्कर्षमित्यर्थः ।

---

## अथ सामन्तसाक्ष्याद्यपराधविषयाणि

तत्र **कात्यायनः**

बहूनां तु गृहीतानां न सर्वे निर्णयं यदि ।
कुर्युर्भयाद्वा लोभाद्वा दण्ड्यास्तूत्तमसाहसम् ॥

गृहीतानां मेलितानाम् । दण्ड्या इत्यत्र प्रत्येकमिति शेषः, प्रत्येकमेव तेषां साक्षित्वात् ।

साक्षिवचनभेदेऽपि **स एव**

कीर्तिते यदि भेदः स्याद्दण्ड्यास्तूत्तमसाहसम् । इति ।

सामन्तानामनृतवादित्वे **नारदः**

अथ चेदनृतं ब्रूयुः सामन्ताः सीमनिर्णये ।
सर्वे पृथक् पृथग्दण्ड्या राज्ञा मध्यमसाहसम् ॥

अनृतं ब्रूयुः सीमालिङ्गानि वञ्चयित्वा ब्रूयुरित्यर्थः ।

**याज्ञवल्क्यः**

अनृते तु पृथग्दण्ड्या राज्ञा मध्यमसाहसम् ।

अज्ञानोक्तौ तु **कात्यायनः**

नाज्ञानेन हि मुच्यन्ते सामन्ता निर्णयं प्रति ।
अज्ञानोक्तौ दण्डयित्वा पुनः सीमां विचारयेत् ॥

अज्ञानोक्ताविति निर्णयाभावोपलक्षणार्थम् । तेन भेदेनोक्तावपि निर्णयाभावात् । तान् दण्डयित्वा अन्यैः सह पुनः सीमां विचारयेत् ।

तत्संसक्तादिवनगोचरान्तानामनृतवादित्वे तु **नारदः**

शेषाश्चेदनृतं ब्रूयुर्नियुक्ता भूमिकर्मणि ।
प्रत्येकं तु जघन्यास्ते विनेयाः पूर्वसाहसम् ॥
गणवृद्धादयस्त्वन्ये दण्डनीयाः पृथक् पृथक् ।
विनेयाः प्रथमेनैव साहसेनानृते स्थिताः ॥ इति ।

शेषाः सामन्तेभ्यो व्यतिरिक्तास्तत्ससक्तास्तेभ्यो जघन्याः । आदिशब्दाद्ग्रामनगर-मौलोद्धृतसीमाकर्षकवनगोचराः सगृहीताः ।

सीमाचंक्रमणकर्तृणामनृताभिधाने **मनुः**

यथोक्तेन नयन्तस्तु पूयन्ते सत्यसाक्षिणः ।
विपरीतं नयन्तस्तु दाप्यास्तु द्विशतं दमम् ॥

यथोक्तेन 'शापितास्ते गृहीत्वोर्वी'मित्यादिनोक्तमार्गक्रमेण नयन्तः सीमाचङ्क्रमणं कुर्वाणाः । इदं च साक्षिसामन्तादीनां दण्डविधानं सार्धमासाभ्यन्तरे साक्ष्यादीनां रोगाद्युत्पत्त्या प्रति-पादिनिर्दिष्टाधिगुणसाक्ष्यन्तरविरुद्धवचनत्वेन वा मृषाभाषित्वनिश्चये सति बोद्धव्यम् ।

अपराधान्तरविषये **याज्ञवल्क्यः**

मर्यादायाः प्रभेदे तु सीमातिक्रमणे तथा ।
क्षेत्रस्य हरणे दण्डा अधमोत्तममध्यमाः ॥

सीमालिङ्गविनाशे नाशकस्याधमो दण्डः । सीमामतिलङ्घ्य कर्षणे कर्षकस्योत्तमः ।

यत्तु

**सीमाभेत्तारमुत्तमसाहसं दण्डयित्वा पुनः सीमां कारयेत् ।**

इति विष्णुवचनम्, तत्र सीमामुल्लङ्घ्य कर्षन्तमित्यर्थोऽध्यवसेयः । सीमाभेदे पुनः कर्षणाकरणमेव पुनः सीमाकरणं यथा भवति तथा यतेतेति पुनः सीमां कारयेदित्यस्यार्थः । इदमुत्तमसाहसदण्डविधानमर्धसीमातिक्रमविषयम् ।

समस्तसीमातिक्रमे त्वाहतुः **शङ्खलिखितौ**

सीमातिक्रमे पणसहस्रद्वयम् । इति

दण्ड इति शेषः। अत्र दण्डाधिक्यात्सग्रामसीमाविषयतावसेया॥

**वृद्धमनुः**

स्थापिताश्चैव मर्यादा उभयोर्ग्रामयोः सदा।
अतिक्रामन्ति ये पापास्ते दण्ड्या द्विशतं दमम्॥

इदमप्यल्पसीमातिक्रमविषयं, दण्डाल्पत्वात्। यः पुनर्याज्ञवल्कीये सीमालिङ्गातिक्रमे प्रथमसाहस उक्तः स गृहसीमालिङ्गविषयः, दण्डस्य न्यूनत्वात्।

क्षेत्रसीमालिङ्गविनाशविषये तु अपराधाधिक्याद्दण्डाधिक्यमाहतुः **शङ्खलिखितौ**

क्षेत्रमर्यादाभेदे त्वष्टसहस्रम्। इति।

एवं ग्रामादिविषये दण्डाधिक्यमूह्यम्। उक्तविधिना दण्डयित्वा गृहादीनां पुनः सीमालिङ्गानि कारयेदिति चोद्यम्। यस्तु **याज्ञवल्कीये** क्षेत्रापहरणे मध्यमसाहसो दण्ड उक्तः स बलादपहरणविषयः, तस्याधिकत्वात्।

भयप्रदर्शनेनाज्ञानेन वाऽपहरणे **मनुः**

गृहं तडागमारामं क्षेत्रं वा भीषया हरन्।
शतानि पञ्च दण्ड्यः स्यादज्ञानाद् द्विशतो दमः॥

भीषया भयप्रदर्शनेन। यत्तु 'क्षेत्रोदकापहरणेऽष्टसहस्र'मिति **शङ्खलिखित**वचनम्। तद्बलात्कारेण सोदकशाल्यादिविशिष्टक्षेत्रापहरणविषयम्। एवमपह्रियमाणक्षेत्रादिभूयस्त्वापेक्षया दण्डभूयस्त्वमूह्यम्। एवं दण्डविधानानन्तरं उक्तविधिना सीमानिर्णयं विधाय सीमापत्रं लेखयेत्।

तथा च **स्मृत्यन्तरम्**

सीमाविवादे निर्णीते सीमापत्रं विधीयते। इति।

यस्तु संसरणादाववरोधादिकं करोति तस्य दण्डमाह **बृहस्पतिः**

यस्तत्र सङ्करं कुर्याद् वृक्षारोपणमेव वा।
कामात्पुरीषं कुर्याद्वा तस्य दण्डस्तु माषकः॥

सङ्करं संकीर्णत्वं प्रतिरोध इत्यर्थः। वृक्षपदं सस्यादेरुपलक्षकम्। यद्यपि 'पञ्चकृष्णलको माषो'ऽत्रापि ग्राह्यत्वेन प्रतिभाति तथापि दण्डस्यापराधानुसारित्वात्कार्षापणस्य विभागो माषः, मानव्यवहारस्य तत्रापि सत्त्वात्।

राजपथे पुरीषकर्तुर्दण्डाधिक्यमाह **मनुः**

समुत्सृजेद्राजमार्गे यस्त्वमेध्यमनापदि।
स द्वौ कार्षापणौ दण्ड्यो ह्यमेध्यं चाशु शोधयेत्॥

मार्गवैशिष्ट्यादत्राप्यपराधभूयस्त्वाभिसन्धानेन दण्डभूयस्त्वाभिधानमत्र **मनो**रभिमतमित्यवगन्तव्यम्। अनापदीत्यभिधानादापदि न दण्डाधिक्यम्।

यतः स एवाह

आपद्गतस्तथा वृद्धो गर्भिणी बाल एव वा ।
परिभाषणमर्हन्ति तच्च शोध्यमिति स्थितिः ॥

परिभाषणं धिग्दण्डम् ।

तडागादौ पुरीषकरणे कात्यायनः

तडागाद्यानि तीर्थानि योऽमेध्येन विनाशयेत् ।
अमेध्यं शोधयित्वा तु दण्डयेत्पूर्वसाहसम् ॥
दूषयेत्सर्वतीर्थानि स्थापितानि महात्मभिः ।
पुण्यानि पावनीयानि स दद्यात्पूर्वसाहसम् ॥

दूषयेत् कश्मलप्रक्षेपदुष्टवस्त्रादिक्षालनादिना विनाशयेत् ॥

इति क्षेत्रजविवादप्रकरणम्



इति श्रीमन्महीमण्डलाखण्डलश्रीनागमल्लात्मजविषमप्रतिज्ञापरिपूरणपरायण-
कलिकालकर्णप्रतापलङ्केश्वरशरणागतराजवज्रपञ्जरपरमवैष्णवरिपुगजसिंहे-
त्यादिनिखिलबिरुदराजीविराजमानमानोन्नतमहाराजाधिराजश्रीपृथ्वी-
चन्द्रदेवविरचिते धर्मतत्त्वकलानिधौ महानिबन्धे व्यवहार-
प्रकाशे संविद्व्यतिक्रम-क्रीतानुशय-विक्रीयासम्प्रदान-
क्षेत्रजविवादनिरूपणं नाम दशम उल्लासः ।



# प्रथमं परिशिष्टम्

## अथ व्यवहारप्रकाशप्रथमभागस्य श्लोकानुक्रमकोशः ॥

ल



व

## व्यवहारप्रकाशप्रथमभागोद्धृतग्रन्थकर्तॄणां नामकोशः